May 1916.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 221.

# वीरमित्रोदयः ।

राजनीतिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा

संशो [illegible] ।

[illegible] RODAYA,

RAJNITI PRAKÂSA,

BY

MAHÂMAHOPÂDHYÂYA PANDITA MITRA MISRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. VI.

FASCICULUS I-२

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.
AGENTS:-
OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.

*Price Rupee one.*

MOTILAL BANARSIDASS
Bungalow Road, Jawaharnagar,
P. B. 1586, DELHI-7.

*May* *1916.*

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 221.

# वीरमित्रोदयः ।

## राजनीतिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा

संशोधितः ।

# VÎRAMITRODAYA,

RAJNITI PRAKÂSÂ,

BY

MAHÂMAHOPÂDHYÂYA PANDITA MITRA MISRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. VI.

FASCICULUS १-२

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE, BENARES.

AGENTS:-

OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO; BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

*Price Rupee one.*

MOTILAL BANARSIDASS

Bungalow Road, Jawaharnagar,

P. B. 1586, DELHI-7.

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२२१

१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैः पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः [illegible] ८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ... ...

सम्प्रति मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २
(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १०
(३) श्लोकवार्त्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०
(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २
(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १
(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः (मीमांसा) २
(७) न्यायरत्नमाला—श्रीपार्थसारथिमिश्रविरचिता संपूर्णा (मीमांसा) ... २
(८) ब्रह्मसूत्रभाष्यम्—बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णम् । (वेदान्तः)
(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा
(१०) सिद्धित्रयम्—विशिष्टाद्वैतब्रह्मनिरूपणपरं श्रीभाष्यकृतां परमगुरुभिः श्री६श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णम् वेदान्तः
(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः)
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः । सम्पूर्णः (न्यायः) ... ... ... ...
(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् (मीमांसा) ...
(१४) न्यायसुधा (तन्त्रवार्त्तिकटीका) भट्टसोमेश्वरविरचिता । (मीमांसा)

# अथ वीरमित्रोदयस्य

## राजनीतिप्रकाशः ।

कोपाटोपनटत्सटोद्भटमटद्भ्रूभीषणभ्रूकुटि
भ्राम्यद्भैरवदृष्टि निर्भरनमद्वींकरोर्वीधरम् ।
गीर्वाणारिवपुर्विपाटविकटाभोगत्रुटद्धाटक-
ब्रह्माण्डोरुकटाहकोटि नृहरेरव्यादपूर्वं वपुः ॥ १ ॥
सटाग्रव्यग्रेन्दुस्रवदमृतविन्दुप्रतिवल-
न्महादैत्यारम्भस्फुरितगुरुसंरम्भरभसः ।
लिहन्नाशाचक्रं हुतवहशिखावद्रसनया
नृसिंहो रंहोभिर्दमयतु मदंहो मदकलम् ॥ २ ॥
संसारध्वंसिकंसप्रमुखसुररिपुप्रांशुवंशावतंस-
भ्रंशी वंशीधरो वः प्रचुरयतु चिरं शं स राधारिरंसी ॥
यच्चूडा रूढगूढस्मितमधुरमुखाम्भोजशोभां दिदृक्षु-
र्गुञ्जाभिः सानुरागालिकनिकटनटच्चन्द्रकव्यक्तचक्षुः ॥३॥
लीलाभ्रान्तिविसर्पदस्वरतया व्यग्रार्द्धकान्तं पद-
न्यासन्यञ्चदुदञ्चदद्रिवसुधाभोगीन्द्रकूर्माधिपम् ॥
फूत्कारस्फुरदुत्पतत्फणिकुलं रङ्गज्जटाताडन-
ध्मातव्योमगभीरदुन्दुभि नटन्नव्यात्स वो धूर्जटिः ॥ ४ ॥
कुम्भोद्भ्रान्तमधुव्रतावलिवलज्झङ्कारकोलाहलैः

शुण्डास्फालनविह्वलैः स्तुत इव व्यालैर्वियत्प्लाविभिः ॥
मज्जत्कुम्भमहावगाहनकृतारम्भो महाम्भोनिधौ
हेरम्बः कुरुतां कृताम्बरकरालम्बश्चिरं वः शिवम् ॥ ५ ॥

समन्तात्पश्यन्ती समसमयमेव त्रिभुवनं
त्रिभिर्नेत्रैर्दोर्भिर्दशभिरपि पान्ती दश दिशः ॥
दधाना पारीन्द्रोपरि चरणमेकं परपदा
हतारिर्वो हन्यान्महिषमथनी मोहमहिषम् ॥ ६ ॥
वामान् भिन्दन्नवामान् भुवमनुसुखयन् पूरयन्नर्थिकामान्
श्रीमान् भीमानुकारी बहलबलभरैर्मेदिनीमल्लनामा ॥
आसीदाशीविषेन्द्रश्रुतिधवलयशा भूपचक्रावतंसः
श्रीकाशीराजवंशे विधुरिव जलधौ सर्वभूसार्वभौमः ॥७॥
सङ्ग्रामग्रामकामो निरुपममहिमा सत्त्वविश्रामधाम
क्रामन्नेवारिचक्रं मिहिर इव तमो विक्रमोरुक्रमेण ॥
सारैर्मेरोरुदारैरपर इव गिरिर्मेदिनीमल्लनेन
प्रख्यातः क्षोणिचक्रे समजनि नृपतिर्मेदिनीमल्लनामा ॥ ८॥
निर्यद्भिस्तर्जयद्भिर्विधुमिव जगतीमर्ज्जुनाभैर्यशोभिः
सम्पूर्यावार्यवीर्यो विशिखवितरणैरर्ज्जुनो दुर्ज्जनानाम् ॥
साम्राज्योपार्जनश्रीरगणितगुणभूरर्जुनप्रांशुबाहु—
र्नाम्नाऽभूदर्जुनोऽस्मान्नरपतिरतुलो मेदिनीमल्लभूपात् ॥ ९॥
बुद्धिः शुद्धिमती क्षमा निरुपमा विद्याऽनवद्या मनो
गाम्भीर्यैकनिकेतनं वितरणं दीनार्त्तिनिर्दारणम् ॥
आसीदर्जुनभूपतेर्विदधतो विद्रावणं विद्विषां
भूमीनामवनं च कारणगुणात्कार्यं यशोऽप्यर्ज्जुनम् ॥१०॥
तस्मादाविरभूत्प्रभूतमहिमा भूमीपतेरर्जुनात्
सौजन्यैकनिधिर्गुणैरनवधिर्लावण्यवारां निधिः ॥

भिन्दन् दुर्जनमर्जयन् बहु यशः प्रौढप्रतापोदयै-
र्दुर्जेयो मलखाननामनिखिलक्ष्मामण्डलाखण्डलः ॥ ११ ॥
यस्मिन् शासति नीतिभिः क्षितिमिमां निर्वैरमासीज्जगत्
पारीन्द्रेण समं करीन्द्ररभसारम्भोऽपि सम्भावितः ॥
श्येनः क्रीडति कौतुकी स्म विहगैश्चिक्रीड नक्रैर्झषः
किं वान्यद्गहनेऽभवत्सह मृगैः शार्दूलविक्रीडितम् ॥ १२॥

हिमविशदयशोऽभिशोभिताशो
महिमतिरोहितवारिधिप्रभावः ॥
समजनि मलखानतः प्रतापै-
स्त्रिजगति रुद्र इव प्रतापरुद्रः ॥ १३ ॥

शुचि धनमर्थिनि सहसा यशसा सममानने गुणो जगतः ।
पुत्रे भूरभिदभ्रे चेतो रुद्रे प्रतापरुद्रेण ॥ १४ ॥
जातः प्रतापरुद्रात्ससमुद्रां पालयन्नवनीम् ।
कृतरिपुकाननदाहो मधुकरसाहो महीपतिः शुशुभे ॥१५॥
पृथुः पुण्याभोगैर्विहिताहितयोगैरनुदय-
त्खलायोगैर्योगैः कृतसुकृतियोगैरपि गुरुः ॥
भुजस्तम्भालम्बालसशयितविश्वम्भरतया
बभौ प्रौढोत्साहः स मधुकरसाहः क्षितिपतिः ॥ १६ ॥
प्रजागणरुजापहो द्युतिमहोदयाविष्कृतः
सुधांशुरिव मांसलो रसभरैः सभारञ्जनः ॥
प्रदीप्तकुमुदावलिर्द्विजपतिश्च नक्षत्रपो
नृपो जयति सत्कृपो मधुकरः कृतारित्रपः ॥ १७ ॥
विन्यस्य वीरसिंहे भूपतिसिंहे महीभारम् ।
ज्ञानानलमलदाहो मधुकरसाहो दिवं भेजे ॥ १८ ॥
अन्तर्गम्भीरताऽन्यूकृतसलिलनिधिर्लालिताशेषबन्धु-

बुन्देलानन्दसिन्धुः सुललितललनालोचनेन्दीवरेन्दुः ॥
भ्रूभङ्गीलेशभङ्गीकृतरिपुनिवहो नृत्यसङ्गीतरङ्गी
सन्मातङ्गी तुरङ्गी धरणिपतिरभूद्वीरसिंहो नृसिंहः ॥१९॥
अमुष्य प्रस्थाने सति सपदि नानेभनिवहै-
रिहैकोऽपि द्वेषी न खलु रणरोपी समजनि ॥
परं तस्थौ दुःस्थो गहनकुहरस्थोऽपि भयतः
क्षिपन्नुच्चैर्दिक्षु भ्रमितचकितं चक्षुरभितः ॥ २० ॥
दानं कल्पमहीरुहोपरि यशः क्षीरोदनीरोपरि
प्रज्ञा शक्रपुरोहितोपरि महासारोऽपि मेरूपरि ॥
दावाग्नेरुपरि प्रतापगरिमा कामोपरि श्रीरभू-
त्सिंहातिक्रमवीरसिंहनृपतेः किं किं न कस्योपरि॥ २१ ॥
दानैरर्थिनमर्थनाविरहिणं प्रत्यर्थिनं च क्षणा-
त्कुर्वाणे सति वीरसिंहनिखिलक्ष्मामण्डलाखण्डले ॥
कामं चेतसि कामधेनुरतनोत्कल्पद्रुमः कल्पितं
मोघीभूतजनिः समाश्रितखनिश्चिन्तां च चिन्तामणिः ॥२२॥
भ्रामंभ्राममसम्भ्रमं त्रिजगतीचक्राणि चक्रे ऽचिरा-
च्चारं शीलितविष्णुपादपदवी ब्रह्माण्डभाण्डोपरि ॥
ब्रह्माण्डं निजमण्डमण्डलमिवाच्छायैव सैवाधुना
विश्वेषामपि यस्य भास्वरयशोहंसी वतंसीयति ॥ २३ ॥
जलकणिकामिव जलधिं कणमिव कनकाचलं मनुते ।
नृपसिंहवीरसिंहो वितरणरंहो यदा तनुते ॥ २४ ॥
यदा भवति कुण्डलीकृतमहाधनुर्मण्डल-
स्तदा नयनताण्डवत्रुटितखाण्डवः पाण्डवः ॥
मनो वितरणोत्सुकं वहति वीरसिंहो यदा
तदा पुनरुदारधीरयमवर्णि कर्णो जनैः ॥ २५ ॥

शौर्यौदार्यगभीरताधृतिदयादानादिनानागुणा-
नुर्वीदुर्वहभारवत्यहिपतिस्पर्धालदोःशालिनि ॥
संयोऽप्येव जुहारसिंहधरणीधौरेयचूडामणौ
मज्जन् ब्रह्मणि वीरसिंहसुकृती तस्थौ स्वयं निर्गुणः ॥२६॥
नद्यः स्वादुजला द्रुमाश्च सुफला भूरुर्वरा भूसुरा
वेदध्वानविधूयमानदुरिता लोका विशोका बभुः ॥
राजन्नीतिनिरीतिरीति पितरीवोर्वीमिमां शासति
श्रीमद्वीरजुहारसिंहनृपतौ भ्रूभङ्गभग्नद्विषि ॥ २७ ॥
सङ्ग्रामोत्कटताण्डवोद्भटभटैरारब्धहेलाहठै-
श्चण्डाडम्बरपूरिताम्बरतटक्षीराब्धिगोभ्रावटैः ॥
भूभृत्सिंहजुहारसिंहधरणीजानेः प्रयाणे रणे
शौर्यौदार्यधनोऽपि को नु धरणीचक्रे न चक्रे भयम्॥२८॥
तावद्वीरगभीरहुङ्कृतिरवस्तावद्गजाडम्बर-
स्तावत्तुङ्गतुरङ्गरिङ्गणचमत्कारश्चमूनामपि ॥
तावत्तोयमहामहीभृदटवीदुर्गग्रहो विद्विषां
यावन्नैव जुहारसिंहनृपतिर्युद्धाय बद्धोत्सवः ॥ २९ ॥
अयं यदि महामना वितरणाय धत्ते धियं
भियं कनकभूधरोऽञ्चति ह्रियं च कर्णोऽटति ॥
दधीचिरपचीयते बलिरलीकरूपायते-
तदाऽतिमलिनायते स किल कल्पभूमीरुहः ॥ ३० ॥
प्रासादागतडागनागमणिभूदानादिनानातपः-
प्रागल्भ्येन महेन्द्रचन्द्रवरुणब्रह्मेशविष्णुस्थली ॥
प्राचण्ड्येन जिता मिता वसुमती कोदण्डदोर्दण्डयो-
र्जागर्तीति जुहारसिंहनृपतेः कुत्र प्रतापो न वा ॥ ३१ ॥
ब्रह्माभूच्चतुराननः स्मरहरः पञ्चाननः षण्मुखः

स्कन्दो भूपजुहारसिंहयशसो गानोत्सवेऽत्युत्सुकः ॥
तस्याभोगमुदीक्ष्य भूधरनभोनद्यस्त्रिलोकी दिशः
सप्तद्वीपमयी मही च विधिना विज्ञेन निर्वाहिताः ॥ ३२ ॥
तुङ्गत्वादनवाप्य दैवततरोः पुष्पाणि सर्वाः समं
श्रीमद्वीरजुहारसिंहनृपतेर्दानं समानं जगुः ॥
व्रीडादुर्वहभारनिर्भरनमद्ग्रीवे तु देवद्रुमे
श्लाघन्ते सुलभायमानकुसुमास्तं भूरि देवस्त्रियः ॥ ३३ ॥
भीमो यः सहदेव एव पृतनादुर्द्धर्षपार्श्वो लसन्
श्रीभूमीनकुलः सदाऽर्जुनमहाख्यातिः क्षमामण्डले ॥
कर्णश्रीः कृतवर्मभीष्मघटनाशौटीर्यदुर्योधनो
रोषादेष युधि स्थिरो यदि भवेत्कः स्यादमुष्याग्रतः ॥३४॥
सत्कीर्त्तिग्रामदामाभरणभृतजगद्विक्रमादित्यनामा
धाम्नो भूम्ना महिम्ना विघटितरिपुणा विक्रमोपक्रमेण ॥
शुभ्रांशुः पीवरांसः पृथुभुजपरिघस्तस्य वंशावतंसो
विश्वोदञ्चत्प्रशंसो गुणिगणहृदयानन्दनो नन्दनोऽभूत्॥३५॥
आशापूर्त्तिं प्रकुर्वन् करवितरणतः पद्मिनीप्राणबन्धुः
प्रोद्यद्दिव्याम्बरश्रीः स्फुटमहिमरुचिः सर्वदा ध्वस्तदोषः ॥
जम्भारातेरिहोच्चैरचलसमुदयात्सुप्रभातप्रकाशी
पुत्रो राज्ञः पवित्रो रचयति सुदिनं विक्रमादित्य एव ॥३६॥
सार्थीकुर्वन्निरर्थीकृतसुरविटपी चार्थिसार्थं निजार्थै-
र्व्यर्थीभूतारिपृथ्वीपतिरमरगुरुस्पर्द्धिवर्द्धिष्णुबुद्धिः ॥
मानैर्यानादिदानैर्बहुविधगुणिभिर्गीयते यः सभायां
भ्रातर्जातः स भूयः सुकविकुलमुदे विक्रमादित्य एव ॥३७॥
दानं दीनमनोरथावधि रणारम्भोऽरिनाशावधि
क्रोधो वागवधि प्रतापयशसोः पन्था दिगन्तावधि ॥

दाक्षिण्यं क्षितिरक्षणावधि हरौ भक्तिश्च जीवावधि
व्यालुप्तावधि वीरविक्रमरवेः श्रेयः परं वर्द्धते ॥ ३८ ॥
हेमाद्रेः श्रियमन्यथैव कुरुते चक्रे च गौरीं तनुं
कैलासोपरि शोभते पटयति स्पष्टं च दिङ्मण्डलम् ॥
भोगीन्द्रं न दधे श्रुतौ वत जटागूढां च गङ्गां व्यधा-
ल्लोकानामयमीश्वरोऽस्य यशसस्त्वैश्वर्यमुज्जृम्भते ॥३९॥
श्रीगोपाचलमौलिमण्डलमणिः श्रीदूरवारान्वये
श्रीहंसोदयहंसपण्डित इति ख्यातो द्विजाधीश्वरः ॥
यं लक्ष्मीश्च सरस्वती च विगतद्वन्द्वं चिरं भेजतु-
र्भोक्तारं रभसात्समानमुभयोः सान्नाढ्यमाढ्यं गुणैः ॥४०॥
पट्सु दिक्षु विदिक्षु कुर्वतीनां नटलीलां स्फुटकीर्त्तिनर्त्तकीनाम्॥
स्फुरदध्वरधूमधोरणीह च्युतवेणीति जनैरमानि यस्य ॥४१॥
ततोऽनल इवारणेरतुलधामभूर्भूभुजां
शिरोमणिरुरोमणिर्धरणिनामवामभ्रुवः ॥
रणी बहुगुणी धनी भुवि वनीपकश्रीखनी
रमारमणमिश्रणी परशुराममिश्रोऽजनि ॥ ४२ ॥
येनागत्य पुरा पुरारिनगरे विद्याऽनवद्यार्ज्जिता
श्रीचण्डीश्वरमग्निहोत्रितिलकं लब्ध्वा गरीयोगुरुम् ॥
शुद्धा सैव महोद्यमेन बहुधा भान्ती भवन्ती स्थिरा
तद्वंश्येषु कियन्न कल्पलतिकेवाद्यापि सूते फलम् ॥ ४३ ॥

आस्वाराविन्दमनुपास्य गुरोरपास्य
लास्यं चतुर्मुखमुखेषु सरस्वतीह ॥
सालङ्कृतिश्च सरसा च गुणान्विता च
यस्यातनोति रसनोपरि ताण्डवानि ॥ ४४ ॥

अङ्के लोमलतेव सीमनि दशोरेकेव रेखाञ्जनी

कस्तूरीमकरीव भालफलके धारेव मूर्ध्न्यालकी ॥
ऊर्द्ध्वं भृङ्गपरम्परेव कवरी सौरभ्यकोभाकुला
यस्यैवाध्वरधूमधोरणिरभूदाशाङ्कुरङ्गीदृशः ॥ ४५ ॥
सुभासुरयशोनिधेः सुनिरवद्यविद्यानिधेः
सुचारुकवितानिधेः स्मृतिनिधेः श्रुतिश्रीनिधेः ॥
अयं सुकृतगौवात्परशुराममिश्राद्गुणै-
रनूनगरिमा पितुर्जगति मित्रमिश्रोऽजनि ॥ ४६ ॥
धर्मार्थैकनिकेतनं विधिमयं कर्मावनीदर्शनं
स्मृत्यम्भोजमहोदयं श्रुतिमयं श्रीवीरमित्रोदयम् ॥
द्राक्सिद्धीकृतकार्यसिद्धिशतया श्रीवीरसिंहाज्ञया
तेने विश्वमुदे पुरे पुरभिदः श्रीमित्रमिश्रः कृती ॥ ४७ ॥
आज्ञप्तो वीरसिंहक्षितिपतितिलकेनादरान्मित्रमिश्रः
सङ्ख्यावान् ख्यातकीर्त्तिर्विविधबुधजनग्रामसन्तोषकारी ॥
प्राचां वाचां प्रपञ्चैः परिकलितमहाराजधर्मोदवान्तः-
सारं निष्कृष्य बुद्ध्या रचयति रुचिरं राजनीतिप्रकाशम्॥४८॥

राजनीतिप्रकाशे प्राग्राजशब्दार्थनिर्णयः ।
राजप्रशंसा तदनु प्रोक्ता श्रोत्रसुखावहा ॥
राज्याभिषेके कालश्च निषिद्धो विहितस्तथा ।
राज्याधिकारी तत्पश्चादभिषेकविधिः स्मृतः ॥
ऐन्द्री शान्तिः प्रयोगश्च अभिषेकस्य कीर्त्तितः ।
अथाभिषेकमन्त्रेण प्रतिपाद्यैस्तु दैवतैः ॥
कीर्त्तितैर्लभ्यते यत्तु फलं तदनुकीर्त्तितम् ।
ऐतरेयिब्राह्मणोक्तं राज्ये चैवाभिषेचनम् ॥
पुष्पाभिषेको जन्मर्क्षेऽभिषेकस्तदनन्तरम् ।

लोहाभिसारिकं कर्म गवोत्सर्गस्ततः परम् ।
वसोर्धाराऽथ शत्रूणां नाशकः कृत्तिकाप्लवः ॥
राजिकासर्षपाभ्यां च होम उक्तोऽरिनाशनः ।
विष्णुधर्मोत्तरप्रोक्तं तत आथर्वणोदितम् ॥
घृतकम्बलमुक्त्वा च प्रकीर्णकमुदाहृतम् ।
राजनीतिप्रकाशाख्ये ग्रन्थेऽस्मिन् विदुषां मुदे ॥
श्रीमित्रमिश्रविदुषा क्रमेणैवं निरूपितम् । इति ।

तत्र महाभारते,

युधिष्ठिर उवाच ।
श्रोतुमिच्छामि भगवन् विस्तरेण महामुने ।
राजधर्मान् द्विजश्रेष्ठ चातुर्वर्ण्यस्य चाखिलान् ॥
इत्युपक्रम्य राजधर्मा उक्ताः ।

अग्निपुराणेऽपि,

अग्निरुवाच ।
पुष्करेण च रामाय राजधर्मं हि पृच्छते ।
यदादौ कथितं तद्वद्विशिष्टं कथयामि ते ॥
पुष्कर उवाच ।
राजधर्मं प्रवक्ष्यामि स्याद्राजा राजधर्मतः ।

मनुस्मृतावपि,

राजधर्मान् प्रवक्ष्यामि यथावृत्तो भवेन्नृपः ।
सम्भवश्च यथा तस्य सिद्धिश्च परमा यथा ॥

इत्युपक्रम्य तत्र तत्र राजधर्मा उक्ताः । तत्र राजशब्दार्थस्तावद्विचार्यते । किमयं राजशब्दो यस्मिन् कस्मिंश्चित्प्रजापालके वर्त्तते, उत क्षत्रियजातौ, किंवा अभिषिक्तक्षत्रियजातौ वर्त्तत इति । तत्र अवेष्ट्यधिकरणे "राजा राजसूयेन स्वाराज्यकामो यजेत"

इत्यत्र पूर्वपक्षे लिखितम्—

राज्यस्य कर्त्ता राजेति सर्वलोकेषु गीयते ।
महाविषयता चैवं शास्त्रस्यापि भविष्यति ॥

तस्माद्ब्राह्मणादयो राज्यं कुर्वाणा राजान इति । राज्यं तु जनपदपरिपालनम् । लोकप्रयोग एव शब्दार्थावधारणे प्रमाणम् । लोके च ब्राह्मणादिषु राज्यकर्तृषु राजशब्दो वर्त्तते ।

यास्कोऽपि, राजा राजतेरिति ब्रुवन् यौगिकं राजशब्दमीश्वरवचनमेवाभ्युपैति । राजनोत्कर्षश्च प्रजापरिपालनादिरेव ।

वेदेऽपि, "सोमोऽस्माकं ब्राह्मणानां राजा" "यो राजा चर्षणीनां" "सोमो वै राजा गन्धर्वेषु"

इत्यादावपि ईश्वरवचन एव राजशब्दः प्रतीयते ।

कोषेऽपि,

राजा तु प्रणताशेषसामन्तः स्यात् ।

तथा,

अथ राजकम् ।

राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् ॥ इति ।

अत्र यदि राजन्यशब्दवद्राजशब्दोऽपि क्षत्रियवचन एव स्यात्तदा राजकं राजन्यकं च क्षत्रियगण इत्येव ब्रूयान्नतु नृपतिगणे इति पृथगुपाददीत । तस्माद्राजशब्दो नृपतीनां वाचक इति केचित् ।

अपरे त्वाहुः । राजशब्दः क्षत्रियजातिवचनः । मन्वादयो हि राजधर्मान् प्रवक्ष्यामीत्युपक्रम्य जनपदपरिपालनरूपं राज्यं क्षत्रियस्यैव स्मरन्ति । तत्र—

मनुः,

ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।

सर्वस्यास्य यथान्यायं कर्त्तव्यं परिरक्षणम् ॥

ब्रह्म वेदस्तत्कृतः श्रवणाध्ययनजन्यो ग्रहणाववोधलक्षणः संस्कारो ब्राह्मः। यद्वा ब्रह्म वेदस्तत्प्राप्त्यर्थं उपनयनादिः संस्कारो ब्राह्मः। यथाविधि यथाशास्त्रम्। एतच्च प्राप्तेनेत्यनेनान्वितम्। यथान्यायं वक्ष्यमाणदण्डप्रणयनशास्त्रमनतिक्रम्येत्यर्थः। परिरक्षणं दुर्वलानां वलवद्भिरनभिभवः। अनेन क्षत्रिय एव मुख्यो राज्याधिकारीति दर्शितम्। अत एव क्षत्रियस्य क्षितिरक्षाजीवनार्थं शस्त्रास्त्रभृत्त्वं चोक्तम्—

मार्कण्डेयपुराणे,

दानमध्ययनं यज्ञः क्षत्रियस्याप्ययं त्रिधा।
धर्मः प्रोक्तः क्षिते रक्षा शस्त्राजीवोऽस्य जीविका॥

जीविका कराद्यादानद्वारा।

तथा याज्ञवल्क्यः,

प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्। इति।

प्रधानं धर्मार्थं वृत्त्यर्थं च।

पाणिनिरपि, राज्ञः कर्मणि ष्यञं विदधाति—"गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति "पत्यन्तपुरोहितादिभ्यो यक्" इति यकं वा। तेन राज्ञः क्षत्रियस्य कर्म राज्यमिति मन्वाद्युक्तान्वयत्वात्सिद्धं भवति।

तथा, "राजश्वशुराद्यत्" "राज्ञोऽपत्ये जातौ" इति सूत्रवार्त्तिकाभ्यां राजशब्दः क्षत्रियवचनोऽवसीयते। तन्निष्पन्नराजन्यशब्दस्य क्षत्रियपर्यायेषु पाठात्। जातिश्चेह क्षत्रियजातिर्गृह्यते राज्ञः क्षत्रियापत्ये यत्, स च जातिग्रहणात् वैश्यापत्ये निवार्यते।

तथा, "राजानमभिषेचयेत्" इत्यत्राभिषेकोऽपि क्षत्रियस्यैव विज्ञायते। दृष्टं हि राजत्वमुद्दिश्याभिषेको विधीयते। तेन राजानं

सन्तमभिषेकेण संस्कुर्यात् । न त्वदृष्टं यूपत्वं "यूपं तक्षति" इत्यत्र यथा विधीयते तक्षणेन यूपं कुर्यादिति तद्वत् अभिषेकेण राजानं कुर्यादिति । यूपशब्दस्यालौकिकत्वात् । राजशब्दस्य तु क्षत्रियवचनत्वेन प्रसिद्धत्वात् । राजधर्मानित्युपक्रम्य—

क्षत्रियस्य परो धर्मः प्रजानां परिपालनम् ।
क्षत्रियस्यापराधेन ब्राह्मणः सीदति क्षुधा ॥
वेदाभ्यासो हि विप्रस्य क्षत्रियस्याभिरक्षणम् ।
क्षत्रियाय ददौ राज्यम्—

इत्याद्युपसंहारस्वरसाच्च क्षत्रियजातावेव राजशब्दः। अत एव—

अनेकार्थकोषोऽपि,

राजा शशाङ्के क्षत्रिये नृपे । इति ।

राज्यकर्त्तरि च वर्णान्तरे लाक्षणिकः। ननु ब्राह्मणस्य कथं राज्यकर्तृत्वम् ? । उच्यते ।

अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ।
जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ॥

इति मनुवचनात् । वस्तुतस्त्वभिषेकादिगुणयुक्तस्य वक्ष्यमाणधर्माः । तथा च—

मत्स्यपुराणे,

मत्स्यं प्रति मनुरुवाच ।
राज्ञोऽभिषिक्तमात्रस्य किं नु कृत्यतमं भवेत् ।
एतन्मे सर्वमाचक्ष्व सम्यग्वेत्ति यतो भवान् ॥ इति ।

अत्र मात्रपदेन तमपा च अभिषेकानन्तरमेव प्रजापालनं तदङ्गसम्पत्तिश्च सम्पादनीयेति गम्यते । तदुक्तम्—

तत्रैव,

अभिषेकार्द्रशिरसा राज्ञा राज्यावलोकिना ।

सहायवरणं कार्यं तत्र राज्यं प्रतिष्ठितम् ॥

सहाया अमात्यादयः । मेधातिथिस्तु राजशब्दश्च नेह क्षत्रियजातिवचनः । किं तर्हि, अभिषेकाधिपत्यादिगुणयोगिनि पुरुषे वर्तते । उल्लूकभट्टोऽपि राजशब्दो नात्र क्षत्रियजातिवचनः किं त्वभिषिक्तजनपदपरिपालनकर्तृवचन इति ।

राजा सर्वस्येष्टे ब्राह्मणवर्जमिति गौतमव्याख्याने हरदत्तोऽपि राजा अभिषिक्तः क्षत्रिय इति ।

विज्ञानेश्वरोऽपि राजधर्मादावाह—साधारणान् गृहस्थधर्मानुक्त्वा इदानीं राज्याभिषेकादिगुणयुक्तस्य गृहस्थस्य विशेषधर्मानाहेति ।

एष्वपि पक्षेषु "राजधर्मान् प्रवक्ष्यामि" इत्यादिराजधर्मप्रतिपादकवचनेषु राजशब्दो जनपदैश्वर्यवन्नृपतिं लक्षणया प्रतिपादयतीति पक्षः साधुः । उक्तयुक्त्या क्षत्रियसामान्यवाचित्वात् । तथा च—

वृहत्पराशरः,

अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया । इति ।

तथा विज्ञानेश्वरोऽपि, अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परो धर्मः ।

तथापि नृपग्रहणसमभिव्याहारादनभिषिक्तेऽपि जनपदैश्वर्यवति लोकप्रसिद्ध्या राजशब्दो वर्त्तते ।

तथा, यद्यपि राजानमधिकृत्यायं राजधर्मकलाप उक्तस्तथापि वर्णान्तरस्यापि कियन्मण्डलादिपरिपालनाधिकृतस्यायं राजधर्मो वेदितव्यः । " राजधर्मान् प्रवक्ष्यामि " " यथावृत्तो भवेन्नृप " इति पृथक् नृपग्रहणात्करग्रहणस्य रक्षार्थत्वाच्च रक्षणस्य दण्डप्रणयनायत्तत्वादिति ।

तथा, नृप इति न क्षत्रियमात्रस्यायं धर्मः किन्तु प्रजापालनेऽधिकृतस्यान्यस्यापि । तदेवमुक्तदिशा वक्ष्यमाणवैदिकाभिषेकानधिकृतस्य पौराणोऽमन्त्रको वाऽभिषेको विधेयः। तथा चाभिषेकार्द्रशिरसेत्यादि सङ्गच्छते ।

अपरार्कस्तु—प्रजापालनादि क्षत्रियस्य राज्यं कुर्वतो विहितम् । यदा पुनरक्षत्रियोऽपि क्षत्रियकार्यं करोति तेनाप्येतत्सर्वमनुष्ठेयम् । तत्कार्यापत्त्या तद्धर्मलाभात् इति वदन् प्रजापालनादिविधिषु राजशब्दोऽभिषिक्तक्षत्रियवचन इति मन्यते । तत्तु पूर्वोक्तयुक्तिनिचयबलादयुक्तम् ।

तदेवं राजधर्मान् प्रवक्ष्यामीत्यत्र राजशब्दः प्रजापालनाधिकृतपरो, धर्मशब्दः कर्त्तव्यतावचनः यद्राज्ञा कर्त्तव्यं दृष्टादृष्टार्थरूपं पाड्गुण्याद्यग्निहोत्रादि तद्वक्ष्यामि । तत्र प्राधान्येनासाधारणं दृष्टार्थमुपदिश्यते । अदृष्टार्थस्य साधारणधर्मेपूक्तत्वात् । अत एवोक्तम्—

मनुव्याख्यायाम्, "साधारणं वेदोक्तसंस्कारं प्राप्यासाधारणं प्रजापालनादि कर्त्तव्यम्" इति। "स यथावृत्तो यथाचारो भवेत् तानाचारान्, यथा च तस्य सम्भवः राजानमसृजत्प्रभुरित्यादिना उत्पत्तिस्तम्, यथा च तस्योत्कृष्टा ऐकाधिपत्यलक्षणा सिद्धिस्तत्सर्वं वक्ष्यामि" इति च ।

अथ राजप्रशंसा ।

तत्र मनुः,

अराजके हि लोकेऽस्मिन् सर्वतोऽभिद्रुते भयात् ।
रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ॥

अराजके राजरहिते । सर्वतः पञ्चम्यन्तात्तसिः सर्वस्माद्बलवतः । अभिद्रुते पीडिते । अस्य लोकस्य । प्रभुर्ब्रह्मा ।

विद्रुत इति क्वचित्पाठः। विद्रुते धर्मात्प्रचलिते। सप्तम्यन्तात्त-सिः। चक्षुर्धर्मस्य सर्वस्येति मेधातिथौ पाठः। तदा भयादधर्म-भयात् धर्मस्य चक्षुर्द्रष्टारं प्रवर्त्तकमितियावत्। राजा धर्मस्य कारणमितिवचनात्।

इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः॥

अनिलो वायुः। वित्तेशः कुवेरः। मात्रा अंशान्। निर्हृत्य निष्कास्य। शाश्वतीः सारभूताः स्थिरा वा। तथा—

बृहत्पराशरोऽपि,

सुत्रामानलवायूनां यमस्येन्दोर्विवस्वतः।
वारिवित्तेशयोर्ब्रह्मा मात्राभ्यो निर्ममे नृपम्॥ इति।

तत्रैवेशानमात्राप्यधिकोक्ता।

इन्द्राग्नियमवित्तेशवारीशमातरिश्वनाम्।
शीतांश्वीशानमात्राश्च ब्रह्मादायासृजन्नृपम्॥ इति।

मनुः

यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः।
तस्मादतिभवत्येष सर्वभूतानि तेजसा॥

यस्मादेषां देवश्रेष्ठानामिन्द्रादीनां मात्राभ्योंऽशसमुदायेभ्यों-ऽशान् सारभूतान्निर्हृत्य निर्मित उत्पादित इति तेजसा सर्वभूता-न्यतिशेते सर्वोत्कृष्टो भवतीत्यर्थः। अथ वा इन्द्रानिलेत्यस्यारा-जके हीत्यनेन सम्बन्धः। मात्रा निर्हृत्य राजानमसृजत् इत्य-न्वयः। यस्मादेषामित्यत्र मात्राभिरिति वा पाठः।

तपत्यादित्यवच्चैव चक्षूंपि च मनांसि च।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम्॥

अयं स्वतेजसा पश्यतां सूर्य इव चक्षूंपि मनांसि च तापयति।

तपिरन्तर्भावितण्यर्थः। दुर्निरीक्षमुखत्वादेवमुच्यते। तदाह—न चैनमिति। एनं राजानं पृथिव्यां कश्चिदप्याभिमुख्येन वीक्षितुं न क्षमते। अत्र मेधातिथिः—"ब्राह्मणा जात्युत्कृष्टा ब्रह्मवर्चस्विनोऽपि नैनमभिमुखं वीक्षितुं शक्नुवन्ति। तदुक्तम्—

गौतमेन, तमुपर्यासीनमधस्तादुपासीरन्" इति व्याचख्यौ। तदयुक्तम्। अन्ये ब्राह्मणेभ्य इति वाक्यशेषविरोधात्। तथा च—

गौतमः, तमुपर्यासीनमधस्तादुपासीरन्नन्ये ब्राह्मणेभ्यस्तेऽप्येनं मन्येरन्निति।

तं राजानम् उपर्यासीनं सिंहासनस्थितम् अधस्तात् भूमावेव उपासीरन् अन्ये ब्राह्मणेभ्यः ब्राह्मणातिरिक्ताः। ब्राह्मणास्त्वाशीर्वादादिभिरभिपूजयेयुः। वस्तुतस्तु तमुपर्यासीनमित्यस्य विधिरूपत्वात् भिन्नविषयत्वाच्च "न चैनं भुवि शक्नोति" इत्यस्य सम्मतिरूपत्वमेवायुक्तम्। दृष्टेनापि दोषेण राज्ञोऽवज्ञा न युज्यते इत्येतन्निषेधार्थवादत्वात्पूर्वोक्तश्लोकानाम्। इन्द्रादिमात्रा निर्हृत्य कृतत्वात् तस्यापि तद्रूपतामाह—

सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट्।
स कुवेरः स वरुणः स महेन्द्रः प्रभावतः॥

धर्मराट् यमः। अग्न्याद्यंशसम्भवत्वात्तत्कार्यकारित्वाच्च ताद्रूप्यम्। प्रभावोऽलौकिकी शक्तिः। ततश्च—

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति॥

एतेन देवतावमानने यो दोषः स राजावज्ञायामित्यदृष्टदोष उक्तः। इदानीं दृष्टदोषमाह—

एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।
कुलं दहति राजाग्निः सपशुद्रव्यसञ्चयम् ॥

योऽग्नेरतिसमीपमनवहितः समुपसर्पति तमेकमेवाग्निर्दहति न तत्पुत्रादिकमिति । अन्यैस्तु दुःखेन मरणाद्युद्यतम् अग्निसमीपगामिनमिति व्याख्यातम् । एतद्व्याख्याद्वितयादपि दुरुपसर्पिणं स्वापराधं ज्ञात्वापि बलात्तत्सन्निधौ प्रवृत्तमग्निरेकमेव दहति तम्, अन्यायपथगामिनं ज्ञात्वा क्रुद्धो राजा तं तदीयकुलं च पुत्रभ्रात्रादिरूपं पशुभिर्धनसञ्चयैश्च सहितं नाशयतीति व्याख्यानं युक्तम् । एवमेकविषयतापि लभ्यते ।

कार्याण्यवेक्ष्य शक्तिं च देशकालौ च तत्त्वतः ।
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनः पुनः ॥

कार्यं सोऽवेक्ष्येति क्वचित्पाठः । कार्यम् अनुग्रहनिग्रहादियोग्यताम्, शक्तिं बलम्, देशं दूरनिकटादिकम्, कालं सुभिक्षदुर्भिक्षादिमवेक्ष्यात्मानं विश्वरूपं नानारूपं करोति । क्षणे तुष्टः क्षणे रुष्टः । अशक्तौ क्षान्तः शक्तौ उन्मूलकः । स्वकार्यानुरोधेन शत्रुर्मित्र उदासीनो वा भवति । अत एव—

कस्य राजा भवेन्मित्रं कानि मित्राणि राजनि ।
राजा मित्रं केन दृष्टं श्रुतं वा ।

इत्युक्तम् । तेन मैत्र्यादिनापि नावमन्तव्यः ।

यस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥

श्रीकामेन श्रीप्राप्त्यै शत्रुमता शत्रुहननाय जीवितार्थिना जीवस्थित्यै राजा सेव्यः । अत्र मेधातिथ्यादयः—पद्माशब्दः श्रीपर्यायोऽपि महत्त्वप्रतिपादनाय, अर्थाद्वैयर्थ्यं पद्माशब्दस्य । वस्तुतस्तु पद्मा लक्ष्मीः, श्रीः शरीरशोभा । तथा च—"श्रीश्च ते

लक्ष्मीश्च पत्न्यौ" इत्यत्र व्याख्यातम्—श्रीः शरीरशोभा लक्ष्मीः प्रसिद्धेति। यद्वा प्रसादे पद्मा, पराक्रमे श्रीर्विजयश्च। दिक्पालरूपत्वात्तस्य तत्कार्यकारित्वमाह—

स एव,

इन्द्रस्यार्कस्य वातस्य यमस्य वरुणस्य च।
सोमस्याग्नेः पृथिव्याश्च तेजोवृत्तं नृपश्चरेत्॥

तेजोवृत्तम् इन्द्राद्यंशसदृशमाचरणम्।

वार्षिकांश्चतुरो मासान् यथेन्द्रोऽभिप्रवर्षति।
तथाऽभिवर्षेत्स्वराष्ट्रं कामैरिन्द्रव्रतं चरन्॥

चतुरः श्रावणादीन्।

अष्टौ मासान् यथाऽऽदित्यस्तोयं हरति रश्मिभिः।
तथा हरेत्करं राष्ट्रात्सम्यगर्कव्रतं हि तत्॥

अष्टौ मार्गशीर्षादीन्।

प्रविश्य सर्वभूतानि यथा चरति मारुतः।
तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम्॥

यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति।
तथा राज्ञा नियन्तव्यः सर्वस्तद्धि यमव्रतम्॥

वरुणेन यथा पाशैर्बद्ध एव हि दृश्यते।
तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम्॥

परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः।
तथा प्रकृतयो यस्मिन् स चन्द्रव्रतिको नृपः॥

प्रतापयुक्तस्तेजस्वी नित्यं स्यात्पापकर्मसु।
दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतम्॥

यथा सर्वाणि भूतानि धरा धारयते समम्।
तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम्॥

यथा सर्वाणि स्थावरजङ्गमानि उत्कृष्टनिकृष्टानि पृथ्वी धारयति तथा सर्वाणिकरदायिदीनानाथार्तादीनि रक्षणादिना धारयतः पृथिवीसम्बन्धि व्रतम् ।

एतैरुपायैरन्यैश्च युक्तो नित्यमतन्द्रितः ।
स्तेनान् राजा निगृह्णीयात्स्वराष्ट्रे पर एव च ॥

अतन्द्रितोऽनलसः । स्तेनान् चौरान् । इयं च पूर्वोक्तदेवांशरूपता महाराजस्यैव ।

पञ्च रूपाणि राजानो धारयन्त्यमितौजसः ।
अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च ॥

इतीयं नारदोक्तपञ्चरूपता तु कियन्माण्डलिकस्य भूपस्य । अत एव—

बृहत्पराशरेण,

हर्यश्ववह्नयन्तकविश्वनाथशीतांशुरूपाणि हि बिभ्रतीह ।
सर्वेऽपि भूपास्त्विह पञ्चरूपास्तत्कथ्यमानं शृणुत द्विजेन्द्राः॥

इत्यत्र सामान्यवाचि सर्वपदमुपात्तम् । हर्यश्व इन्द्रः । अग्न्यादिकार्यकारित्वेन तत्तद्रूपतां द्रढयति—

नारदः,

कारणान्निर्निमित्तं वा यदा क्रोधवशं गतः ।
प्रजा दहति भूपालस्तदाग्निरभिधीयते ॥

बृहत्पराशरोऽपि,

अकारणात्कारणतोऽपि चैष प्रजा दहेत्कोपसमिद्धरोचिः ।
यदा तदैनं नृपनीतिविज्ञास्तनूनपातं प्रवदन्ति भूपम् ॥ इति ।

अकारणादिति दुष्टनृपविषयम् ।

नारदः,

यदा तेजः समालम्बेद्विजिगीषुरुदायुधः ।

अभियाति परान् राजा तदेन्द्रः समुदाहृतः ॥
तथा बृहत्पराशरः,
[य]दा जिगीषुर्धृतशस्त्रपाणिस्त्विषुं समालम्ब्य सचिह्नसैन्यः ।
[स]र्वान्सपत्नानिह जेतुकामस्तदा स हर्यश्व इवेह भाति ॥ इति ।
नारदः,
विगतक्रोधसन्तापो हृष्टरूपो यदा नृपः ।
प्रजानां दर्शनं याति सोम इत्युच्यते तदा ॥
तथा बृहत्पराशरः,
समस्तशीतांशुगुणप्रयुक्तो यदा प्रजामेष शुभाय पश्येत् ।
प्रसन्नमूर्त्तिर्गतमत्सरः संस्तदोच्यते सोम इति क्षितीशः ॥
नारदः,
धर्मासनगतः श्रीमान् दण्डं धत्ते यदा नृपः ।
समः सर्वेषु भूतेषु तदा वैवस्वतो यमः ॥
तथा बृहत्पराशरः,
धर्मासनस्थः श्रुतशास्त्रदृष्ट्या शुभाशुभाचारविचारकृत्स्यात् ।
धर्मेषु दानं त्वथ कृत्स्नदण्डं तदाऽवनीशस्त्विह धर्मराजः ॥
नारदः,
यदा त्वर्थिगुरून् प्राज्ञान् भृत्यादीन् पृथिवीपतिः ।
अनुगृह्णाति दानेन तदा धनद उच्यते ॥
बृहत्पराशरोऽपि,
यदा त्वमात्यद्विजपावकादीन् प्रहृष्टचित्तश्च यथोचितेन ।
धनप्रदानेन करोति हृष्टान् भूभृत्तदाऽसौ द्रविणेशवत्स्यात् ॥
अग्न्यादिपञ्चरूपत्वमुक्त्वाऽनाद्यनन्तात्मकविष्णुरूपत्वमाह—
नारदः,
अनादिश्चाप्यनन्तश्च द्विपदां पृथिवीपतिः ।

दीप्तत्वाच्च शुचित्वाच्च यद्यसौ न पथश्च्युतः ॥
पथश्च्युतो भ्रष्टाचारः ।
अशुचिर्वचनाद्यस्य शुचिर्भवति पूरुषः ।
शुचिश्चैवाशुचिः सद्यः कथं राजा न दैवतम् ॥
अशुचिरित्यादिः तस्मात्तं नावजानीयादित्यस्याग्रेतनस्यार्थवादः ।
तस्मात्तं नावजानीयान्नाक्रोशेन विशेषयेत् ।
वस्त्रालङ्कारादिभिस्तमपेक्ष्यात्मानं नाधिकं कुर्यात् ।
आज्ञया तस्य तिष्ठेत्तु मृत्युः स्यात्तद्व्यतिक्रमे ॥
आज्ञा तेजः पार्थिवानां सा च नृपाचि प्रतिष्ठिता ।
स यद्ब्रूयादसत्सद्वा स धर्मो व्यवहारिणाम् ॥
राजा नाम चरत्येष भूमौ साक्षात्सहस्रदृक् ।
न तस्याज्ञामतिक्रम्य प्रतिष्ठेरन्निमाः प्रजाः ॥
रक्षाधिकारादीशत्वाद्भूतानुग्रहदर्शनात् ।
यदेव कुरुते राजा तत्प्रमाणमिति स्थितिः ॥
निर्गुणोऽपि यथा स्त्रीणां पूज्य एव पतिः सदा ।
प्रजानां निर्गुणोऽप्येवं पूज्य एव नराधिपः ॥
राज्ञामाज्ञाभयाद्यस्मान्न च्यवन्ते पथः प्रजाः ।
व्यवहारस्ततो ज्ञेयः शंसतो राजशासनम् ॥
राजशासनं राजाज्ञाम् ।
स्थित्यर्थं पृथिवीपालैश्चारित्रविधयः कृताः ॥
चारित्रविधयः राजकृता भागादिव्यवस्थाः ।
चारित्रेभ्योऽप्यतः प्राहुर्गरीयो राजशासनम् ॥
तपःक्रीताः प्रजा राज्ञः प्रभुरासां नराधिपः ।
तस्मात्तद्वचसि स्थेयं वार्ता तासां तदाश्रया ॥

वार्ता कृषिपाशुपाल्यादिवृत्तिः।

मनुः,

यस्तु तं द्वेष्टि सम्मोहात्स विनश्यत्यसंशयम्।
तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः॥

तं राजानम्। द्वेष्टि तदाज्ञाभङ्गं करोति। स विनश्यति राजकृतवधभाग्भवतीत्यर्थः।

बृहत्पराशरोऽपि,

आज्ञा नृपाणां परमं हि तेजो यस्तां न मन्येत स शस्त्रवध्यः।
श्रूयाच्च कुर्याच्च वदेच्च भूभृत्तदेव कार्यं भुवि सर्वलोकैः॥
दुर्धर्षतीव्रांशुसमानदीप्तेर्ब्रूयान्मनुष्यः परुषं नृपस्य।
यस्तस्य तेजोऽप्यवमन्यमानः सद्यः स पञ्चत्वमुपैति पापात्॥
योऽह्नाय सर्वं विदधाति पश्येत् शृणोति जानाति चकास्ति शास्ति।
कस्तस्य चाज्ञां न विभर्त्ति राज्ञः समस्तदेवांशभवः स यस्मात्॥

अह्नाय शीघ्रम्।

तस्माद्धर्मं यमिष्टेषु संव्यवस्येन्नराधिपः।
अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत्॥

यतः सर्वतेजोमयो राजा तस्माद्धेतोरिष्टेषु वल्लभेषु मन्त्रिपुरोहितादिषु यं धर्मं यां व्यवस्थां स्मृत्याचाराविरुद्धां व्यवस्येत् निश्चित्य स्थापयेत् तां न विचालयेत्। सा तादृशी राज्ञ आज्ञा अनतिक्रमणीया। अद्य सर्वैरुत्सवः कर्त्तव्यः मन्त्रिगृहे विवाहो वर्तते तत्र सर्वैः सन्निधातव्यम्, तथा सौनिकैरद्य पशवो न हन्तव्याः न शकुन्तयो बन्धायितव्याः, नर्णका धनिकैरुपरोधनीया एतावन्त्यहानि। एवमनिष्टेष्वपि–एतेन सह संसर्गो न विधेयः, एतस्य गृहे प्रवेशो न देयः। एवंविधो धर्मः स्पृहादोषादिना राजादिष्टो नातिक्रमणीयः। न त्वग्निहोत्रादि-

धर्मव्यवस्थायै वर्णाश्रमिणां राजा प्रभवति स्मृत्यन्तरविरोधप्रसङ्गात् । अविरोधे चास्मिन् विषये वचनस्यार्थवत्त्वात् ।

बृहस्पतिः,

बलेन चतुरङ्गेण यतो रञ्जयति प्रजाः ।
दीप्यमानः स वपुषा तेन राजाऽभिधीयते ॥

बलेन सेनया । चतुरङ्गेण हस्त्यश्वरथपादातेन ।

अङ्गिराः,

गुरुवद्येन भूपालः पापं दण्डेन भूयसा ।
संस्करोत्यवनाच्चैव तेनासौ गुरुरुच्यते ॥

पापं पापकारिणम् । संस्करोति शुद्धं करोति । शुद्धं कृत्वाऽवति च ।

बृहत्पाराशरे,

अथातो नृपतेर्धर्मम्–इत्युपक्रम्य ।
भूभृत् भूम्यां परो देवः पूज्योऽसौ परदेववत् ।
स विधाता च सर्वस्य रक्षिता शासिताऽपि सः ॥

परो देवः स्वाराध्यदेवः ।

महाभारते,

अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते ।
परस्परं च खादन्ति सर्वथा धिगराजकम् ॥
इन्द्रमेव प्रवृणुते यद्राजानमिति श्रुतिः ।
यथैवेन्द्रस्तथा राजा सम्पूज्यो भूतिमिच्छता ॥
नाराजकेषु राष्ट्रेषु वस्तव्यमिति रोचये ।
नाराजकेषु राष्ट्रेषु हव्यमग्निर्वहत्युत ।
अथ चेदभिवर्तेत राज्यार्थं बलवत्तरः ॥
अराजकानि राष्ट्राणि हतवीर्याणि वा पुनः ॥

न हि पापात्परतरमस्ति किञ्चिदराजकात्।
स चेत्समनुपश्येत समग्रं कुशलं भवेत् ॥
श्रीरामायणे,
नाराजके जनपदे योगः क्षेमं प्रवर्त्तते।
न चाप्यराजके सेना शत्रून् विषहते परान् ॥
अराजके राजरहिते। अलब्धलाभो योगः। लब्धस्य रक्षणं क्षेमम्। विषहते तन्निवारणक्षमा भवति।
विपालाश्च यथा गावो यथा चातृणकं वनम्।
विपाला रक्षकरहिताः।
अजलाश्च यथा नद्यस्तथा राष्ट्रमराजकम् ॥
अन्धं तम इवेदं स्यान्नेह ज्ञायेत किञ्चन।
राजा चेन्न भवेल्लोके विभजन् साध्वसाधुनी।
गरुडपुराणे,
धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः।
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥
श्रीमहाभारते,
राजा प्रगल्भं पुरुषं करोति राजा कृशं बृंहयते मनुष्यम्।
राजाभिपन्नस्य कुतः सुखानि राजाऽभ्युपेतं सुखिनं करोति ॥
राजा प्रजानां हृदयं गरीयो गतिः प्रतिष्ठा सुखमुत्तमं च।
यमाश्रिता लोकमिमं परं च जयन्ति सम्यक् पुरुषा नरेन्द्र ॥
राजाभिपन्नस्य राज्ञा आभिपन्नस्य कृताभियोगस्य।
राजधर्म्मे,
बृहस्पतिरुवाच।
राजमूलो महाप्राज्ञ धर्मो लोकस्य लक्ष्यते।
प्रजा राजभयादेव न खादन्ति परस्परम् ॥

राजा ह्येवाखिलं लोकं समुदीर्णं समुत्सुकम् ।

समुदीर्णम् सम्यक्कृतोदीरणं, समीचीनप्रकारेण स्वस्वदुःखाद्याख्यायकम् । समुत्सुकम् दुःखवशेन देशग्रामादि परित्यक्तुमुत्कण्ठावन्तम् ।

प्रसादयति धर्मेण प्रसाधयेति राजते ॥
यथा ह्यनुदये राजन् भूतानि शशिसूर्ययोः ।
अन्धे तमसि मज्जेयुरपश्यन्तः परस्परम् ॥
यथा ह्यनुदके मत्स्या निराक्रन्दे विहङ्गमाः ।

निराक्रन्दे आक्रन्दतीत्याक्रन्दो निषेधस्तदभावे ।

विहरेयुर्यथाकामं विहिंसन्तः पुनः पुनः ॥
न मिथ्यातिक्रमेरंश्च विषह्यापि परस्परम् ।

नेति काकुः । विमथ्यातिक्रमेरन् इति पाठस्तु सुगम एव ।

अभावमचिरेणैव गच्छेयुर्नात्र संशयः ॥
एवमेव विना राज्ञा विनश्येयुरिमाः प्रजाः ।
अन्धे तमसि मज्जेयुरगोपाः पशवो यथा ॥
हरेयुर्बलवन्तोऽपि दुर्बलानां परिग्रहान् ।
हन्युर्व्यायच्छमानांश्च यदि राजा न पालयेत् ॥

व्यायच्छमानान् कृतप्रयत्नान् ।

ममेदमिति लोकेऽस्मिन्न भवेत्सम्परिग्रहः ।
विष्वग्लोपः प्रवर्त्तेत यदि राजा न पालयेत् ॥
यानं वस्त्रमलङ्कारान् रत्नानि विविधानि च ।
हरेयुः सहसा पापा यदि राजा न पालयेत् ॥
पतेद्बहुविधं शस्त्रं बहुधा धर्मचारिषु ।
अधर्मः प्रगृहीतः स्याद्यदि राजा न पालयेत् ॥

---

१ प्रसाद्य च विराजते इति मुद्रितभारतपुस्तके पाठः ।

मातरं पितरं वृद्धमाचार्यमतिथिं गुरुम् ।
क्लिश्नीयुरपि हिंस्युर्वा यदि राजा न पालयेत् ॥
वन्धवन्धपरिक्लेशो नित्यमर्थवतां भवेत् ।
ममत्वं च न विन्देयुर्यदि राजा न पालयेत् ॥
अन्ताश्चाकाल एव स्युर्लोकोऽयं दस्युसाद्भवेत् ।
पतेयुर्नरकं घोरं यदि राजा न पालयेत् ॥
न योनिदोषो वर्त्तेत न कृषिर्न वणिक्पथः ।
योनिदोषः योनिदोषकृताऽव्यवहार्यता, दण्डादिश्च ।
मज्जेद्धर्मस्त्रयी न स्याद्यदि राजा न पालयेत् ॥
न यज्ञाः सम्प्रवर्त्तेयुर्विधिवत्स्वाप्तदक्षिणाः ।
न विवाहाः समाजो वा यदि राजा न पालयेत् ॥
न वृषाः सम्प्रवर्त्तेरन्नुन्मथ्येरंश्च गह्वराः ।
गह्वराः साहसिकाः ।
घोषाः प्राणाशं गच्छेयुर्यदि राजा न पालयेत् ॥
त्रस्तमुद्विग्नहृदयं हाहाभूतमचेतनम् ।
क्षणेन विनशेत्सर्वं यदि राजा न पालयेत् ॥
न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
तिष्ठेयुः अनुतिष्ठेयुः ।
विधिवद्दक्षिणावन्ति यदि राजा न पालयेत् ॥
ब्राह्मणाश्चतुरो वेदान्नाधीयीरंस्तपस्विनः ।
विद्यास्नाता व्रतस्नाता यदि राजा न पालयेत् ॥
न लभेद्धर्मसंश्लेषं हतविप्रहतो जनः ।

हतैः धर्महीनैर्विप्रैर्हतः अनुपदिष्टधर्मः । यद्वा हतः किञ्चित्पीडितो, विप्रहतो विशेषेण प्रहतः प्रपीडितः । धर्मसंश्लेषं धर्मसम्बन्धम् ।

हर्त्ता सुस्थेन्द्रियो गच्छेद्यदि राजा न पालयेत् ।
हस्तो हस्तं परिमुपेच्छिन्द्येरन् सर्वसेतवः ॥
सर्वसेतवो ग्रामश्रेणीधर्ममर्यादाः ।
भयार्त्तं विद्रवेत्सर्वं यदि राजा न पालयेत् ॥
अनयाः सम्प्रवर्त्तेरन् भवेद्वै वर्णसङ्करः ।
दुर्भिक्षमाविशेद्राष्ट्रं यदि राजा न पालयेत् ॥
विवृत्य हि यथाकामं गृहद्वाराणि शेरते ।
विवृत्य उद्घाट्य ।
मनुष्या रक्षिता राज्ञा समन्तादकुतोभयाः ॥
नाक्रोष्टुं सहते कश्चित्कुतो वा हस्तलाघवम् ।
यदि राजा न सम्यक्तान् रक्षयत्यतिधार्मिकः ॥
स्त्रियश्चापुरुषा मार्गे सर्वालङ्कारभूषिताः ।
निर्भयाः प्रतिपद्यन्ते यदि रक्षति भूमिपः ॥
धर्ममेव प्रपद्यन्ते न हिंसन्ति परस्परम् ।
अनुगृह्णन्ति चान्योन्यं यदि रक्षति भूमिपः ॥
यजन्ते च महायज्ञैस्त्रयो वर्णाः पृथग्विधैः ।
युक्ताश्चाधीयते विद्यां यदि रक्षति भूमिपः ॥
वार्त्तामूलो ह्ययं लोकस्त्रय्या वै धार्यते सदा ।
तत्सर्वं वर्तते सम्यक् यदि रक्षति भूमिपः ॥
यदि राजा धुरं श्रेष्ठामादाय वहति प्रजाः ।
महता बलयोगेन तदा लोकः प्रसीदति ॥
यस्याभावेन भूतानामभावः स्यात्समन्ततः ।
भावे च भावो नित्यं स्यात्कस्तं न प्रतिपूजयेत् ॥
तस्य यो वहते भारं सर्वलोकसुखावहम् ।

---

१ तत्साध्यं ताडनमित्यर्थः ।

तिष्ठन् प्रियहिते राज्ञ उभौ लोकाविमौ जयेत् ॥
यस्तस्य पुरुषः पापं मनसाप्यनुचिन्तयेत् ।
असंशयमिह क्लिष्टः प्रेत्यापि नरकं व्रजेत् ॥
न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥
कुरुते पञ्चरूपाणि कालयुक्तानि यः सदा ।
भवत्यग्निस्तथाऽऽदित्यो मृत्युर्वैश्रवणो यमः ॥
यदा ह्यासीदतः पापान् दहत्युग्रेण तेजसा ।
मिथ्योपचरितो राजा तदा भवति पावकः ॥
यदा पश्यति चारेण सर्वभूतानि भूमिपः ।
क्षेमं च कृत्वा व्रजति तदा भवति भास्करः ॥
अशुचींश्च यदा क्रुद्धः क्षिणोति शतशो नरान् ।
सपुत्रपौत्रान् सामात्यांस्तदा भवति सोऽन्तकः ॥
यदा तु धनधाराभिस्तर्पयत्युपकारिणः ।
आच्छिनत्ति च रत्नानि विविधान्यपकारिणाम् ॥
श्रियं ददाति कस्मै चित्कस्माच्चिदपकर्षति ।
तदा वैश्रवणो राजा लोके भवति भूमिपः ॥
यदा त्वधार्मिकान् सर्वांस्तीक्ष्णैर्दण्डैर्नियच्छति ।
धार्मिकांश्चानुगृह्णाति भवत्यथ यमस्तदा ॥
नास्यापवादे स्थातव्यं दक्षेणाक्लिष्टकर्मणा ।
धर्म्यमाकाङ्क्षता लोकमीश्वरस्यानसूयता ॥
न हि राज्ञः प्रतीपानि कुर्वन् सुखमवाप्नुयात् ।
पुत्रो भ्राता वयस्यो वा यद्यप्यात्मसमो भवेत् ॥
राजा मुखं मनुष्याणां नदीनां सागरो मुखम् ।
कामन्दकीये,

राजाऽस्य जगतो हेतुर्वृद्धेर्वृद्धाभिसम्मतः ।
नयनानन्दजननः शशाङ्क इव तोयधेः ॥
यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥
कात्यायनः,
श्रोत्रिया विधवा बाला दुर्बलाश्च कुटुम्बिनः ।
एते राजबला राज्ञा रक्षितव्याः प्रयत्नतः ॥
अनाथस्य नृपो नाथस्त्वगृहस्य नृपो गृहम् ।
अपुत्रस्य नृपः पुत्रो ह्यपितुः पार्थिवः पिता ॥
कालिकापुराणे,
अपुत्रस्य नृपः पुत्रो निर्द्धनस्य धनं नृपः ।
अमातुर्जननी राजा ह्यतातस्य पिता नृपः ॥
अनाथस्य नृपो नाथो ह्यभर्त्तुः पार्थिवः पतिः ।
अभृत्यस्य नृपो भृत्यो नृप एव नृणां सखा ॥
गरुडपुराणे,
अनायके न वस्तव्यं तथा च बहुनायके ।
स्त्रीनायके न वस्तव्यं तथा च शिशुनायके ॥
तथा,
अबलस्य बलं राजा बालस्य रुदितं बलम् ।
बलं मूर्खस्य मौनं तु तस्करस्यानृतं बलम् ॥
मार्कण्डेयपुराणेऽपि राज्ञःपञ्चरूपत्वमुक्तम्—
मदालसोपाख्याने ।
शक्रार्कयमसोमानां तद्वद्वायोर्महीपतिः ॥
रूपाणि पञ्च कुर्वीत महीपालनकर्मणि ।
यथेन्द्रश्चतुरो मासान् वार्योघेणैव भूतलम् ॥

आप्याययेत्तथा लोकान् परिहारैर्महीपतिः।
परिहारैः दानैः।
मासानष्टौ यथा सूर्यस्तोयं हरति रश्मिभिः।
सूक्ष्मेणैवाभ्युपायेन तथा शुल्कादि भूपतिः॥
शुल्कं करः।
यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति।
तथा प्रियाप्रिये राजा दुष्टादुष्टे समो भवेत्॥
पूर्णेन्दुमालोक्य यथा प्रीतिमान् जायते नरः।
एवं यत्र प्रजाः सर्वा निर्वृतास्तच्छशिव्रतम्॥
मारुतः सर्वभूतेषु निगूढश्चरते यथा।
एवं नृपश्चरेच्चारैः पौरामात्यादिबन्धुषु॥
न लोभार्थैर्न कामार्थैर्नार्थार्थैर्यस्य मानसम्।
पदार्थैः कृष्यते धर्मात्स राजा स्वर्गमृच्छति॥
उत्पथग्राहिणो मूढान् स्वधर्माच्चलतो नरान्।
यः करोति निजे धर्मे स राजा स्वर्गमृच्छति॥
वर्णधर्मा न सीदन्ति यस्य राष्ट्रे तथाश्रमाः।
राज्ञस्तस्य सुखं तात परत्रेह च शाश्वतम्॥
एतद्राज्ञः परं कृत्यं तथैतद्वृद्धिकारणम्।
स्वधर्मस्थापनं नृणां चाल्यते यत्कुबुद्धिभिः॥
पालनेनैव भूतानां कृतकृत्यो महीपतिः।
सम्यक्पालयिता भागं धर्मस्याप्नोति वै यमः॥
तथा,
वत्स राज्येऽभिषिक्तेन प्रजारञ्जनमादितः।
कर्त्तव्यमविरोधेन स्वधर्मस्य महीभृता॥
इत्यादिवचनबलात् राष्ट्रे राजा आवश्यक इति।
इति राजप्रशंसा।

अथ क्षत्रियस्य राज्याभिषेकानन्तरमेव प्रजापालनस्य कर्त्तव्यत्वेन राजाभिषेके कालो निरूप्यते ।

तत्राभिषेकस्य निषिद्धकालेऽकर्त्तव्यत्वेन प्रथमं निषिद्धकालाः प्रदर्श्यन्ते । तत्र—

काठकगृह्ये,

राजाऽभिषेकं काम्यं च न कुर्याद्भानुलङ्घिते ।
भानुलङ्घिते असङ्क्रान्तमासे ।

तथा,

मलमासे विवर्जयेत् । इत्युपक्रम्य—
राज्ञोऽभिषेकः प्रथमश्चूडाकरणमेखलाः ॥
अन्नप्राशनमारम्भो गृहाणां च प्रवेशनम् ।

विष्णुधर्मोत्तरे,

नाभिषेच्यो नृपश्चैत्रे नाधिमासे च भार्गव ।
न प्रसुप्ते तथा विष्णौ विशेषात्प्राहृपि द्विज ॥
न च भौमदिने राम चतुर्थ्यां च तथैव च ।
नवम्यां नाभिषेक्तव्यश्चतुर्दश्यां च भार्गव ॥

तथा,

नागं चतुष्पदं विष्टिं किंस्तुघ्नं शकुनिं तथा ।
करणानि न शस्यन्ते व्यतीपातदिनं तथा ॥
नक्षत्रमुल्काभिहतमुत्पाताभिहतं तु यत् ।
सोमसूर्यकुजाक्रान्तं परिदृष्टं च भार्गव ॥

तथा,

कुजहोरास्तथा नेष्टाः सर्वत्र कुलिकोऽस्य च ।

इति निषिद्धकालः ।

अथ राजाभिषेके विहितकाला निरूप्यन्ते ।

विष्णुधर्मोत्तरे,

इति सम्भृतसम्भारो राज्ञः सांवत्सरस्ततः ।
कालेऽभिषेचनं कुर्यात्तं कालं कथयामि ते ॥

इत्युपक्रम्य–

ध्रुवाणि वैष्णवं शाक्रं हस्तपुष्यौ तथैव च ।
नक्षत्राणि प्रशस्यन्ते भूमिपालाभिषेचने ॥

इतीति वक्ष्यमाणसम्पादितसामग्रीकः । सांवत्सरो ज्यो-
ातिषिकः ।

सांवत्सरो ज्योतिषिको दैवज्ञगणकावपि । इत्यमरात् ।

ध्रुवाणि रोहिणी उत्तरात्रयं च । वैष्णवं श्रवणः । शाक्रं ज्येष्ठा ।

गरुडपुराणे,

रोहिण्यार्द्रा तथा पुष्यो धनिष्ठा चोत्तरात्रयम् ।
वारुणं श्रवणं चैव एते चोर्ध्वमुखाः स्मृताः ॥
एषु राज्याभिषेकं च पट्टबन्धं च कारयेत् ।

वारुणं शतभिषा । पट्टबन्धं वक्ष्यमाणलक्षणोपेतम् ।

विष्णुधर्मोत्तरे,

वृषोऽथ कीटसिंहौ च कुम्भो लग्ने प्रशस्यते ।
एतेषां जन्मलग्नाभ्यां यस्मादुपचयोऽस्त्यतः ॥
तारा द्वितीया षष्ठी तु चतुर्थी चाष्टमी तथा ।
नवमी च तथा शस्ता अनुकूलश्च चन्द्रमाः ॥
सौम्याः केन्द्रगता लग्नात् शुभाश्चैव त्रिकोणयोः ।
पापाश्चोपचयस्थाने शस्तो लग्ने दिवाकरः ॥
लग्ने नवांशे स्थितिरस्य वर्गे वर्गस्तथा तस्य महानुभाव ।
सूर्यस्य वर्गः सकलःप्रशस्तो राज्ञोऽभिषेके स नृपो ग्रहाणाम् ॥

स सूर्यो ग्रहाणां नृपः स्वामी ।

वृत्तशते,

जन्मेशलग्नेशदशेशसूर्ये भौमे बलिष्ठे क्षितिपाभिषेकः ।
ज्येष्ठाश्रवःक्षिप्रमृदुध्रुवेषु सौम्यग्रहस्याह्नि तिथावरिक्ते ॥
लग्ने चरे चोपचयस्थिते च शीर्षोदये च क्षितिपाभिषेकः ।
शस्तस्त्रिषष्ठायगतैश्च पापैः सौम्यैः षडन्त्यायविवर्जितैश्च ॥

कश्यपः,

अथातः सम्प्रवक्ष्यामि भूपानामभिषेचनम् ।
सौम्यायने क्षते जीवे नास्तगे न च वृद्धके ॥
स्वलग्नराशिगे लग्ने तदंशे वा बलान्विते ।
पट्टबन्धनलग्नेशे तदंशेशे च नास्तगे ॥
सुहृत्त्रिकोणस्वक्षेत्रतुङ्गसंस्था ग्रहा यदि ।
यस्याभिषेके कुर्वन्ति स्थिरां कीर्तिं श्रियं सुखम् ॥

ब्रह्मपुराणे,

सुतिथौ च सुनक्षत्रे स्नानं नक्षत्रनामकम् ।
मुहूर्त्ते सुगुणोपेते सर्वोत्पातविवर्जिते ॥
स्थिरे राशौ शुभयुते केन्द्रे चोपचयान्विते ।

सुतिथौ चतुर्थीनवमीचतुर्दशीभिन्नतिथौ । सुनक्षत्रे "ध्रुवाणि वैष्णवं शाक्रम्" इत्यादिना विहितनक्षत्रे । नक्षत्रनामकं स्नानम्, विधायेतिशेषः । तच्च विष्णुधर्मोत्तरे जन्मनक्षत्रे विहितमग्रेऽभिधास्यते । पुष्यस्नानं वा विधाय । मुहूर्ते सुगुणोपेत इत्यनेन गुरुशुक्रास्तादिराहितशुद्धमासादिरूपः काल उपलक्ष्यते । स्थिरे राशौ वृषसिंहवृश्चिककुम्भेषु । शुभयुते शुभग्रहयुते । केन्द्रे प्रथमचतुर्थसप्तमदशमभवने ।

काश्मीरायां तु पार्वत्यां शङ्करात्मा महीपतिः ।
सर्वलक्षणसंयुक्तस्त्वभिषेच्यो नवस्तदा ॥

तदा पूर्वोक्ते काले, नवो महीपतिः, पार्वत्यां पर्वतभवायां, काश्मीरायां श्रीपर्ण्यां, तन्निर्मिते भद्रपीठे उपवेश्येत्यर्थः । अत एवाग्रे अभिषेकसम्भारमध्ये श्रीपर्णीपीठमाहृतमस्ति ।

इति राजाभिषेके विहितकालाः ।

अथ राज्याधिकारिनिर्णयः ।

तत्रौरसो ज्येष्ठ एवाधिकारी । तदुक्तम्—

कालिकापुराणे,

राजेत्युपक्रम्य—

औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
स्वयंदत्तश्च दासश्च षडिमे पुत्रपांसनाः ॥

दासः स्वोत्पन्नो दासीपुत्रः । रागादिना द्विजातीनामपि दास्यामुत्पन्नस्य पुत्रस्य सम्भवात् ।

अभावे पूर्वपूर्वेषां परान् समभिषेचयेत् । इति ।

मनुः,

ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः ।
शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥ इति ।

आपस्तम्बोऽपि, ज्येष्ठो दायाद इति ।

इदं राज्ये विभागाभावस्य वक्ष्यमाणत्वात् राज्यविषयमिति बहुभिर्व्याख्यातम् ।

मनुरपि,

ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।

पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति ॥ इति ।

कालिकापुराणे तु ज्येष्ठौरसस्य राज्यं स्पष्टमेवाभिहितम्-

अथोपरिचरं राजा यौवराज्येऽभ्यषेचयत् ।

ज्यायांसमौरसं पुत्रं सर्वराजगुणैर्युतम् ॥ इति ।

रामायणेऽपि,

मन्थरां प्रति कैकयीवाक्यम्—

धर्मज्ञो गुणवान् दान्तः कृतज्ञः सत्यवाक् शुचिः ।

रामो राजसुतो ज्येष्ठो यौवराज्यमतोऽर्हति ॥

राजसुत इत्यौरसत्वज्ञापनार्थम् ।

तथा,

रामं प्रति दशरथवाक्यम्—

आदिष्टो ह्यसि मे ज्येष्ठः प्रसूतः सदृशो गुणैः ।

ज्येष्ठायामपि मे पत्न्यां सदृश्यां सदृशः सुतः ॥

तत्प्रसृतस्त्वं गुणज्येष्ठो रामनामाऽऽत्मजः प्रियः ।

त्वया तात प्रजा ह्येताः स्वगुणैरनुरञ्जिताः ॥

तस्मात्त्वं पुण्ययोगेन यौवराज्यमवाप्स्यसि । इति ।

प्रसूत औरसः । अस्मादपि ज्येष्ठस्यौरसस्यैव राज्यमिति गम्यते । ज्येष्ठायामिति । यदा एकदोत्पन्नयोर्ज्यैष्ठ्यं न निर्णेतुं शक्यते तदा ज्येष्ठापुत्रस्य प्राप्त्यर्थं, न तु महिष्या अन्यस्या वा ज्येष्ठायाः पुत्रस्य कनीयसोऽपि प्राप्त्यर्थम् । यदा ज्येष्ठाया अनभिषिक्ताया वा पुत्रो ज्येष्ठस्तदा तस्यैव राज्यमित्याचारदर्शनात्,

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः ।

न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते ॥

इति मनुना स्पष्टमभिधानाच्च ।

रामायणेऽपि,

जन्मज्येष्ठं प्रियं पुत्रं यौवराज्ये यदीप्सथ ।

इति ज्यैष्ठ्यस्य जन्मनैवोक्तत्वाच्च । एवं यमयोरपि जन्मनैव ज्यैष्ठ्यं न निषेकेण । निषेकज्यैष्ठ्ये तु अनेकपत्नीकस्यैकस्यां पूर्वं निषेकः पश्चात्पुत्रजन्म, यस्यां पश्चान्निषेकः पूर्वं पुत्रजन्म, तत्पुत्रयोर्मध्ये पूर्वपुत्रस्यैव राज्यं स्यात् । न चेष्टापत्तिः । आचारविरोधात्, उक्तवचनविरोधाच्च ।

मनुरपि जन्मनैव ज्यैष्ठ्यमाह—

जन्मज्यैष्ठ्येन चाह्वानं सुब्रह्मण्यायामपि स्मृतम् ।

यमयोश्चैव गर्भेषु जन्मना ज्यैष्ठ्यमुच्यते ॥

सुब्रह्मण्याख्यो मन्त्रो ज्योतिष्टोम इन्द्रस्याह्वानार्थं प्रयुज्यते । तत्र प्रथमं प्रथमपुत्रेण पितरमुद्दिश्याह्वानं क्रियते–"अमुकस्य पिता यजते" इति, तत्र जन्मज्येष्ठतामादृत्यैवाह्वानम् । यस्य च यजमानस्य यमजौ पुत्रौ तत्र गर्भे एककालनिषिक्तयोरपि यमयोर्जन्मना ज्यैष्ठ्यमुच्यते, जन्मज्यैष्ठ्येन पुत्रस्य ज्येष्ठतामादृत्याह्वानं क्रियते इति वाक्यार्थः । गर्भेष्विति बहुवचनं तु लोके स्त्रीबहुत्वमपेक्ष्योक्तं द्रष्टव्यम् । तथा च—

स्मृत्यर्थतत्त्वे देवलः,

यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् ।

सन्तानः पितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम् ॥ इति ।

सन्तानो वंशः ।

ननु पूर्वं निषिक्तस्य पश्चादुत्पन्नस्य हिरण्यकशिपोः कथं पूर्वं नामकरणम् । तथा च–

श्रीभागवते,

प्रजापतिर्नाम तयोरकार्षीद्यः प्राक्स्वदेहाद्यमयोरजायत ।

तं वै हिरण्यकशिपुं विदुर्बुधा यं तं हिरण्याक्षमसूत साग्रतः ॥

स्वदेहात् पितृदेहात्। प्राक् गर्भनिषेककाले। सा अदितिः। गर्भाधानकाले यथा प्राक्पश्चाद्भवस्तथोक्तः—

पिण्डसिद्धौ,

यदा विशेत् द्विधाभूतं बीजं पुष्पं परिक्षरत्।

द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययात् ॥

सूतिः प्रसवः। वेशविपर्ययात् वेशो बीजप्रवेशः, तद्विपर्ययात् तद्वैपरीत्येन। यस्य पूर्वं निषेकः तस्य पश्चादुत्पत्तिः यस्य च पश्चान्निषेकस्तस्य पूर्वमुत्पत्तिरिति चेत्, उच्यते। "जन्मना ज्यैष्ठ्यमुच्यते" इति "तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम्" इति मनुदेवलवचनाभ्यां विरोधे "प्रजापतिर्नाम तयोरकार्षीत्" इति भागवतवचनस्य सिद्धार्थमात्रबोधकस्य ज्यैष्ठ्यविधायकत्वमिति वक्तुमशक्यत्वात्, "सूतिर्वेशविपर्ययात्" इत्यस्यापि एकदा निषिक्तयोरुपरिभागनिषिक्तस्य पश्चान्निर्गम इति दैशिक एव विपर्ययोऽर्थः, न तु गर्भे पूर्वमुत्पन्नस्येत्येतावत्पर्यन्तमर्थः। एकस्यापि सङ्कीर्णवीथीस्थितस्य गजादेः पराङ्मुखतयैव परावृत्तौ विपरीतो निर्गत इति प्रयोगात्। न च मनुवाक्ये गर्भेषु जन्मनेत्यन्वयो युक्तः, गर्भसम्भूतावपत्यजन्माभूदित्यप्रयोगात्। निर्गमे च तादृशप्रयोगाद्देवलवाक्यैकवाक्यत्वाच्च पूर्वोक्तमेधातिथ्यादिकृतव्याख्यानस्यैवोचितत्वात्। इतरथा निषेकक्रमेण ज्येष्ठत्वेऽनेकपत्नीकस्यैकस्यां पूर्वं निषिक्तो गर्भः शल्यीभूतोऽन्यस्यां चानन्तरनिषिक्तः स्वकाले उत्पन्नस्तदपेक्षया शल्यवृद्ध्या विंशतिवर्षानन्तरोत्पन्नस्य ज्येष्ठत्वव्यवहारप्रसङ्गः। यदि चैकगर्भ एव निषेकक्रमेण ज्यैष्ठ्यं न पृथग्गर्भे, भागवतवचनानुरोधादित्युच्यते, तत्रोक्त एव मनुदेवलवचनाविरोधः। अस्तु वा तथा।

तथापि को हि अयोगी तद्वेद यदुपर्यधो वा पूर्वं निषेक एकदैवो-
भयत्र वेति त्रितयस्यापि वक्तुं शक्यत्वात्। योगी हि प्रजापतिः
क्रमं विदित्वा नाम चकारेत्यस्यापि सुवचत्वात्। अत एव
यः प्राक्स्वदेहादित्येवोक्तम्, न तूपरिस्थितत्वादेराद्यसम्भूतौ
हेतुत्वेनोक्तिः, तस्माज्जन्मनैव ज्यैष्ठ्यमितिदिक्।

अथौरसे कनीयस्यपि सति क्षेत्रजादीनां राज्यदाननिषे-
धः कालीपुराणे दर्शितः—

न क्षेत्रजादींस्तनयान्राजा राज्येऽभिषेचयेत्।
पितॄणां शोधयन्नित्यमौरसे तनये सति ॥

शोधयन्, ऋणमितिशेषः। औरसे तनये सतीति तत्स-
न्ततेरप्युपलक्षणम्। पुत्रेभ्यो राज्यं विभज्य न देयम्। तथा च—

रामायणे,

कैकयीं प्रति वाक्यम्—

न हि राज्ञः सुताः सर्वे राज्ये तिष्ठन्ति भामिनि।
स्थाप्यमानेषु सर्वेषु महानविनयो भवेत् ॥
तस्माज्ज्येष्ठेषु पुत्रेषु राज्यतन्त्राणि पार्थिवाः।
आसज्जन्त्यनवद्याङ्गि गुणवत्स्वितरेषु च ॥
तेषु ज्येष्ठेषु पुत्रेषु ज्येष्ठेष्वेव न संशयः।
आसज्जन्त्यखिलं राज्यं न भ्रातृषु कथंचन ॥ इति।

गुणवत्स्वितरेष्विति ज्यायसि दोषसद्भावे कनीयसां मध्ये
एकस्य कस्यचित् राज्यदाने गुणवत्त्वं हेतुत्वेनोपन्यस्तम्। ज्ये-
ष्ठस्यान्धत्वादिदोषसद्भावे न राज्यभाक्त्वम्। तदुक्तम्—

महाभारते,

नान्धः कुरूणां नृपतिरनुरूपस्तपोधन।

तथा,

धृतराष्ट्रस्त्वचक्षुष्ट्वात्तद्राज्यं न प्रपद्यत ।
पारशवत्वाच विदुरो राजा पाण्डुर्बभूव ह ॥

अत्रान्ध्यमुपलक्षणम् बधिरमूकपण्डादीनाम् । तेषां ग्रासाच्छादनमात्रांशित्वेन राज्यप्राप्तिप्रसङ्गस्याप्यभावात् । यथोक्तम्—

**मनुना,**

अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥
सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा ।
ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥

निरिन्द्रियो व्याध्यादिनोपहतेन्द्रियः । अत्यन्तं यावज्जीवम् । अन्धत्वादिदोषेण कुतश्चित्कारणाद्वा त्यक्तराज्यानां ज्येष्ठानां राज्याभावेऽपि तत्पुत्राणां राज्यं भवत्येव । यथाऽसमञ्जःपुत्रस्यांशुमतः । इदं तु राज्याभिषेकात्पूर्वमुत्पन्नस्यान्धादिपुत्रस्य । यदा तु कनीयसोऽभिषेकानन्तरं ज्यायसोऽन्धादेरौरसस्तदा कनीयसोऽभिषिक्तस्यैव पुत्रादेः । यथा पाण्डुपुत्रस्य युधिष्ठिरस्य, नान्धपुत्रस्य दुर्योधनादेः । तथा च—

**महाभारते,**

गुणैः समुदितान् दृष्ट्वा पौराः पाण्डुसुतांस्तदा ।
कथयांचक्रिरे तेषां गुणान् संसत्सु भारत ॥
राज्यप्राप्तिं च सम्प्राप्तं ज्येष्ठं पाण्डुसुतं तदा ।
कथयन्ति स्म सम्भूय चत्वरेषु सभासु च ॥
प्रज्ञाचक्षुरचक्षुष्ट्वाद्धृतराष्ट्रो जनेश्वरः ।
राज्यं न प्राप्तवान् पूर्वं स कथं नृपतिर्भवेत् ॥
तथा शान्तनवो भीष्मः सत्यसन्धो महाव्रतः ।

प्रत्याख्याय पुरा राज्यं न स जातु ग्रहीष्यति ॥
ते वयं पाण्डवं ज्येष्ठं तरुणं वृद्धशीलिनम् ।
अभिषिञ्चाम साध्वग्र्यं सत्यं कारुण्यवेदिनम् ॥

तथा—

अन्यदपि पौरवाक्यम् ।
तान् राज्यं पितृतः प्राप्तान् धृतराष्ट्रो न मृष्यति ।

तथा,

राजपुत्रानिमान् बालान् धृतराष्ट्रो न मृष्यति ।
वयमेतदनिच्छामः सर्व एव पुरोत्तमात् ॥
गृहान् विहाय गच्छामो यत्र गन्ता युधिष्ठिरः ।

तथा,

ततः संवत्सरस्यान्ते यौवराज्याय पार्थिव ।
स्थापितो धृतराष्ट्रेण पाण्डुपुत्रो युधिष्ठिरः ॥

ज्येष्ठपुत्रसुतस्य कनिष्ठपुत्रसमवायेऽपि पौत्रस्यैव राज्यम् । तथा च महाभारते लिङ्गम् ,

शन्तनोः सत्यवतीप्राप्त्यै त्यक्तराज्यस्य भीष्मस्य दाशं प्रत्युक्तिः–

योऽस्यां जनिष्यते पुत्रः स नो राजा भविष्यति ।
इत्युक्तः पुनरेवाथ स दाशः प्रत्यभाषत ॥
यत्त्वया सत्यवत्यर्थे सत्यधर्मपरायण ।
राजमध्ये प्रतिज्ञातमनुरूपं तथैव तत् ॥
नान्यथा तन्महाबाहो संशयोऽत्र न कश्चन ।
तवापत्यं भवेद्यस्तु तत्र नः संशयो महान् ॥
मद्दौहित्रत्वत्पुत्रसमवाये त्वत्पुत्रस्यैव राज्यमतः संशय इत्यर्थः।

भीष्म उवाच ।

राज्यं तावत्पूर्वमेव मया त्यक्तं नराधिपाः ।
अपत्यहेतोरपि च करिष्येऽप्यविनिश्चयम् ॥
अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति । इति ।

सति पुत्रे स राज्याधिकारी स्यादतो ब्रह्मचर्यमङ्गीकृतं भीष्मेण । असत्यौरसे पुत्रे तत्सन्ततौ च क्षेत्रजादीनां क्षत्रियाजातानामुदाहृतकालीपुराणवचनेनोक्त एवाभिषेकः । तेषामपि मातृसमानजातीयत्वेन व्यासोत्पन्नपाण्डोरिव "राजानमभिषेचयेत्" इति विधिप्राप्तेः । तेष्वपि केषां चिन्नाधिकार इत्युक्तम्—

तत्रैव,

पौनर्भवं स्वयंदत्तं दासं राज्ये न योजयेत् । इति ।

गौणस्यापि पुत्रस्याभावे भ्रात्रादीनामधिकारस्य दायक्रमलभ्यत्वात्तत्क्रमविचारो नेह विविच्यते ।

इति राज्याधिकारिनिर्णयः ।

अथाभिषेकः ।

तत्र आथर्वणगोपथब्राह्मणे, अथ राज्ञोऽभिषेकविधिं व्याख्यास्यामो बिल्वप्रभृतीन् सम्भारान् सम्भृत्य षोडश कलशान् षोडश बिल्वानि वल्मीकस्य च मृत्तिकां सर्वान्नं सर्वरसान् सर्वबीजानि । तत्र चत्वारः सौवर्णाश्चत्वारो राजताश्चत्वारस्ताम्राश्चत्वारो मृन्मयाः । तान् ह्रदे सरसि वोर्ध्वस्रुतो नामैनाम इत्युदकेन पूरयित्वा वेदिपृष्ठे संस्थाप्य कुम्भेषु बिल्वमेकैकं दद्यात् । सर्वान्नं सर्वरसान् सर्वबीजानि च प्रक्षिप्याभयैरपराजितैरायुष्यैः स्वस्त्ययनैः सौवर्णेषु सम्पातान्, संस्राव्यैः संसिक्तीयैश्च राजतेषु, भैषज्यैरंहोमुचैस्ताम्रेषु, संवेशसंवर्गाभ्यां शा-

न्तातीयैः प्राणसूक्तेन च मृन्मयेषु। ततस्तान् कलशान् गृहीत्वा स्तोत्रियैः पवित्रियै राजानमभिषिञ्चेत्। भूमिमिन्द्रियं च वर्द्धयित्वा क्षत्रियं म इति सिंहासनमारूढमभिमन्त्रयेत्। एवमभिषिक्तस्तु रसान् प्राश्नीयाद्विप्रेभ्यश्च दद्याद्गोसहस्रं सदस्येभ्यः, कर्त्रे ग्रामवरं, विपुलं यशः प्राप्नोति भुङ्क्ते धरां जितशत्रुः सदा भवेदिति।

अन्नं यदुप्तं न प्ररोहति। बीजं प्ररोहार्हं ब्रीह्यादि। ऊर्ध्वस्रुत ऊर्ध्वमुखान्। नामेत्यादयो मन्त्राः। तत्र कपिञ्जलाधिकरणन्यायेन बहुवचनेन त्रयाणां त्रयाणामुपादानम्। संवेशसंवर्गप्राणसूक्तेष्वेकैकस्य। भूम्यादिर्मन्त्रः।

ब्रह्मपुराणेऽपि,

नगरं तत्र कर्तव्यं पताकाध्वजसङ्कुलम्।
नीरजस्कास्तथा कार्या राजमार्गाः शुभैर्जलैः॥
पौरैः स्नातैः सुवस्त्रैश्च भाव्यं मङ्गलपाणिभिः।
गन्तव्यं वारमुख्याभिस्तथा राजनिवेशनम्॥
पौरमुख्यैस्तथा वाद्यैर्गणमुख्यैस्तथैव च।
शोभनीयं च नगरं सविलासैश्च नर्तकैः॥
स्नानकाले च कर्तव्यो महाकोलाहलस्तथा।
वादित्रशङ्खपुण्याहैः सूतमागधवन्दिभिः॥
सामन्तैर्मन्त्रिभिर्भाव्यं छत्रचामरपाणिभिः।
आदौ कृत्वा महाशान्तिं पुण्यां वैनायिकीं शुभाम्॥
ग्रहशान्तिं तथा श्रेष्ठां तृतीयामाहुतिं तथा।
पुरोधाः सोपवासश्च श्रुतिस्मृतिसमन्वितः॥
त्रयोदश महामन्त्रान् तर्पयेज्जातवेदसि।
गणं चैवाप्रतिरथं सत्याधर्मगणौ तथा॥

---

१ पू०मी० अ० ११। पा० १। अधि० ८।

आयुष्यमभयं चैव तथा स्वस्त्ययनं परम् ।
वैष्णवानथ मन्त्रांश्च तथा पौरन्दरानपि ॥
सावित्रब्राह्मरौद्रांश्च वारुणानथ सर्वदा ।

ऋतापाडितित्रयोदश महामन्त्राः। गण इद्गत्यामहेत्यादयः। अप्रतिरथः आशुः शिशान इति। सत्यगणः आगात्सत्यमिति। अघमर्षगणः यास्ते अग्ने घोरास्तनुव इति। आयुष्यं आयुष्यमिति सूक्तम्। अभयं यत इन्द्रभयामह इति। स्वस्त्ययनं स्वस्तिदा इति।

राजा स्नातः पुनः स्नाप्यः पञ्चगव्येन देववत् ॥
मृत्ताम्रहेमरौप्योत्थैर्जलपूर्णैस्ततो घटैः ।
तोयेन शूद्रैः स्नाप्यश्च पश्चिमां दिशमास्थितैः ॥
ततः क्षीरेण वैश्यैश्च दक्षिणस्यां दिशि स्थितैः ।
क्षत्रियैश्च ततो दध्ना पूर्वस्यां दिश्यवस्थितैः ॥
अमृतेन ततो विप्रैर्घृतेनोत्तरतः स्थितैः ।
पर्वतोत्थमृदा पश्चाद्राज्ञः शोध्यं शिरो द्विजैः ॥
वल्मीकमृदया कर्णौ शोधितव्यौ प्रयत्नतः ।
शक्रस्थानाच्च मृदया ग्रीवा शोध्या च भूभृतः ॥
राजवेश्मगृहद्वारमृदया हृदयं तथा ।
देवालयमृदा पृष्ठं शोध्यं तस्याथ राजभिः ॥
गजदन्तोद्धृतमृदा दक्षिणस्तु तथा भुजः ।
शोधनीया शनैर्नासा वृषशृङ्गविलग्नया ॥
कटीदेशस्ततो वेश्यावेश्याद्वारमृदा तथा ।
नदीकूलमृदा पार्श्वे शोधितव्ये यथाक्रमम् ॥
अश्वशालामृदा शूद्रैः शोध्ये तस्याथ जानुनी ।
गोकुलान्मृदया जङ्घे पादौ च सरसो मृदा ॥

सर्वौषधैः सर्वबीजैर्गन्धैरन्नैश्च सर्वदा ।
सर्वपुष्पैः सर्वफलैः स्नाप्यो रोचनया तथा ॥
अथ भद्रासनगतः सर्वतोयैः शुभाम्बरैः ।
यथाशक्त्या समानीतैः पुरस्कृत्य पुरोहितैः ।
नृपतिस्त्वभिषेक्तव्यो दैवज्ञवचनान्नरैः ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रमुख्यैस्तथैव च ।
पतिव्रताभिर्नारीभिः पुत्रिणीभिश्च पुत्रवत् ॥
ततः स्नातो विलिप्ताङ्गः कृतदेवाग्नितर्पणः ।
आबद्धमुकुटः स्रग्वी बद्धपट्टो विभूषितः ॥
मङ्गलानां शतं पश्येत्पुण्यमष्टोत्तरं शतम् ।
शान्त्यै प्राधानिके स्थाने सर्वमेतद्यथाक्रमम् ॥
कृत्वा शेषं ततो हुत्वा दद्यात्पूर्णाहुतिं ततः ।
अभिषिक्तस्ततो राजा साम्राज्यादौ विनायकम् ॥
ततः क्रमेण देवांश्च ब्रह्मविष्णुमहेश्वरान् ।
ग्रहान्नीलं च नागेन्द्रमग्निं विप्रान् पुरोहितम् ॥
देवान् पितॄन् समुद्दिश्य दद्याद्विप्रेषु दक्षिणाम् ।
अभयं सर्वभूतेषु सम्यक्तत्र ददाति च ॥
आघातस्थानगान् सर्वान् पशूनपि विमोचयन् ।
आघातस्थानं हननस्थानम् ।
बन्धनस्थानसंस्थांश्च प्रमोचयति शास्त्रवत् ।
गोब्राह्मणादिहन्तॄंश्च पापिष्ठान् दारुणानपि ॥
जहाति हस्तिहन्तॄंश्च क्रूरांश्चापि सुशिक्षितान् ।
व्याघ्रचर्मोत्तरे रम्ये तथा सिंहासने शुभे ॥
उपवेश्यो भवेद्राजा स्वयमेव पुरोधसा ।
सिंहासनस्थः सम्पश्येत्प्रकृतीश्च समासतः ।

छत्रायुधानि सम्पूज्य गणमुख्यांस्तुरङ्गमान् ॥
आरुह्यालङ्कृतं नागं विसृजन् धनसञ्चयम् ।
प्रदक्षिणीकृत्य पुरं प्रविश्य च पुरं गृहम् ॥
समस्तान् पौरमुख्यांश्च कृत्वा पूजां विसर्जयेत् ।
गतेषु तेषु च धनैस्तर्पयेन्नटनर्त्तकान् ॥
ब्राह्मणान् भोजयेत्सर्वान् दीनानाथांश्च बान्धवान् ।
ततो महाजनैः सार्द्धं पूर्वराजक्रमादिभिः ॥
आहारं कुरुते राजा राजभृत्यान् विसृज्य च ।
आचम्य ताम्बूलमुखो विहरेत ततः क्षणम् ॥
ततः कतिपयैः सार्द्धमन्तःपुरनिवासिभिः ।
रक्षेत्सपत्नादात्मानं भूयो भुङ्क्ते यथासुखम् ॥ इति ।

श्रीरामायणेऽपि सम्भारसम्पादनपूर्वकमभिषेक उक्तः—

शनैस्तस्मिन् प्रशान्ते तु जनघोषे नराधिपः ।
प्रणम्य गुरुमासीनमित्युवाच पुरोहितम् ॥
अभिषेकाय रामस्य यत्कर्म सपरिच्छदम् ।
तदस्य भगवन् सर्वमाज्ञापयितुमर्हसि ॥
तच्छ्रुत्वा भूमिपालस्य वसिष्ठो द्विजसत्तमः ।
आदिदेशाग्रतो राज्ञः स्थितान् युक्तान् कृताञ्जलीन् ॥
युक्तान् नियोगिपुरुषान् ।
सुवर्णादीनि रत्नानि मणीन् सर्वौषधीरपि ।
शुक्लं च माल्यं लाजांश्च पृथक्च मधुसर्पिषी ॥
अहतानि च वासांसि रथं सर्वायुधानि च ।
सितवर्णं च तुरगं गजं च शुभलक्षणम् ॥
चामरव्यजने चोभे ध्वजं छत्रं च पाण्डुरम् ।
शतं च शातकुम्भानां कुम्भानामग्निवर्चसाम् ॥

हिरण्यशृङ्गं वृषभं समग्रं व्याघ्रचर्म च ।
यच्चान्यत्किञ्चिदेष्टव्यं यच्च किञ्चिन्मनोऽनुगम् ॥
उपास्थापयत प्रातरग्न्यगारे महीपतेः ।
अन्तःपुरस्य द्वाराणि सर्वस्य नगरस्य च ॥
चन्दनैः स्रग्भिरर्च्यन्तां सुमनोदामभिस्तथा ।
प्रशस्तवस्तु गुणवद्दधिक्षीरोपसेचनम् ॥
द्विजानां शतसाहस्रं यत्प्रकाममलं भवेत् ।
सिद्धमत्राद्य सम्भारं प्रत्युपस्येव कल्प्यताम् ॥
सूर्येऽभ्युदितमात्रे श्वो भविता स्वस्तिवाचनम् ।
ब्राह्मणाश्च निमन्त्र्यन्तां कल्प्यन्तामासनानि च ॥
आबध्यन्तां पताकाश्च राजमार्गश्च सिच्यताम् ।
सर्वे च नागराश्चैव गणिकाश्च स्वलङ्कृताः ॥
कक्ष्यां द्वितीयामासाद्य तिष्ठेयुर्नृपवेश्मनि ।

कक्ष्यां प्रकोष्ठम् ।

देवायतनचैत्येषु जलभक्ष्याः सदक्षिणाः ॥
उपस्थापयितव्याश्च माल्ययोगाः पृथक्पृथक् ।
बद्धदीर्घासयो योधाः सन्नद्धा मृष्टवाससः ॥
महाराजस्य भवनं प्रविशन्तु महोदयम् ।
एवमाज्ञाप्य तत्सर्वं कृतमित्यभ्यवेदयत् ॥
सुप्रीतमनसे राज्ञे वसिष्ठो हर्षयन् पुनः ।

तथा,

आभिषेचनिकं द्रव्यं सर्वमेवोपकल्पितम् ।
गङ्गायमुनयोश्चैव सङ्गमादाहृतं जलम् ॥

---

१ तत्सर्वमुपकल्प्यताम्—इत्यपि पाठः ।

याश्चान्याः सरितः पुण्यास्ताभ्यश्च जलमाहृतम् ।
सर्वबीजानि गन्धाश्च रत्नानि विविधानि च ॥
वाहनं नरसंयुक्तं दर्भाः सुमनसः पयः ।
अहतानि च वासांसि भृङ्गारं च हिरण्मयम् ॥
क्षीरवृक्षप्रवालैश्च पश्चात्फलविमिश्रितैः ।
पूर्णकुम्भाः सुलक्षण्याः काञ्चना उपकल्पिताः ॥
रसो गोरोचना चैव लाजा दधि घृतं मधु ।
तथैव पुण्यतीर्थेभ्यो मृदापो जङ्गमानि च ॥
चन्द्रांशुविमले चारुमणिदण्डे स्वलङ्कृते ।
चामरव्यजने श्रीमद्रामार्थमुपकल्पिते ॥
पूर्णेन्दुमण्डलाभं च श्रीमन्माल्यविभूषितम् ।
रामस्य यौवराज्यार्थमातपत्रं प्रकल्पितम् ॥
मत्तो गजवरश्चैव औपवाह्यः प्रतीक्षते ।
औपवाह्यः राजवाह्यः ।
श्वेतश्च तुरगश्चैव रामार्थमुपकल्पितः ॥
अष्टौ कन्याश्च मङ्गल्याः सर्वाभरणभूषिताः ।
रूपयौवनसम्पन्ना गणिकाश्च स्वलङ्कृताः ॥
श्वेतपुष्पाणि धेनुश्च निस्त्रिंशो धनुरेव च ।
हेमदाम्ना स्वलङ्कृतय ककुद्मी पाण्डुरो वृषः ॥
सिंहासनं व्याघ्रचर्म समिद्धश्च हुताशनः ।
वादित्राणि च सर्वाणि सूतमागधवन्दिनः ॥
अमात्या ब्राह्मणा गावः पुण्याश्च मृगपक्षिणः ।
पौरजानपदाः श्रेणीर्नैगमानां गणैः सह ॥
एते चान्येऽपि बहवः प्रीयमाणाः प्रियंवदाः ।
नैगमाः रत्नादीनां वाणिज्यकर्तारः ।

तथा,

गते पुरोहिते रामस्ततो नियतमानसः।
सह पत्न्या विशालाक्ष्या नारायणमुपागमत्॥
प्रगृह्य शिरसा पात्रं हविषो विधिवत्ततः।
महते दैवतायाज्यं जुहाव ज्वलितेऽनले॥
शेषं च हविषस्तस्य प्राश्याशास्यात्मनिश्चयम्।
ध्यायन्नारायणं देवं स्थण्डिले कुशसंस्तरे॥
वाग्यतः सह वैदेह्या भूत्वा च नियतात्मवान्।
श्रीमत्यायतने विष्णोः शिश्ये नरवरात्मजः॥
कृतोपवासं रामं तु वैदेह्या सहितं तदा।
सदर्भायां क्षितौ सुप्तं शुश्राव विधिवज्जनः॥
विष्णुधर्मोत्तरे तु पुरन्दरशान्तिपूर्वकोऽभिषेक उक्तः।
कार्या पौरन्दरी शान्तिः प्रागेवास्य पुरोधसा।
प्राप्तेऽभिषेकदिवसे सोपवासः पुरोहितः॥
सोष्णीषः श्वेतवसनः सितचन्दनभूषितः।
सितमाल्योपवीतश्च सर्वाभरणभूषितः॥
वेदिमुल्लिख्य मन्त्रेण हुत्वा च विधिवत्ततः।
जुहुयाद्वैष्णवान्मन्त्रांस्तथा शाक्रान् विचक्षणः॥
सावित्रान् वैश्वदेवाद्यान् सौम्यांश्च विधिवत्ततः।
आयुः शर्मगणं चैव तथा स्वस्त्ययनं गणम्॥
आयुष्यमभयं चैव तथा चैवापराजितम्।
सम्पातवन्तं कलशं तथा कुर्याच्च काञ्चनम्॥
वह्नेर्दक्षिणपार्श्वस्थः श्वेतचन्दनभूषितः।
श्वेतानुलेपनः स्रग्वी सर्वाभरणभूषितः॥
आसनस्थः सुखं पश्येन्निमित्तानि हुताशने।

पश्येयुरन्ये च तथा नृसिंहा दैवज्ञवाक्यं निपुणं च भूयः ।
सांवत्सरस्याथ सदस्यमुख्याः सदस्यमुख्यश्च पुरोहितश्च ॥
प्रदक्षिणावर्त्तशिखस्तप्तजाम्बूनदप्रभः ।
रथौघमेघनिर्घोषो विधूमश्च हुताशनः ॥
अनुलोमा सुगन्धिश्च स्वस्तिकाकारसन्निभः ।
वर्द्धमानाकृतिश्चैव नन्द्यावर्तनिभस्तथा ॥
प्रसन्नार्चिर्महाज्वालः स्फुलिङ्गरहितो हितः ।
*स्वाहा अवसाने ज्वलनविशेषणम् । मध्येन होतुरग्नेश्च । प्रस्तरस्य दर्भमुष्टेः ।
स्नानं समारभेत्प्राज्ञो होमकाले पुरोहितः ।
होमकाले होमसमाप्तौ ।
आदौ तु स्वेच्छया स्नातः पुनर्मृद्भिः समारभेत् ।
पर्वताग्रमृदा तावन्मूर्द्धानं शोधयेन्नृप ॥
वल्मीकाग्रमृदा कर्णौ वदनं केशवालयात् ।
इन्द्रालयात्तदा ग्रीवां हृदयं तु नृपाजिरात् ॥
करिदन्तोद्धृतमृदा दक्षिणं तु तथा भुजम् ।
वृषशृङ्गोद्धृतमृदा वामं चैव तथा भुजम् ॥
सरोमृदा तथा पृष्ठमुदरं सङ्गमान्मृदा ।
नदीकूलद्वयमृदा पार्श्वौ संशोधयेत्तथा ॥
वेश्याद्वारमृदा राज्ञः कटिशौचं विधीयते ।
गजस्थानात्तथैवोरू गोस्थानाज्जानुनी तथा ॥
अश्वस्थानात्तथा जङ्घे राज्ञः संशोधयेद्बुधः ।
रथचक्रोद्धृतमृदा तथैव चरणद्वयम् ॥
मृत्पूतः स्नपनीयः स्यात्पञ्चगव्यजलेन तु ।

* अतः पूर्वं किञ्चित् त्रुटितं भाति ।

पञ्चगव्येन, जलेन कुशोदकेन च।
ततो भद्रासनगतं मुख्यामात्यचतुष्टयम्।
बलप्रधानं भूपालमभिषिञ्चेद्यथाविधि ॥
पूर्वतो हेमकुम्भेन घृतपूर्णेन वाडवः।
वाडवो ब्राह्मणः।
दक्षिणे क्षीरपूर्णेन रौप्यकुम्भेन क्षत्रियः ॥
दध्ना च ताम्रकुम्भेन वैश्यः पश्चिमतस्तथा।
कौबेर्य्यां मधुकेनाथ छन्दोगोऽथ कुशोदकैः ॥
मधुना कुशोदकैश्च छन्दोगः।
सम्पातवन्तं कलशं तथाऽऽहृत्य पुरोहितः।
विधाय वह्निरक्षां तु सदस्येषु यथाविधि ॥
विधाय वह्निरक्षाम्—वह्निं रक्षध्वमित्युक्त्वा।
राजसूयाभिषेके तु ये मन्त्राः परिकीर्त्तिताः ॥
ते च मन्त्रा वक्ष्यन्ते।
तैस्तु दद्यान्महाभाग ब्राह्मणानां स्वरेण तु।
स्वरेण मन्त्रघोषेण।
ततः पुरोहितो गच्छेद्वेदिमूलं तथैव तु ॥
वेदिमूलं कुण्डम्।
विभूषितं तु राजानं संस्थितं भद्र आसने।
भद्रासनलक्षणम्—
देवीपुराणे,
हैमं च राजतं ताम्रं क्षीरवृक्षमयं च वा।
भद्रासनं च कर्त्तव्यं सार्द्धहस्तसमुच्छ्रितम् ॥
सपादहस्तमानं च राज्ञो माण्डलिकान्तरात्।

वराहसंहितायामपि,

त्रिविधस्तस्योच्छ्रायो हस्तः, पादाधिको,ऽर्द्धयुक्तश्च ।

माण्डलिकानन्तरजित्समस्तराज्यार्थिनां शुभदः ॥ इति ।

तच्च भद्रासनं नूतनमेव कार्यम् । तदुक्तम्—

विष्णुधर्मोत्तरे,

भद्रासनं च छत्रं च वालव्यजनमेव च ।

खड्गं चक्रं तथा चापं रत्नानि विविधानि च ॥

राज्ञो मृतस्य ये त्वासन् सर्वं एते नराधिप ।

न ते कार्या नरेन्द्रस्य तेन दैववेदा तदा ॥

कामं सांवत्सरः कार्योऽथालाभेऽन्यस्य भूभुजा ।

गुणाधिकाश्चेन्नो कार्या येऽन्येऽत्राभिहिता मया ॥ इति ।

पूर्वे चेद्गुणाधिकास्तदा ये अन्ये कर्त्तव्या इत्यभिहितास्ते नो कार्या इत्यर्थः ।

तथा तत्रैव,

शतच्छिद्रेण पात्रेण सौवर्णेन यथाविधि ।

अभिषिञ्चेत धर्मज्ञः सम्यग्वेदविशारदः ॥

या ओषधीरोषधिभिः श्रुताभिः सुसमाहितः ।

ओषधिभिः अष्टौषधिगर्भकुम्भोदकेन ।

रथे तिष्ठति गन्धैश्च आब्रह्मन्ब्राह्मणेति च ।

गन्धैः सर्वगन्धकुम्भोदकेन ।

वीजैः पुष्पैस्तथासीनं रामं पुष्पवतीति च ।

वीजैः वीजपूर्णकुम्भोदकेन । पुष्पैः पुष्पपूर्णकुम्भोदकेन । पुष्पवतीत्याथर्वणो मन्त्रः ।

तेनैव चैव मन्त्रेण फलैस्तमभिषेचयेत् ॥

आशु' शिशान इत्येवं सर्वरत्नैश्च भार्गव ।

ये देवाः पुरः सदेति कुशाद्भिः परिमार्जयेत् ॥
ऋग्वेदवित्ततो राज्ञो रोचनया यथाविधि ।
मूर्द्धानं च तथा कण्ठं गन्धद्वारेति संस्पृशेत् ॥
ततो ब्राह्मणमुख्याश्च क्षत्रियाश्च विशस्तथा ।
शूद्राश्चावरमुख्याश्च नानातीर्थसमुद्भवैः ॥
अवरमुख्या मूर्द्धावसिक्तादयः ।
नादेयैः सारसैः कौपैर्नानाकलशसंस्थितैः ॥
चतुःसागरजैर्लाभादलाभे द्विजकल्पितैः ।
गङ्गायमुनयोश्चैव निर्झरैश्च तथा द्विजैः ॥
छत्रपाणिर्भवेत्कश्चित्केचिच्चामरपाणयः ।
अमात्यमुख्यास्तत्कालं केचिद्वेत्रधरास्तथा ॥
शङ्खभेरीनिनादेन वन्दिनां निस्वनेन च ।
गीतवादित्रघोषेण द्विजकोलाहलेन च ॥
राजानमभिषिञ्चेयुः समेत्य सहिता जनाः ।
सर्वलोकाभिषिक्तस्य सम्मिश्रजलसंयुतम् ॥
सम्मिश्रजलानि नादेयादीनि दश ।
सर्वौषधियुतं पुण्यं सर्वगन्धयुतं तथा ॥
रत्नबीजसमायुक्तं फलपुष्पयुतं तथा ।
पूजितं सितसूत्रेण वेष्टितग्रीवमेव च ॥
पूजितम्—सर्वतो गन्धादिनाऽभ्यर्चितम् ।
श्वेतवस्त्रावकान्तैश्च संवीतं शुचि भूषितम् ।
अवकाः शैवालम् ।
क्षीरवृक्षलताच्छन्नं सुदृष्टं काञ्चनं नवम् ॥
आदाय कलशं राज्ञः स्वयं सांवत्सरस्तदा ।
मन्त्रावसाने कलशं दद्याद्भृगुकुलोद्वह ॥

मन्त्राः सुरास्त्वा इत्यादयो वक्ष्यमाणाः ।
ततः पश्येन्मुखं राजा दर्पणे वापि सर्पिषि ॥
सोष्णीषः सितवस्त्रश्च मङ्गलालम्भनं ततः ।
कृत्वा सम्पूजयेद्विष्णुं ब्रह्माणं शङ्करं तथा ॥
लोकपालं ग्रहांश्चैव नक्षत्राणि च भार्गव ।
ततः स्वपूजां कुर्वीत शयनीयं ततो व्रजेत् ॥
व्याघ्रचर्मोत्तरं रम्यं सितवस्त्रोत्तरच्छदम् ।
पुरोधा मधुपर्केण तत्रस्थं तं समर्चयेत् ॥
राजाऽऽर्द्रौ चार्चयेत्तत्र सांवत्सरपुरोहितौ ।
मधुपर्केण धर्मज्ञस्ततस्तस्य स दैववित् ॥
पट्टबन्धं प्रकुर्वीत मुकुटस्य च बन्धनम् ।
पट्टलक्षणं तु—
देवीपुराणे,
सर्वस्नानमलङ्कारं रोचनाख्यं च पट्टकम् ।
वृद्ध्याऽव्यङ्गुलमङ्गुल्या षट्त्रिंशदङ्गुलावधि ॥
वृत्तं वा चतुरस्रं वा पद्मकत्रिकगर्भितम् ।
वत्सेशपद्ममत्स्येभगोस्वस्तिकविनायकैः ॥
श्रीश्रीवृक्षवराहेभस्वामिदेवीशुभान्वितम् ।

अव्यङ्गुलं सप्ताङ्गुलम्, अङ्गुल्या एकया सहितमष्टाङ्गुलम् इत्येकं पट्टलक्षणम्, तदारभ्य सप्ताङ्गुलकृतवृद्ध्या चत्वारि लक्षणानि, एवं पञ्चविधः । तस्य दैर्घ्यार्धेन मध्यदेशविस्तारः, तदर्धेन प्रान्तद्वयविस्तारः । स एवं वृत्तः कोणरहितश्चतुरस्रो वा । वत्सेशः श्रीवत्सधारी विष्णुः । इभो हस्ती, महामात्राधिष्ठितः । गौः स्त्रीगवी । केवल एव हस्ती वृषभश्च निषिद्धो—

विश्वकर्मणा,

व्याघ्रव्यालगजसिंहा अश्वोष्ट्रौ महिषो वृषः ।
भूषणेषु त्यजेदष्टौ यदीच्छेद्दीर्घजीवितम् ॥ इति ।

श्रीवृक्षो विल्वः । इभो गणेशः । स्वामी कार्त्तिकेयः । वराहसंहितायामपि दैर्घ्यादिमानं भङ्ग्यन्तरेणोक्तम्, मध्यविस्तारमुक्ता ।

सर्वे द्विगुणायामा मध्यादर्धेन तदर्धविस्ताराः ।
सर्वे विशुद्धकाञ्चनविनिर्मिताः श्रेयसो वृद्ध्यै ॥
पञ्चशिखो भूमिपतेस्त्रिशिखो युवराजमहिष्योः ।
एकशिखः सैन्यपतेः प्रसादपट्टो विना शिखया ॥ इति ।

विष्णुधर्मोत्तरे,

ततः स वद्धमुकुटः काले पूर्वं मयोदिते ।
परार्द्ध्यास्तरणोपेते मञ्चे वद्धोत्तरच्छदे ॥

परार्द्ध्यं वहुमूल्यम् ।

ध्रुवाद्यौरितिमन्त्रेण सोपवेश्यः पुरोधसा ।
वृषस्य वृषदंशस्य द्वीपिनश्च भृगूद्वह ॥
तेषामुपरि सिंहस्य व्याघ्रस्य च परं ततः ।

वृषदंशो मार्जारः । द्वीपी चित्रकः ।

तत्रोपविष्टस्य तदा प्रतीहारः प्रदर्शयेत् ।
अमात्यांश्च तथा पौरान्नैगमांश्चापणेश्वरान् ॥
तथा प्रकृतयश्चान्या यथावदनुपूर्वशः ।
ततोऽग्रहारवस्त्रेभतुरङ्गकनकोत्तमैः ॥
गोजाविगृहदानैश्च सांवत्सरपुरोहितौ ।
पूजयित्वा ततः पश्चात् पूजयेद्ब्राह्मणत्रयम् ॥
अनेनैव विधानेन येन राजाऽभिषेचितः ।
ततः सदस्यान्सम्पूज्य सांवत्सरपुरोधसः ॥

ततो ब्राह्मणमुख्यानां पूजनं तु समाचरेत् ।
गोवस्त्रतिलरूप्यान्नफलकाञ्चनगोरसैः ॥
मोदकैः श्वेतपुष्पैश्च महीदानैश्च सुव्रत ।

आथर्वणपरिशिष्टे तु विशेषः ।

मधुपर्काद्येन विधिना सर्वार्घं सम्पाद्य दक्षिणां दद्यात्, कोटिमध्यात्तृतीयं भागं यथाभूमिप्रमाणेन वा । हस्त्यश्वरथयानं दिव्यमाभरणमातपत्रं हिरण्यं क्षितिगोधनधान्यरत्नादिकं स्वगुरवे दद्यात्, येन वा तुष्येत । इति ।

तदुत्तरकर्त्तव्यं च विष्णुधर्मोत्तरे अभिहितम्—

मङ्गलालम्भनं कृत्वा गृहीत्वा सशरं धनुः ।
वह्निं प्रदक्षिणं कृत्वा प्रणिपत्य तथा गुरून् ॥
पृष्ठतो वृषमालभ्य गां सवत्सां च पार्थिव ।
पूजयित्वा तुरङ्गं च मन्त्रितं चाभिषेचितम् ॥
तमारुह्य ततो नागं पूजयेच्चाभिषेचितम् ।
मन्त्रितं दक्षिणे कर्णे स्वयं दैवविदा ततः ॥
आरुह्य राजमार्गेण स्वपुरं तु परिभ्रमेत् ।
मुख्यामात्यैः ससामन्तैः सांवत्सरपुरोहितैः ॥
सहितः कुञ्जरारूढैरभिगच्छेच्च देवताः ।
तासां सम्पूजनं कृत्वा नगरे या निषेविताः ॥
प्रविश्यान्तर्गृहं राजा प्रहृष्टनरवाहनः ।
दानमानादिसत्कारैर्गृह्णीयात्प्रकृतीस्ततः ॥
सम्पूजितास्ताश्च विसर्जयित्वा गृहे स्वके स्यान्मुदितो महात्मा ।
विधानमेतत्समवाप्य राजा कृत्स्नां च धात्रीं वशगां विदध्यात् ॥

वृद्धवसिष्ठोऽपि,

प्राग्भागे मन्दिरस्याथ गोमयेन तु कारयेत् ।

मण्डलं चतुरस्रं तद्वर्णिकैः समलङ्कृतम् ॥
तत्र भद्रासनं सम्यगर्चयेत्सुमनोरमम् ।
गङ्गातोयसमापूर्णस्वर्णकुम्भोदकैः सह ॥
दिग्विदिक्षु स्थितैः शुक्लगन्धमाल्याम्बरार्चितैः ।
शतौषधीमूलहेमरत्नसद्बीजपल्लवैः ॥
मृत्तिकावृषशृङ्गं च गजदन्तं च रोचनम् ।
उत्पलं पद्मकं पद्ममुरारेणुककुङ्कुमम् ॥
राजसर्षपमुस्तं च देवदारुसमन्वितम् ।
देवस्यत्वेतिमन्त्रेण आयुःपुष्टियशस्करैः ॥
आभिषेकैर्वेदमन्त्रैः शुभलग्ने शुभान्विते ।
भद्रासनस्थे नृपतावभिषेकं तु कारयेत् ॥
नीराजनं च कर्त्तव्यं शङ्खवादित्रनिःस्वनैः ।
आशिषो वाचनं कृत्वा चार्चयेच्च सुरान् पितॄन् ॥
आयुधानि च पट्टं च विप्रान् गन्धादिनाऽर्चयेत् ।
ब्रूयात्प्रत्यङ्मुखो राजा नमामि त्वोद्धरेति च ॥
प्राच्यां त्वामभिषिञ्चन्तु वसवस्तेजसे श्रियै ।
याम्यायामभिषिञ्चन्तु त्वां रुद्रा विजयाय च ॥
आदित्या अभिषञ्चन्तु प्रतीच्यां दिशि वृद्धये ।
विश्वेदेवास्तथोदीच्यामभिषिञ्चन्तु पुष्टये ॥
दिगीशास्त्वभिषिञ्चन्तु त्वां सदा विजयाय च ।
साम्राज्यमितिमन्त्रेण राजानं सम्यगर्चयेत् ॥
व्याघ्रचर्मण्यथासीनं नवालङ्कारभूषितम् ।
भृत्यचामरसंयुक्तं राजचिह्नसमान्वितम् ॥
पुरोहितश्च जुहुयात्सावित्र्याऽसौ प्रयत्नतः ।
उदुम्बरसमिद्भिश्च आज्येनाष्टोत्तरं शतम् ॥

विद्वत्पुरोहितामात्यवृद्धैर्बन्धुसमन्वितः ।
तदा सञ्चिन्त्य सप्ताङ्गं प्रजा धर्मेण पालयेत् ॥
एवं यः कुरुते सम्यक् स राजा वर्द्धते चिरम् ॥ इति ।

सामविधानब्राह्मणेऽपि, राजानमभिषेचयेत्तिष्येण श्रवणेन वा। व्रीहियवैस्तिलमाषैर्दधिमधुसुमनोजातरूपैर्यशस्विनीभ्यो नदीभ्यः समुद्राच्चोदकान्याहृत्यौदुम्बरे भद्रासने वैयाघ्रे चर्मण्युत्तरलोम्न्यासीनं जीवन्तीनां गवां शृङ्गकोशैरभिषिञ्चेदभ्रातृव्य इति रहस्येन । यमेवं कामयेतैकराजः स्यान्नास्य चक्रं प्रतिहन्येतेत्येकवृषेणाभिषिञ्चेत् । अभिषेक्त्रे दद्याद्ग्रामवरं दासीशतं गोसहस्रं तदधीनश्च भवेत् । इति ।

अस्यार्थं माधवाचार्य आह–पुरोहितो राजानमभिषेचयेत् अभिषिञ्चेत्, वक्ष्यमाणैः साधनैः । यद्यपि राजशब्दः अभिषेकसंस्कृतस्य क्षत्रियस्य वाचकस्तथापि भाविनीं संज्ञामाश्रित्य "यूपं तक्षति" इत्यादिवत् अभिषेक्तव्यराजानमित्युपचारप्रयोगः । अवेष्ट्यधिकरणे तु भाविसंज्ञां प्रत्याख्याय यूपं तक्षतीत्यनेन वैषम्यमुक्तम् । तिष्यः पुष्यः । व्रीह्यादिजातरूपान्तैर्द्रव्यैर्मिश्रितैः । यशस्विनीभ्यः पावनत्वप्रयुक्तख्यातियुक्ताभ्यो गङ्गातुङ्गभद्रादिभ्यो नदीभ्यः समुद्राच्चोदकानि पृथक्पृथगाहृत्य तैः उदुम्बरसम्बन्धिनि भद्रासने चतुष्पदोपेते पर्यास्तृते व्याघ्रचर्मणि उपरिस्थितलोम्नि आसीनं जीवोपेतानां गवां शृङ्गाणि च्छित्वा तदग्रच्छिद्रनिःसृतैर्जलैरभ्रातृव्य इति रहस्येन साम्ना, उदकानि शृङ्गकोशैरिति उभयत्र बहुवचननिर्देशात्पृथक् गङ्गाद्युदकैरभिषिञ्चेत् । पृथगाहरणस्यापीदमेव प्रयोजनम् । कामनाभेदेन मन्त्रविशेषमाह—पुरोहितो यं राजानमेवं कामयेत कृत्स्नस्य भूमण्डलस्यैक एव राजा

स्यान्नास्य चक्रे भूमण्डलं केनाचिदपि वैरिणा प्रतिहतं भवेत् इति, तं रहस्यस्थाने एकवृषेणेतिसाम्नाऽभिषिञ्चेत्। अन्यत्प्रागुक्तमेव। राजा पुरोहितायोत्कृष्टं ग्रामं दासीशतं सहस्रं गाश्च दद्यात्तदधीनश्च भवेत्। अत्र यादृशं पुरोहितं कुर्यात्तादृश उक्त—

आथर्वणे,

तस्मात्कुलीनं श्रोत्रियं भृग्वङ्गिरोविदं विनयाकृतिशौचाचारयुक्तमलोलुपं व्रतनियमचारित्रवृत्तलक्षणगुणसम्पन्नं सन्धिविग्रहचिकित्सकं माहेन्द्रजालभूतकर्मादिष्वभिविन्दकं जितस्थानासनं हिमातपवर्षसहं ह्रीधृतिकर्मार्जवशमदयादानशक्तिसम्पन्नं बृहस्पत्युशनसोः (कृतौ पारगं) स्थानाकृतिप्रमाणवर्णश्रुतवपुषा चानुमेयं तेजस्विनं गम्भीरं सत्त्वयुक्तं गुरुं वृणुयाद्भूपतिरिति।

विष्णुस्मृतौ,

वेदेतिहासधर्मशास्त्रेषु कुशलं कुलीनमव्यङ्गं तपस्विनं च पुरोहितं कुर्यात्। इति।

गौतमे,

ब्राह्मणं च पुरोदधीत विद्याभिजनवाग्रूपवयःशीलसम्पन्नं न्यायवृत्तं तपस्विनम्। इति।

आथर्वणपरिशिष्टे,

तस्माद्गुरुं वेदरहस्ययुक्तं चतुर्विधे कर्मणि चाप्रमत्तम्।
शान्तं च दान्तं च जितेन्द्रियं च कुर्यान्नरेन्द्रः प्रियदर्शनं च॥इति।

याज्ञवल्क्ये,

पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम्।
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा॥

सर्वेषु दृष्टादृष्टार्थेषु कर्मसु पुरो निहितं दानमानसत्कारैरा-

त्मसम्बन्धिनं कुर्यात्। दैवज्ञं ग्रहोत्पाततच्छमनादेर्वेदितारम्। उदितोदितं विद्यानुष्ठानादिभिरुदितैः शास्त्रोक्तैः उदितम् ऋद्ध-म्। दण्डनीत्याम् अर्थशास्त्रे। अथर्वाङ्गिरसे शान्त्यादिकर्मणि। यादृशो निषिद्धः पुरोहितस्तादृश उक्त—

आथर्वणपरिशिष्टे,

नातिदीर्घं नातिह्रस्वं नातिस्थूलं कृशं तथा।
न च हीनातिरिक्ताङ्गं क्वचित्कुर्यात्पुरोहितम्॥
हीनाधिकाङ्गं पतितं विवर्णं स्तेयिनं जडम्।
क्लीवमशक्तियुक्तं भिन्नस्वरं काणं विरूपनेत्रं द्वेष्यं न राजा गुरुं नैव कुर्यात्। इति।

तादृशस्य करणे फलान्यपि तत्रैवोक्तानि।

हीनाधिकाङ्गे पुरराष्ट्रहानिः काणे जडे वाहनकोशनाशः।
स्तेये त्वशक्ते च समस्तदोषाः क्लीवे विवर्णे नृपतिर्विनश्येत्॥
भिन्नस्वरे जायते गात्रभेदो द्वेष्ये गुरौ विप्रतिपत्तिमाहुः।
विवर्णनेत्रे पतिते सुपुत्रानध्वर्युणा चैव निहन्ति पौत्रान्॥
कृष्णे कोशक्षयं विद्याद्रक्ते वाहनसंक्षयः।
पिङ्गलः पार्थिवं हन्याद्राष्ट्रं हन्यात्तु केकरः॥
वह्वृचं हि नियुञ्ज्याद्यः पौरोहित्ये तु पार्थिवः।
सभारः पङ्के हस्तीव सह तेनैव मज्जति॥
अध्वर्युं हि नियुञ्ज्याद्यः पौरोहित्ये तु पार्थिवः।
उत्तितीर्षुरिवाश्मानमादत्ते स्ववधाय सः॥
वधबन्धपरिक्लेशान् कोशवाहनसंक्षयम्।
करोत्येतां च योऽवस्थां तपोयुक्तोऽपि सामगः॥
अन्वयाकृतिसम्पन्नं तस्माद्भृग्वङ्गिरोविदम्।
गोत्राङ्गिरसवासिष्ठं राजा कुर्यात्पुरोहितम्॥

मखेषु राष्ट्रेषु पुरेषु चैव सेनासु राज्ञां स्वनिवेशनेषु ।
य उत्पातास्त्रिविधा घोररूपास्तान् सर्वान् शमयेद्ब्रह्मवेदवित्॥इति।

ब्रह्मवेदोऽथर्ववेदः । बह्वृचादिनिषेधस्याथर्ववेदवेत्तरि शान्त्यादिवेत्तरि तात्पर्यम्, न तु बह्वृचादिनिषेधे ।

तथा, यस्यान्यकुलोपयुक्तपुरोधाः शान्तिकपौष्टिकप्रायश्चित्ताभिचारिकनैमित्तिकौर्ध्वदेहिकान्यथर्वविहितानि कर्माणि कुर्यात्स तस्य प्रत्यङ्गिरा भूत्वा हस्त्यश्वरथपदात्यादीनि नाशयेत्–

इत्याद्युक्तम् । अस्यापि शान्त्यादिज्ञातरि तात्पर्यम्, न त्वथर्ववेदवेत्तरि । स च ब्राह्मण एव कार्यः । तदुक्तम्–

ऐतरेयब्राह्मणे,

न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति तस्माद्राजा यक्ष्यमाणो ब्राह्मणं पुरो दधीत देवा मेऽन्नमदन्ति । इति ।

पूर्वराजमरणोत्तरं नूतनराजाभिषेके विशेष उक्तो—

विष्णुधर्मोत्तरे,

मृते राज्ञि न कालस्य नियमोऽत्र विधीयते ।
तत्रास्य स्नपनं कार्यं विधिवत्तिलसर्षपैः ॥
विधिवत् प्राकृतस्नानविधिना ।
घोषयित्वा जयं चास्य सांवत्सरपुरोहितौ ।
अन्यासनोपविष्टस्य दर्शयेतां जनं शनैः ॥
स सान्त्वयित्वा तु जनं मुक्त्वा बन्धनगांस्ततः ।
अभयं घोषयित्वा तु कालाकाङ्क्षी ततो भवेत् ॥

मृत इत्यस्वस्थस्याप्युपलक्षकम् । यदा पूर्वस्मिन् राज्ञि मृतेऽस्वस्थे वोत्तरस्याभिषेकस्तदा स्नपनादौ न कालनियमः । तत्राभिषेक्तव्यस्य सांवत्सरपुरोहितौ तिलसर्षपैर्विधिवत्स्नपनं कार-

यित्वाऽस्मिन् राष्ट्रेऽयमिदानीं राजेति जयं घोषयित्वा पूर्वराजासनादन्यासनोपविष्टस्य मुख्यं मन्त्र्यादिकं नागरिकं च जनं दर्शयेताम्। ततः सर्वं जनं सत्कृत्य पूर्वराजवद्धान्मुक्त्वा स्वराष्ट्रेऽभयं घोषयित्वा तदासनगत एव प्रजाः परिपालयन् वर्षानन्तराभिषेककालप्रतीक्षया तिष्ठेत्। पूर्वस्मिन् जीवति द्वितीयस्याभिषेके स्नपनादिकालप्रतीक्षान्तमकृत्वा शुभे कालेऽभिषेक एव कार्यः।

अथाभिषेकपूर्वकर्त्तव्यैन्द्रशान्तिप्रयोगः।

शुभेऽह्नि यथाविभवं याज्ञवल्क्याद्युक्तप्रकारेण विनायकशान्तिं नवग्रहमखं च कृत्वा उपकल्पितसमस्तसम्भारः सपत्नीको राजा सांवत्सरादभिषेकदिनशुद्धिं विदित्वा तत्पूर्वदिवसे पुरोहिताचार्यसांवत्सरादीन् सन्निधाप्य शुचौ देशेऽन्तर्जानुकर उपविश्येष्टदेवगुरुद्विजकुलज्येष्ठान् नत्वा दर्भपाणिराचम्य प्राणानायम्य तिथ्यादि सङ्कीर्त्य करिष्यमाणराज्याभिषेकाङ्गत्वेनैन्द्रीं शान्तिं करिष्य इति सङ्कल्प्य, विजयबलपशुवृद्धिकामनया परचक्रागमनिवृत्तिकामनया चैन्द्रीं शान्तिं करिष्य इति काम्यायाम्। तत्र निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनाभ्युदयिकश्राद्धाचार्यवरणानि च तत्पूर्वाङ्गाणि करिष्य इति सङ्कल्प्य यथाविभवं षोडशोपचारैर्गणपतिमभ्यर्च्य यथास्वगृह्यं स्वस्तिवाचनादि विधायैन्द्रीं शान्तिं कर्तुमाचार्यं त्वामहं वृण इति पुरोहितं वृणुयात्।

आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः।
तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत॥

इत्याचार्यवरणे मन्त्रः। मधुपर्कादिवस्त्रान्तम्। तत आ-

चार्योऽग्निस्थापनान्तं कृत्वा प्राच्यां कलशं संस्थाप्य तत्र यथाशक्ति सौवर्णीमैन्द्रीं प्रतिमां प्रतिष्ठाप्य यथाविभवं पूजयेत्। ततो ऽमृताशान्तिप्रकारेण चरुं श्रपयित्वा इन्द्र जुषस्वेतिसूक्तेन प्रत्यृचं जुहुयात्। शेषममृतावत्।

इत्यैन्द्रशान्तिप्रयोगः।

अथाभिषेकप्रयोगः।

तत्र पूर्वस्मिन् दिवसे नगरदेवायतने ध्वजपताकातोरणादिभिरलङ्कृत्य कृतोपवासः पुरोहितोऽभिषेकदिवसे स्नातोऽनुलिप्तः शुचिः शुक्लवासाः सोष्णीषो वेदिदेशे स्नातेन श्वेतवस्त्रमाल्याद्यलङ्कृतेन सर्वाभरणभूषितेन राज्ञा तिथ्याद्युल्लेखपूर्वकं मम कृत्स्नस्य राष्ट्रस्य वश्यतासिद्ध्यर्थं सांवत्सरपुरोहिताभ्यां विष्णुधर्मोत्तरोक्तविधिनाऽऽत्मानमभिषेचयिष्य इति सङ्कल्पयेत्। ततः सांवत्सरपुरोहितयोः ऋग्यजुरथर्वविदां विप्रक्षत्रियविशाममात्यानां छन्दोगस्य च विप्रामात्यस्य चैकैकस्य वान्यतमवेदविदो वरणे कृते अन्येषु चातुर्वर्ण्यमुख्येषु सन्निधापितेषु होमदेशादुत्तरतः स्नानशालायां यथासम्भवं सर्वतीर्थजलपूर्णं सर्वौषधीसर्वरत्नसर्वफलयुतं क्षीरिवृक्षक्षीरलतापल्लवोपेतं सर्वतस्त्रिगुणसितसूत्रेण वेष्टितं श्वेताम्बरवेष्टितकण्ठं मालादिभिरलङ्कृतं शैवालमुखं नवं सौवर्णं कलशं मध्ये, तत्समन्ततश्च यथास्थानं पञ्चगव्यमिश्रजलकलशं घृतपूर्णं हेमकुम्भं क्षीरपूर्णं रौप्यकुम्भं दधिपूर्णं ताम्रकुम्भं मधुकुम्भं कुशोदककुम्भं शतच्छिद्रं सौवर्णम् अन्यांश्च नद्यादिजलपूर्णान् मृन्मयान् कलशान् कलशस्थापनविधिना स्थापयेत्। यथासम्भवं पूर्वोक्तपर्वताग्रादिमृदः पूर्वोक्तलक्षणं सौवर्णाद्यन्यतमनिर्मितं भद्रासनं

१ सविस्तरोऽयं प्रयोगो नीतिमयूखे द्रष्टव्यः।

गन्धपुष्पताम्बूलसर्वौषध्यादि चोपकल्पयेत् । आथर्वणकुशकण्डिकोक्तविधिप्रकारेण वाग्निस्थापनादि कृत्वा शर्मवर्मस्वस्त्ययनायुष्याभयापराजिताख्यैः पञ्चभिर्गणैः प्रधानहोमानाज्येन जुहुयात् । काञ्चनकलशे च होमदेशे स्थापिते सम्पातान् क्षिपेत् । तदा राजा वह्नेर्दक्षिणपार्श्वे स्थित्वा सांवत्सरसामन्तादिभिरन्यैः सदस्यैः पुरोहितैश्च सहितो वह्नौ पूर्वोक्तानि शुभाशुभानि निमित्तानि पश्येत् । ततः पुरोहितः प्रधानहोमं समाप्य भस्मोपग्रहणात्प्राग्वर्त्ति उत्तराङ्गं समाप्य प्राकृतासनस्थं सुगन्धितैलोद्वर्त्तनादिभिः स्वेच्छया स्नातं स्नानशालायामृज्ञमन्त्रैर्मृत्तिकादिभिः राजानं पुनः स्नापयेत् । तद्यथा—पर्वताग्रादिमृदः समीपे संस्थाप्य बलित्था पर्वतानामिति प्रत्येकमभिमन्त्र्य मावोरिपत्खनितेति खनित्वा स्योनापृथिवीति प्रत्येकं गृहीत्वा राज्ञोऽङ्गानि लेपयेत् । पर्वताग्रमृदा सहस्रशीर्षेति मूर्धानं, वल्मीकवप्राग्रमृदा अक्षीभ्यामितिसकृत्पठितेन कर्णौ, विष्ण्वालयस्थमृदा तेनैव मुखं, वृषशृङ्गोद्धृतमृदा अक्षीभ्यामिति नासिकां, इन्द्रालयमृदा ग्रीवाभ्य इति सकृत्पठितेन ग्रीवां, राजालयमृदा आन्त्रेभ्य इति हृदयं, करिदन्तोद्धृतमृदा यस्य विश्वानीतिमन्त्रेण दक्षिणं भुजं, सरोमृदा वह्नीनामिति पृष्ठं, सङ्गमृदा नाभानाभिं न इत्युदरं, नदीकूलद्वयमृदा आते सिञ्चामीति पार्श्वौ, वेश्याद्वारमृदा सोमानं सरणमिति कटी, गजस्थानमृदा ऊरुभ्यां त इत्यूरू, गोष्ठमृदा मेहनाद्वलमिति जानुनी, अश्वस्थानमृदा तेनैव जङ्घे, रथचक्रमृदा एतावानस्येति पादौ, सर्वाभिः अङ्गादङ्गेति सर्वाङ्गाणि । ततो गायत्र्या गन्धद्वारामिति अप्यायस्वेति दाधिक्राव्ण इति तेजोऽसि शुक्रमित्यादिभिर्मन्त्रैः पञ्चगव्यकुशोदकपूर्णं पूर्वदिगवस्थितं कलशमादाय अभिषिञ्चेत् ।

अथ भद्रासनगतम्—"तेजोऽसि शुक्रम्"इति घृतपूरितेन हेमकुम्भेन पूर्वदिगवस्थितेन पूर्वतः स्थित्वा ब्राह्मणामात्योऽभिषिञ्चेत् । क्षीरपूर्णेन रौप्यकुम्भेन दक्षिणतः स्थित्वा क्षत्रियामात्य "आप्यायस्व" इति सिञ्चेत् । "दधिक्राव्ण" इति दधिपूरितेन ताम्रकुम्भेन पश्चिमादिगवस्थितेन पश्चिमतः स्थित्वा वैश्यामात्योऽभिषिञ्चेत् । "मधुवाता" इति त्र्यृचेन मधुपूर्णेन मृत्कुम्भेनोत्तरदिगवस्थितेनोत्तरतः स्थित्वा छन्दोगामात्येऽभिषिञ्चेत् । स एव तत्रैव स्थित्वा कुशोदकपूरितेनान्यकुम्भेन "देवस्य त्वा" इति सिञ्चेत् । तत्र पूरणे पूरयामि, अभिषेके अभिषिञ्चामीति मन्त्रे वाक्यशेषः । ततः पुरोहितो वह्निं रक्षध्वमिति सदस्यान् सम्प्रेष्य सम्पातवन्तं सौवर्णं कलशमादाय राजसमीपं गत्वा ब्राह्मणस्वरयुतैः शङ्खभेर्यादिशब्दयुतै राजसूयगतराजाभिषेकमन्त्रैरभिषिञ्चेत् । ते यथा—"सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण। क्षत्राणां क्षत्रपतिरेध्यति दिद्यून्पाहि" । "इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इमममुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजा"इति याजुषाः । इममित्यत्र द्वितीयान्तं राजनाम । अमुष्येत्यत्र षष्ठ्यन्तं तत्पितृनाम । अमुष्या इत्यत्र षष्ठ्यन्तं तन्मातृनाम। आर्ग्वेदिकास्तु "इमा आपः शिवतमा"इति त्र्यृचः । "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि । बलाय श्रियै यशसेऽन्नाद्याय"इति यजुः। भूर्भुवः स्वरिति व्याहृतय इति । एवमन्येऽपि तत्तच्छाखीया द्रष्टव्याः। ततः पुरोहितः कुण्डसमीपं गच्छेत् । ततः सुगन्धयुद्वर्त्तनद्रव्येणोद्वर्त्तिताङ्गं भद्रासनगतमेव रा-

जानं शतच्छिद्रेण सौवर्णेन वेदधर्मशास्त्राभिज्ञोऽन्यो ब्राह्मणो "या ओषधीः" इति मन्त्रेण पिष्टसर्वौषध्युदकपूर्णकुम्भेन, "रथे तिष्ठन्" इति मन्त्रेण गन्धपूर्णोदककुम्भेन, "आब्रह्मन्ब्राह्मण" इति यजुषा व्रीह्यादिबीजोदकपूर्णेन, "पुष्पवती" इत्याथर्वणमन्त्रेण पुष्पपूर्णोदककुम्भेन, तेनैव मन्त्रेण तत्कालसम्भृतफलपूर्णकुम्भेन, "आशुः शिशान" इतिसूक्तेन सर्वरत्नपूर्णकुम्भोदकेन "ये देवाः पुरः सद" इति यजुषा कुशपञ्चपल्लवपूर्णोदककुम्भेन राजानमभिषिञ्चेत्। ततोऽन्य ऋग्वेदवित् ब्राह्मणो गोरोचनापिष्टेन "गन्धद्वाराम्" इति मन्त्रेण राज्ञो मूर्द्धानं कण्ठं च संस्पृशेत्। ततो मुख्या ब्राह्मणक्षत्रियवैश्यशूद्राः पतिव्रताः पुत्रवत्यो नार्यो मूर्द्धावसिक्ताद्याश्च यथासम्भवं समुद्रादिनानातीर्थाहृतैर्जलैरभिषिञ्चेयुः। शूद्राद्यास्तूष्णीम्। तत्रामात्यमुख्याश्छत्रचामरवेत्रादीनि राजचिह्नान्याहरेयुः। तत्र वन्दिनश्च स्तुतिं कुर्युः। ब्राह्मणा मन्त्रघोषं, वादकाः शङ्खभेर्यादिघोषं च कुर्युः। ततः सांवत्सरो मुख्यं सौवर्णं कलशमादाय ततो गृहीतेन कुशोदकेन "सुरास्त्वाम्" इत्यादिभिर्विष्णुधर्मोत्तरोक्तैर्मन्त्रैरभिषिञ्चेत्। सकलमन्त्राभिषेचनान्ते अवशिष्टं कलशजलं कलशेनैव सर्वं मूर्ध्नि न्यसेत्।

तथा च विष्णुधर्मोत्तरे,

श्रीराम उवाच।
मन्त्रेण येन दैवज्ञः कुर्याद्राज्ञोऽभिषेचनम्।
तमहं श्रोतुमिच्छामि त्वत्तो वरुणनन्दन॥
पुष्कर उवाच।
शृणुष्वावहितो मन्त्रं राम कल्मषनाशनम्।
येनाभिषिक्तो नृपतिश्चिरं यशसि तिष्ठति॥
राज्ञोऽभिषेकशब्दान्ते दैववित् कुशवारिणा।

कुम्भादभ्युक्षणं कुर्यान्मन्त्रान्ते कलशं न्यसेत् ॥
सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः।
ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा ॥
रुद्रो धर्मो मनुर्दाक्षी रुचिः श्रद्धा तु पार्थिव।
भृगुरत्रिर्वसिष्ठश्च सनकश्च सनन्दनः ॥
सनत्कुमारश्च तथा भगवानथ चाङ्गिराः।
पुलहश्च पुलस्त्यश्च मरीचिः कश्यपः प्रभुः ॥
एते त्वामभिषिञ्चन्तु प्रजाध्यक्षाः समागताः।
प्रभाकरा बर्हिषदो अग्निष्वात्तास्तथैव च ॥
क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः।
एते त्वामभिषिञ्चन्तु पितरश्चाग्निभिः सह ॥
लक्ष्मीर्वेदी शची ख्यातिरनसूया तथा स्मृतिः।
सम्भूतिः सन्नतिश्चैव क्षमा प्रीतिस्तथैव च ॥
स्वाहा स्वधा च ते राजन्नभिषिञ्चन्तु मातरः।
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा तथा क्रिया ॥
बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः सिद्धिश्च पार्थिव।
एतास्त्वामभिषिञ्चन्तु धर्मपत्न्यः समागताः ॥
अरुन्धती वसुर्यामी लम्बा भानुर्मरुत्वती।
सङ्कल्पा च मुहूर्ता च साध्या विश्वा तथैव च ॥
धर्मपत्न्यो दशान्यास्त्वामभिषिञ्चन्तु पार्थिव।
अदितिर्दितिर्दनुः काला सुहृष्टा नायुपा मुनिः ॥

कद्रूः क्रोधवशा प्राची विनता सुरभिस्तथा ।
एतास्त्वामभिषिञ्चन्तु कश्यपस्य प्रियाः स्त्रियः ॥
पत्नी तु बहुपुत्रस्य सपुत्रा या च भामिनी ।
समायात्वभिषेकाय विजयाय च पार्थिव ॥
कृशाश्वपत्नी च तथा सुप्रभा तु जया तथा ।
सुदर्शनस्तयोः पुत्रो विजयं च ददातु ते ॥
मनोरमा भानुमती विशाला या च बाहुदा ।
अरिष्टनेमिपत्न्यस्त्वामभिषिञ्चन्तु पार्थिव ॥
कृत्तिका रोहिणी देवी इला रुद्राणिरेव च ।
पुनर्वसुश्च पुष्यश्च तथाऽश्लेषा च पार्थिव ॥
मघा च फाल्गुनी पूर्वा उत्तरा च क्षितीश्वरा ।
हस्तश्चित्रा तथा स्वाती विशाखा च तथा नृप ॥
अनुराधा तथा ज्येष्ठा मूलं च वसुधाधिप ।
आषाढा च तथा पूर्वा तथान्या चोत्तरा द्वया ॥
अभिजिच्च तथा श्रुत्या धनिष्ठा च तथैव च ।
तथा शतभिषा चैव पूर्वाभाद्रपदा च या ॥
उत्तरा रेवती राजन्नश्विनी भरणी तथा ।
एतास्त्वामभिषिञ्चन्तु सोमपत्न्यः समागताः ॥
मृगी च मृगमन्दा च श्वेता भद्रासना हरिः ।
पूता च कपिता दंष्ट्रा सुरसा सरसा तथा ॥
एताः पुलस्त्यपत्न्यस्त्वामभिषिञ्चन्तु पार्थिव ।
श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री तथा शुकी ॥
पत्न्यस्त्वामभिषिञ्चन्तु अरुणस्यार्कसारथेः ।

---

१ मृगचर्मा इत्यपि पाठः ।
२ सुरभा सुलभा इत्यपि पाठः ।

आयतिर्नियतिश्चैव रात्रिर्निद्रा च पार्थिव ॥
एतास्त्वामभिषिञ्चन्तु लोकसंस्थानहेतवः ।
उमा सेना शची चैव धूमोर्णा निर्ऋतिस्तथा ॥
गौरी शिवा च बुद्धिश्च वलया चैव नन्दना ।
आनूक्या च तथा ज्योत्स्ना या च देवी वनस्पतिः ॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
महाकालश्च कालश्च मन्वन्तरयुगानि च ॥
संवत्सराणि सर्वाणि तथा चैवायनद्वयम् ।
ऋतवश्च तथा मासाः पक्षा रात्र्यहनी तथा ॥
सन्ध्याश्च तिथयश्चैव मुहूर्त्ताः करणानि च ।
एते त्वामभिषिञ्चन्तु कालस्यावयवाः शुभाः ॥
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ।
ग्रहास्त्वामभिषिञ्चन्तु राहुकेतू च पार्थिव ॥
स्वायम्भुवो मनुः पूर्वो मनुः स्वारोचिषस्तथा ।
औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥
वैवस्वतोऽथ सावर्णो दक्षब्रह्मसुतावुभौ ।
धर्मपुत्रो रुद्रपुत्रो रौच्यो भौमश्च यो मनुः ॥
एते त्वामभिषिञ्चन्तु मनवस्तु चतुर्दश ।
विश्वभुग्विश्वपाश्चित्रः स्वचित्तश्च शिखी विभुः ॥
मनोजवस्तथौजस्वी बलिरद्भुतिमान्तिकौ ।
वृषश्च ऋतधामा च दिविस्पृक् शुचिरेव च ॥
एते त्वामभिषिञ्चन्तु देवपालाश्चतुर्दश ।
रेवन्तश्च कुमारश्च तथावर्चाः कुमारकः ॥
वीरभद्रश्च नन्दी च विश्वकर्मा पुरोजवः ।

१ सुखान्तः सुखुखी इत्यपि पाठः ।

एते त्वामभिषिञ्चन्तु सुरमुख्याः समागताः ॥
नासत्यौ देवभिषजौ भवेतां विजयाय ते ।
धरो रुद्रश्च सोमश्च आपश्चैवानलानिलौ ॥
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ महाप्रभाः ।
एते त्वामभिषिञ्चन्तु देवमुख्याः समागताः ॥
आत्मा ह्यायुर्मनो दक्षः पट्टः प्राणस्तथैव च ।
हविष्यश्च गविष्ठश्च कृतः सत्यश्च पार्थिव ॥
अभिषिञ्चन्तु राजंस्त्वां देवा ह्यङ्गिरसो दश ।
क्रतुर्दक्षो वसुः सत्यः कालः कामो मुनिस्तथा ॥
धृतिमान्मनुजश्चैव रोचमानस्तथैव च ।
एते त्वामभिषिञ्चन्तु विश्वेदेवास्तथा दश ॥
अङ्गारकस्तथा शर्वो निर्ऋतिश्च तथा स्वरा ।
अजैकपादहिर्बुध्न्यः धुम्रकेतुस्तथा बुधः ॥
भरतश्च तथा मृत्युः कापालिरथ किङ्किणिः ।
एकादशैते रुद्रास्त्वामभिषिञ्चन्तु पार्थिव ॥
भुवनो भावनश्चैव सुजन्यः सुजनस्तथा ।
क्रतुः सुवर्णवर्णश्च व्यजश्च व्यसुतस्तथा ॥
प्रसवश्चाव्ययश्चैव दत्तश्च मनुजाधिप ।
एते त्वामभिषिञ्चन्तु भृगवो नाम देवताः ॥
मनो मरुच प्राणश्च नरोऽपानश्च वीर्यवान् ।
चित्तिर्हयो नयश्चैव हंसो नारायणस्तथा ॥
विभुश्चापि दिविश्रेष्ठस्तथान्यश्च जगद्धितः ।
एते त्वामभिषिञ्चन्तु साध्या द्वादश पार्थिव ॥
धाता मित्रोऽर्यमा पूषा शक्रोंऽशो वरुणो भगः ।
त्वष्टा विवस्वान् सविता विष्णुर्द्वादशमः स्मृतः ॥

एते त्वामभिषिञ्चन्तु काश्यपादितिसम्भवाः ।
एकद्वित्रिचतुर्ज्योतिः पञ्चज्योतिस्तथैव च ॥
एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः ।
इन्द्रश्च गत्या दृश्यन्ते ततः प्रतिसकृत्तथा ॥
ऋतजित्सत्यजिच्चैव सुषेणः श्येनजित्तथा ।
अतिमित्रस्तथा मित्रः पुरुजिच्चापराजितः ॥
ऋतश्च ऋतवान् धाता वरुणो विधृतो ध्रुवः ।
विधारणो महातेजा वासवस्य परः सखा ॥
ईदृगन्यादृशश्चैव एतादृगमिताशनः ।
क्रीडनश्च तथा शक्तिः सरभश्च महायशाः ॥
धातुरुग्रो मुनिर्भीमो ह्यभियुक्तः क्षिपः सहः ।
द्युतिर्वपुरनाधृष्यो वासः कामो जयो विराट् ॥
एते त्वामभिषिञ्चन्तु मरुतश्च समागताः ।
देवा ह्येकोनपञ्चाशन्महाबलपराक्रमाः ॥
चित्राङ्गदश्चित्ररथश्चित्रसेनश्च वीर्यवान् ।
ऊर्णायुरनघश्चैव उग्रसेनश्च वीर्यवान् ॥
धृतराष्ट्रश्च सोमश्च सूर्यवर्चास्तथैव च ।
दुराधस्तृणपः कीर्णिर्नन्दिश्चित्ररथस्तथा ॥
कलिश्चाप्यङ्गिरा राजन् पर्जन्यो नारदस्तथा ।
वृषपर्वा च हंसश्च तथा चैव हहा हूहूः ॥
विश्वावसुस्ताम्रकश्च तथा वसुरुचिश्च यः ।
एते त्वामभिषिञ्चन्तु गन्धर्वाः पृथिवीपते ॥
आहूत्यः शोभयन्त्यश्च वेगवत्यस्तथैव च ।
आयुवत्यस्तथोर्जश्च तथा वेकुरयः शुभाः ॥
वभ्रवश्चामृतरुचो ध्रुवश्चैव रुचस्तथा ।

भीरवः शोचयन्त्यश्च दिव्या ह्यप्सरसां गणाः ॥
एतास्त्वामभिषिञ्चन्तु कामिन्यस्तरुणप्रियाः ।
अनुत्तमा सुरूपा च सुकेशी च मनोवती ॥
मेनका सहजन्या च पर्णाशा पुञ्जिकस्थली ।
क्रतुस्थला घृताची च विश्वाची पूर्वचित्त्यपि ॥
प्रम्लोचाथाप्यनुम्लोचा रम्भा चैवोर्वशी तथा ।
पञ्चचूडा सामवती चित्रलेखा च पार्थिव ॥
मिश्रकेशी सुगन्धिश्च विद्युत्पर्णा तिलोत्तमा ।
अद्रिका लक्ष्मणा क्षेमा असिता रुचिका तथा ॥
सुव्रता च सुबाहुश्च सुगन्धा सुवपुस्तथा ।
पुण्डरीका सुदारा च सुराधा सुरसा तथा ॥
हेमा सरस्वती चैव कमला नूत्नाऽभया ।
सुमुखी हंसपादी च वारुणी रतिलालसा ॥
एतास्त्वामभिषिञ्चन्तु राजन्नप्सरसः शुभाः ।
प्रह्लादश्च महातेजास्तथा राजन्विरोचनः ॥
बलिर्बाणस्तथान्ये च दितिपुत्राः समागताः ।
अभिषिञ्चन्तु दैत्याश्च दिव्येन ह्यम्भसा स्वयम् ॥
विप्रचित्तिमुखाः सर्वे दानवास्त्वां समागताः ।
अभिषिञ्चन्तु राजानं राज्यं कर्त्तुं सुमत्वराः ॥
हेत्यश्चैव प्रहेत्यश्च सलिलेन्द्रस्तथैव च ।
सुकेशी पौरुषेयश्च यज्ञहा पुरुपादकः ॥
विद्युत्सूर्यस्तथा व्याघ्रो वधः स्वरमनस्तथा ।
एते त्वामभिषिञ्चन्तु समागम्याथ राक्षसाः ॥
सिद्धार्थो मणिभद्रश्च सुमनो नन्दनस्तथा ।
कण्डूतिः पञ्चमश्चैव मणिमान् वसुमांस्तथा ॥

सर्वानुभूतिः शङ्खश्च पिङ्गाक्षश्चतुरस्तथा।
यमो मन्दरसो भीमः पद्मचन्द्रः प्रभाकरः॥
मेघवर्णश्च भव्यश्च प्रदोषश्च प्रभाकरः।
भूतिमान् केतुमांश्चैव मौलिमांश्च सुदर्शनः॥
श्वेतश्च विपुलश्चैव प्रद्युम्नश्च जयावहः।
पद्मपक्षो बलाकश्च कुमुदश्च बलाहकः॥
पद्मनाभः सुगन्धश्च सुवीरो विजयः कृतिः।
पूर्णमासो हिरण्याक्षः शतजिह्वश्च वीर्यवान्॥
एते त्वामभिषिञ्चन्तु राजवृद्धाश्च सत्तमाः।
शङ्खः पद्मश्च राजेन्द्र मकरः कच्छपस्तथा॥
महापद्मश्च नीलश्च खर्वः कुन्दो मुकुन्दकः।
एते त्वामभिषिञ्चन्तु निधयस्तु समागताः॥
छागलाश्चैकवक्त्राश्च ये च सूचीमुखा नृप।
दुष्पूरणा विषादाश्च ज्वलनाङ्गारकास्तथा॥
कुम्भमात्राः प्रतुण्डाश्च उपवीरा उलूखलाः।
अकर्णाश्चक्रखण्डाश्च तथा ये पात्रपाणयः॥
पांसवश्च वितुण्डाश्च निपुणाः स्कन्दनास्तथा।
एतास्त्वामभिषिञ्चन्तु पिशाचानां तु जातयः॥
ब्रह्मचर्ये स्थिता दान्ताः सर्वज्ञाः सर्वदर्शनाः।
नानाप्रकारवचना नानाबाहुशिरोधराः॥
चतुष्पथपुराट्टालशून्यालयनिकेतनाः।
त्रिपुरारिं भवं देवं ये गता मनुजेश्वर॥
ते त्वामद्याभिषिञ्चन्तु गणा भूतपतेः स्वयम्।
महाकालं पुरस्कृत्य नरसिंहं च मातरः।
सर्वास्त्वामभिषिञ्चन्तु राजराज्ये नराधिप॥

ग्रहः स्कन्दो विशाखश्च नैगमेयस्तथैव च ।
अभिषिञ्चन्तु राजंस्त्वां सर्वे स्कन्दग्रहा इमे ॥
डाकिन्यो याश्च योगिन्यः खेचर्यो भूचरास्तथा ।
सर्वास्त्वामभिषिञ्चन्तु समेत्य मनुजेश्वर ॥
गरुडश्चारणश्चैव आरुणिश्च महाखगः ।
सम्पाती विनतश्चैव विष्णुर्गन्धकुमारकः ॥
एते त्वामभिषिञ्चन्तु सुपर्णाः पृथिवीपते ।
अनन्तश्च महानागो वासुकिः शेषतक्षकौ ॥
सुपर्णारिश्च कुम्भश्च वामनोऽथाञ्जनोत्तमः ।
ऐरावतो महापद्मः कम्बलाश्वतरावुभौ ॥
एलापत्रश्च खण्डश्च कर्कोटकधनञ्जयौ ।
महाकर्णो महानीलो धृतराष्ट्रबलाहकौ ॥
कुमारः पुष्पदन्तश्च सुमुखो दुर्मुखस्तथा ।
सोमनाथो दधिमुखः कालियः शालिपिण्डकः ॥
बिल्वपादः पाण्डुरकनागश्चापूरणस्तथा ।
कपिलश्चाम्बरीषश्च कुमारश्चाप्यकच्छकः ॥
प्रह्लादः पुष्पदन्तश्च गन्धर्वश्च मनास्विकः ।
नहुषः खररोमा च शङ्खपालस्तथैव च ॥
पद्मश्च कुलिकश्चैव पाणिरित्येवमादयः ।
नागास्त्वामभिषिञ्चन्तु राजराज्ये नराधिप ॥
कुमुदैरावतौ पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नीलः पान्तु त्वां सर्वतो द्विपाः ॥
पैतामहस्तथा हंसो वृषभः शाङ्करस्तथा ।
दुर्गासिंहश्च पान्तु त्वां यमस्य महिषासनम् ॥
उच्चैःश्रवाश्चाश्वपतिस्तथा धन्वन्तरिर्नृप ।

## विष्णुधर्मोत्तरोक्ता अभिषेकमन्त्राः ।

कौस्तुभः शङ्खराजश्च पान्तु त्वां सर्वतः सदा ॥
चक्रं त्रिशूलं वज्रश्च नन्दकोऽस्त्राणि चाप्यथ ।
सर्वे ऽभिषेकं दत्त्वा च दिशन्तु विजयं ध्रुवम् ॥
धर्मश्च व्यवसायश्च सत्यं दानं तपस्तथा ।
यशो यज्ञास्तथैवायुर्ब्रह्मचर्यं दमः शमः ॥
एते त्वामभिषिञ्चन्तु चित्रगुप्तश्च पार्थिव ।
दण्डः पिङ्गलकश्चैव मृत्युः कालान्तकावुभौ ॥
वालखिल्यास्तथा सर्वे भवन्तु विजयाय ते ।
दिग्धेनवश्चतस्रस्त्वां सुरभिश्च तथा नृप ॥
अभिषिञ्चन्तु सर्वाभिर्गोभिस्सार्द्धं नरेश्वर ।
वेदव्यासश्च वाल्मीकिः शमनोऽथ पराशरः ॥
देवलः पर्वतश्चैव दुर्वासा भागुरिः शुचिः ।
याज्ञवल्क्यः सजावालिर्जमदग्निः शुचिश्रवाः ॥
विश्वामित्रः स्थूलशिराश्च्यवनोऽत्रिर्विदूरथः ।
एकतश्च द्वितश्चैव त्रितो गौतमगालवौ ॥
शाण्डिल्यश्च भरद्वाजो मौद्गल्यो वेदवाहनः ।
बृहदश्वः कुविभवो जयजानुर्घटोदरः ॥
यवक्रीतोऽथ रैभ्यश्च आत्माधानश्च जैमिनिः ॥
ऋषिः सारङ्गवश्चैव तथागस्त्यो महातपाः ।
दुर्दुर्मृदुर्मिशश्चैव वृद्धवाहुर्महोदयः ॥
कात्यायनश्च कण्वश्च वलाकश्चेभनन्दनः ।
एते त्वामभिषिञ्चन्तु मुनयः पार्थिवोत्तम ॥
पृथुर्दिलीपो भरतो दुष्यन्तः शत्रुजिद्बली ।
मनुः ककुत्स्थश्चानेना युवनाश्वो जयद्रथः ॥
मान्धाता मुचुकुन्दश्च तथा राजा पुरूरवाः ।

आयुश्च नहुषश्चैव ययातिरपराजितः ॥
इक्ष्वाकुश्च यदुश्चैव पूरुर्भूरिश्रवास्तथा ।
अम्बरीषश्च नाभागो बृहदश्वो महाहनुः ॥
प्रद्युम्नश्चाथ सुद्युम्नो भूरिद्युम्नश्च सृञ्जयः ।
एते चान्ये च राजानस्तव राजन् दिवं गताः ॥
समायान्त्वभिषेकाय विजयाय तथा श्रिये ।
पर्जन्याख्यास्तथा भूप मेघाः सर्वे समागताः ॥
द्रुमाश्चौषधयो रत्नं बीजानि विविधानि च ।
सर्वे त्वामभिषिञ्चन्तु राजराज्ये सुसत्वराः ॥
पुरुषश्चाप्रमेयात्मा महाभूतानि यानि च ।
पृथिवी वायुराकाशमापो ज्योतिस्तथैव च ॥
मनो बुद्धिस्तथैवात्मा अव्यक्तं च महीपते ।
एते त्वामभिषिञ्चन्तु समेता वसुधाधिप ॥
रुक्मभौमः शिलाभौमः पातालो नीलमृत्तिकः ।
पीतरक्तासिताश्चैव श्वेतभौमस्तथैव च ॥
एते त्वामभिषिञ्चन्तु विजयाय महीपते ।
भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः ॥
तपः सत्यं च राजेन्द्र विजयाय भवन्तु ते ।
जम्बूः शाकः कुशः क्रौञ्चः शाल्मलिद्वीप एव च ।
प्लक्षश्च पुष्करश्चैव स्वस्वाम्यं प्रदिशन्तु ते ॥
उत्तराः कुरवः पुण्या रम्या हैरण्वतास्तथा ।
भद्राश्वः केतुमालश्च वर्षश्चैव इलावृतः ॥
हरिवर्षः किम्पुरुषो वर्षो भारतसंज्ञकः ।
एते त्वामभिषिञ्चन्तु समेत्य वसुधाधिप ॥
इक्षुद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान् ।

नागद्वीपस्तथा सौम्यो गन्धर्वो वरुणस्तथा ॥
अयं च नवमस्तेषां स्वस्वाम्यं प्रदिशन्तु ते ।
हिमवान् हेमकूटश्च निषधो नील एव तु ॥
श्वेतशृङ्गो ऽगवान् मेरुर्माल्यवद्गन्धमादनौ ।
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवांस्तथा ॥
विन्ध्यश्च पारियात्रश्च सर्व एव महीधराः ।
समागम्याभिषिञ्चन्तु त्वामद्य वसुधाधिप ॥
ऋग्वेदोऽथ यजुर्वेदः सामवेदस्तथैव च ।
अथर्ववेदो वेदास्त्वामभिषिञ्चन्तु पार्थिव ॥
इतिहासो धनुर्वेदो गान्धर्वश्चायुसंज्ञितः ।
सप्तोपवेदाश्च तथा विजयाय भवन्तु ते ॥
शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः ।
छन्दोविचितिषष्ठानि विजयं प्रदिशन्तु ते ॥
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
साङ्ख्यं योगः पाञ्चरात्रो वेदाः पाशुपतं तथा ।
कृतान्तपञ्चकं चैव शास्त्राणि विविधानि च ।
गायत्री पापशमनी गङ्गादेवी महाशिवा ॥
गान्धारी च तथा विद्या विजयं प्रदिशन्तु ते ।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥
ऋषयो मनवो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥
स्थानानि च समस्तानि पुण्यान्यायतनानि च ।

जीमूतानि च सर्वाणि तद्विकाराश्च सर्वशः ॥
उक्तानि चाप्यनुक्तानि विजयाय भवन्तु ते ।
लवणक्षीरतोयाश्च घृतमण्डोदकास्तथा ॥
दधिमण्डोदकाश्चैव सुरोदश्च नराधिप ।
तथैवेक्षुरसोदश्च तथा स्वादूदकश्च यः ॥
गर्भोदकश्च तोयैस्त्वामभिषिञ्चन्तु पार्थिव ।
चत्वारः सागराश्चैव स्वेन तोयेन पार्थिव ॥
समागम्याभिषिञ्चन्तु विजयं प्रदिशन्तु ते ।
पुष्करश्च प्रयागश्च प्रभासो नैमिषस्तथा ॥
तथा ब्रह्मसरः पुण्यं गयाशीर्षं तु पार्थिव ।
कालोदको नन्दिकुण्डस्तथैवोत्तरमानसः ॥
स्वर्गमार्गप्रदश्चैव तथा पञ्चनदश्च यः ।
भृगुतीर्थं प्रभासश्च तथैवामरकण्ठकः ॥
आश्रमः कालिकायाश्च तृणबिन्दोस्तथाश्रमः ।
गोतीर्थं चाग्नितीर्थं च विमलः स्वर्ग एव तु ॥
जम्बूमार्गश्च विमलः पुण्यस्तन्दुलिकाश्रमः ।
कपिलस्य तथा तीर्थं तीर्थे वातिकखण्डिकौ ॥
महासरस्तथागस्त्यकुमारीतीर्थमेव तु ।
गङ्गाद्वारकुशावर्त्तौ बिल्वको नीलपर्वतः ॥
वाराहः पर्वतश्चैव तीर्थं कनखलं तथा ।
सुगन्धा च धराकुम्भा तथा शाकम्भरीति या ॥
भृगुतुङ्गः सकुब्जाम्रः कपिलस्य तथाश्रमः ।
चमसोद्भेदनः पुण्यस्तथा विनशनं शुभम् ॥
अजतुङ्गश्च मोचश्च अश्वगन्धश्च पार्थिव ।
कालञ्जरः सकेदारो रुद्रकोटिस्तथैव च ॥

महालयश्च राजेन्द्र नदर्याश्रम एव तु।
नन्दा च सोमतीर्थं च सूर्यतीर्थं शतक्रतोः॥
अश्विनोर्वरुणस्याथ वायोर्वैश्रवणस्य तु।
ब्रह्मणश्चैव शर्वस्य यमस्य च्यवनस्य तु॥
विरूपाक्षस्य धर्मस्य तथा चाप्सरसां नृप।
ऋषीणां च वसूनां च साध्यानां मरुतां तथा॥
आदित्यानां च रुद्राणां तथा चाङ्गिरसां नृप।
विश्वेदेवभृगूणां च तथाऽन्येषां तु मानद॥
प्लक्षप्रस्रवणश्चैव सुषुम्ना च नराधिप।
शालग्रामसरश्चैव वाराहो मानसस्तथा॥
कामाश्रमस्त्रिकूटश्च चित्रकूटस्तथैव च।
सपूर्वः क्रतुसारश्च तथा विष्णुपदं सरः॥
कापिलं च तथा तीर्थं वासुकेस्तीर्थमेव च।
सिन्धूत्तमस्तपोद्वारोऽप्यथ सूर्पारकुम्भकः।
पुण्डरीकश्च राजेन्द्र गङ्गासागरसङ्गमः॥
सिन्धुसागरयोश्चैव सङ्गमः सुमनोहरः।
तथा कुम्भावसुन्दश्च मानसं तु तथा सरः॥
तथा बिन्दुसरः पुण्यं सर अच्छोदकं तथा।
धर्मारण्यं फल्गुतीर्थमविमुक्तं तथैव च॥
लौहित्यश्च तथा पुण्यो बदरीपावनः शिवः।
तीर्थं सप्तऋषीणां तु वह्नितीर्थं तु पार्थिव॥
पुण्यवस्त्रापथो मेषच्छागलेशस्तु पार्थिव।
पुष्पन्यासस्तथा चैव तीर्थं हंसपदं तथा॥
अश्वतीर्थं च कर्णाश्वो मणिमन्थस्तथैव च।
देविका इन्द्रमार्गश्च स्वर्णबिन्दुस्तथैव च॥

आह्ल्यकं तथा तीर्थं तीर्थं चैरावतं तथा ।
ऐरावतीसमुद्भेदे तीर्थं भोगयशःपदम् ॥
करवीराह्वयं चैव नागमो वणिकस्तथा ।
पापमोचनिकश्चैव ऋणमोचनिकस्तथा ॥
उद्वेजनस्तथा पुण्यः सम्पूज्यः सरसीवरः ।
देवब्रह्मसरः पुण्यं सर्पिर्दधि तु पार्थिव ॥
एते चान्ये तु बहवः पुण्यसङ्कीर्तनाः शुभाः ।
तोयैस्त्वामभिषिञ्चन्तु सर्वपातकनाशनैः ॥
गङ्गा महानदी पुण्या ह्रदिनी ह्रादिनी तथा ।
पावनी च तथा सीता चक्षुः सिन्धुः सुनर्मदा ॥
सुप्रभा काञ्चनाक्षी च विशाला मानसी ह्रदा ।
सरस्वत्योघनादा च सुवेषा विमलोदका ॥
शिप्रा शोणश्च तर्पश्च सरयूर्गण्डकी तथा ।
अच्छोदा च विभागा च चन्द्रभागा इरावती ॥
वितस्ता देविका रम्भा कोशी देवह्रदा शिवा ।
तथा चेक्षुमती पुण्या कौशिकी यमुना तथा ॥
गोमती धूतपापा च बाहुदा च सरस्वती ।
निर्विन्ध्या च तृतीया च लोहितश्च महानदः ॥
वेदस्मृतिर्वेदमाता वेत्रघ्नी वरदा तथा ।
पर्णाशा वन्दना चैव सदानीरा कुमुद्वती ॥
पीता चर्मण्वती धूमा विदर्भा वेणुमत्यपि ।
अवन्ती च तथा कुन्ती सुरसा च पलाशिनी ॥
मन्दाकिनी दशार्णा च सिन्धुरेखा कुमुद्वती ।
तपती पिप्पला श्येनी करतोया पिशाचिका ॥
चित्रोत्पला चित्रवर्णा मञ्जुला वालुकामती ।

शुक्तिमती सिनीवाली मण्डूणी कृपिका कपूः ॥
तापी पयोष्णी निर्विन्ध्या सिता च निषधावती ।
वेणा वैतरणी भीमा मन्दुरा च तथा कुहूः ॥
तोया चैव महागौरी दुर्गातिर्मिङ्गिला तथा ।
गोदावरी भीमरथी कृष्णवेणाथ वञ्जरा ॥
तुङ्गभद्रा सुप्रकारा वाह्या कावेरिरेव च ।
कृतमाला ताम्रपर्णी पुष्पभद्रोत्पलावती ॥
नृसमा ऋषिकुल्या च इक्षुका त्रिदिवालया ।
लाङ्गुलिनी वंशधरी जम्बूश्च सुकलावती ॥
ऋषिका वरवेगा च मन्दगा मन्दवाहिनी ।
क्षमादेवी दया व्योमा पयोष्णी कालवाहिनी ॥
कम्पनी च विशाला च करतोया सुवाहिनी ।
ताम्रारुणा वेत्रवती सुभद्रा चाश्ववत्यपि ॥
अहिणीका इमा चैव सुप्रकारा हिरण्मयी ।
आपगा लोपलाभासी सन्ध्या तु वडवा नदी ॥
महेन्द्रवाणा शाला च मौलिका वलयावती ।
नीलोद्धतकरा चैव वाहुदा वनवासिनी ॥
नन्दा चैवोपनन्दा च वरदा च सुवासिनी ।
एताश्चान्याश्च राजेन्द्र नद्यस्त्वां विविधोदकाः ॥
सर्वपापप्रशमनाः सर्वलोकस्य मातरः ।
स्वतोयपूर्णैः कलशैरभिषिञ्चन्तु पार्थिव ॥
एतैर्यथोक्तैर्नृप राजराज्ये दत्ताभिषेकः पृथिवीं समग्राम् ।
ससागरां भुङ्क्ष्व चिरं च जीव धर्मे च ते बुद्धिरतीव चास्तु ॥

इत्यभिषेकमन्त्राः ।

अथ विष्णुधर्मोत्तर एवैतदभिषेकमन्त्रप्रतिपाद्यदेवतातीर्थादीनां कीर्त्तननमस्कारादौ फलविशेष उक्तः ।

पुष्कर उवाच ।

मन्त्रा ये कीर्त्तिता राम मयाऽस्मिंस्तव भार्गव ।
तेषां सङ्कीर्त्तनं धन्यं सर्वपापप्रणाशनम् ॥
एतेषां कल्यमुत्थाय यः कुर्यात्कीर्त्तनं नरः ।
सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥
तिर्यग्योनिं न गच्छेत नरकं सङ्कटानि च ।
न च दुःखं न च सुखं मरणे न तु मुह्यति ॥
एतेषां च नमस्कारं यः कुर्यात्प्रयतो नरः ।
न तस्य तिष्ठते पापमब्बिन्दुरिव पुष्करे ॥
एतेषां तर्पणं कृत्वा स्नातः प्रयतमानसः ।
महापातकयुक्तोऽपि त्र्यहेवाहैर्विमुच्यते ॥
एतेषां पुष्पदानेन महतीं श्रियमश्नुते ।
एतेषामर्घ्यदानेन सर्वपापैर्विमुच्यते ॥
एतेषां दीपदानेन भ्राजते चन्द्रवद्दिवि ।
एतेषामाहुतिं दत्त्वा कामानाप्नोति पुष्कलान् ॥
नैवेद्यं च बलिं दत्त्वा भोगानाप्नोत्यनुत्तमान् ।
एतानुद्दिश्य विप्रेषु दत्त्वा भार्गव भोजनम् ॥
सन्तर्प्य दक्षिणाभिश्च त्रिदिवं प्राप्नुयाच्चिरम् ।
अभिषेकदिने राज्ञां पुण्यस्नाने तथैव च ॥
तथा सम्वत्सरग्रन्थौ सर्वे पूज्या हितैषिणा ।
यानि तीर्थानि चोक्तानि सारतश्च समासतः ॥
तेषां गमेन पूयन्ते येऽपि पातकिनो जनाः ।

स्नानं महाफलं तेषां तपः श्राद्धक्रिया तथा ॥
दानं बहुफलं प्रोक्तं दर्शनं पापनाशनम् ।
कीर्त्तनं भार्गवश्रेष्ठ न मेऽत्रास्ति विचारणा ॥
तीर्थेष्वथैतेषु भृगुप्रधान स्नाता नरा यान्ति नरेन्द्रसद्म ।
तीर्थानि गम्यानि ततः प्रयत्नात्पुण्याश्च सर्वास्सरितश्च राम ।

इति कीर्त्तनादौ फलविशेषः ।

ततः शुद्धोदकेन स्नातो राजा वस्त्रालङ्कारोष्णीषादि धृत्वा दर्पणे शुद्धे विलीनाज्ये च मुखं दृष्ट्वा तत्पात्रसहितं ब्राह्मणाय दत्वा चन्दनकुङ्कुमादिमङ्गलद्रव्यालम्भनं कृत्वा विष्णुं राजोपचारैरभ्यर्च्य वृतान् ब्राह्मणान् वस्त्रालङ्कारादिभिः सम्पूज्य सांवत्सरपुरोहितौ मधुपर्केणाधिकेनार्हयेत् । ततः सांवत्सरो राज्ञो ललाट उक्तलक्षणं पट्टं बध्नीयात्, मूर्ध्नि मुकुटम् ।

अत्र रामायणे विशेषः । विनायकब्रह्मविष्णुमहेश्वरान् ग्रहानग्निं विप्रान् देवान् पितृंश्चोद्दिश्य दक्षिणां दद्यात् । सर्वेभ्योऽभयं च दद्यात् । आघातस्थानगान् पशून् बन्धनस्थान् गोब्राह्मणादिहन्तॄन् दारुणकर्मणश्च मोचयेत् । ततः पुरोहितो राजानं क्रमेण वृषादिचर्मास्तृते बहुमूल्यवस्त्राभरणच्छदे उत्तमे मञ्चे "ध्रुवा द्यौः" इत्युपवेशयेत् । तत्रोपविष्टाय प्रतीहार अमात्यान् पौरमुख्यानन्यदेशागतान् स्वदेशस्थांश्च वणिजः प्रकृतीश्च यथाक्रमं दर्शयेत् । ततो राजा ग्रामवस्त्रगजतुरगकनकगोऽजाविगृहदानैः सांवत्सरपुरोहितौ पूजयित्वा तद्वदेव ऋग्वेदवित्प्रभृतींस्त्रीन् यथाविभवमन्यांश्च सांवत्सरपुरोहितान् ब्राह्मणमुख्यांश्च चन्दनपुष्पान्नमोदकादिभिर्गोवस्त्रतिलरूप्यफलकाञ्चनमहीदानैः सम्पूज्य चन्दनकुङ्कुमादिभिः स्वदेहालम्भनं विधायाऽऽयुधानि सम्पूज्य सशरं धनुर्गृहीत्वाऽग्निं प्रदक्षिणीकृत्य गुरून-

मस्कृत्य वृषं सवत्सां गां च पृष्ठत आलभ्य स्वोपवेशनार्हमश्वं सांवत्सरेण सर्वौषधीयुतकलशोदकेन "या ओषधीः" इतिकृताभिषेकं गन्धमाल्यादिभिरलङ्कृतं दक्षिणे कर्णे वक्ष्यमाणमन्त्रैर्मन्त्रितं क्षणमारुह्यावतरेत्। मन्त्रास्तु—

जयाश्व त्वं मया राज्ञस्तुरङ्गाद्य प्रतिष्ठितः।
स्मराद्य लक्ष्म्याः पुत्रत्वं गन्धर्वत्वं तथा स्मर॥
यथा नृणामयं राजा तथा त्वं भव वाजिनाम्।
यथा भवन्तं नृपतिर्नित्यमेवाभिरक्षति॥
तथा त्वं रक्ष राजानं सर्वावस्थागतं हय।
दर्शयाश्व तथा स्वप्ने दैवदोषमुपागतम्॥
तुरगान्सकलान् रक्ष त्वयि भारोऽयमर्पितः।
अद्यप्रभृति राजा त्वामग्रेणाभ्येति भक्तितः॥
अभ्यर्चयिष्यति सदा गन्धमाल्यानुलेपनैः।
पूजनैश्च द्विजातीनां तथा च स्वस्तिवाचनैः॥
रक्षतु त्वां महेन्द्रस्तु पूर्वेण त्रिदशाधिपः।
दक्षिणेन यमो देवः पश्चिमेन जलाधिपः॥
उदग्वैश्रवणो देवः सर्वे रक्षन्तु सर्वतः॥ इति।

ततो मुख्यं गजं पूर्ववदभिषिच्यालङ्कृत्य सांवत्सर आरुह्य दक्षिणे कर्णे मन्त्रयित्वावतरेत्। मन्त्रास्तु—

श्रीगजस्त्वं कृतो राज्ञा भव तस्य गजाग्रणीः।
गन्धमाल्यान्नभक्ष्यैस्त्वां पूजयिष्यति पार्थिवः॥
लोकः सदाऽभयां पूजां करिष्यति यथा तव।
पालनीयस्त्वया राजा युद्धेऽध्वनि तथा गृहे॥
तिर्यग्भावं समुत्सृज्य दिव्यं भावमनुस्मर।
देवासुरे पुरा युद्धे श्रीगजस्त्रिदशैः कृतः॥

ऐरावणसुतः श्रीमानरिष्टो नाम वारणः ।
श्रीगजानां तु यत्तेजः सर्वमेवोपतिष्ठतु ॥
तत्तेजस्तव नागेन्द्र दिव्यभावसमन्वितम् ।
उपतिष्ठतु भद्रं ते रक्ष राजानमाहवे ॥ इति ।

ततो राजा तमारुह्य तत्र स्थित एव नानागजारूढैर्मुख्यामात्यसामन्तसांवत्सरपुरोहितादिभिः सहितो राजमार्गेण धनसञ्चयं विसृजन् स्वपुरं परिक्रम्य तद्गतदेवायतनेषु गत्वा यथाविभवं देवान् सम्पूज्य तादृश एव स्वप्रासादमागत्य गजादवतीर्य सर्वसहितोऽन्तर्गृहं प्रविश्य यथोचितदानमानसत्कारैः सर्वान् सत्कृत्य यथासम्भवं ब्राह्मणान् भोजयित्वा दीनानाथेभ्यो नटनर्तकादिभ्यश्च भूयसीं दक्षिणां दत्त्वा सर्वान् विसृज्य बन्धुभिः सार्द्धं मुदितो भुञ्जीत । तत आचम्य ताम्बूलमुखोऽन्तःपुरनिवासिभिः सह क्षणं विहृत्यात्मानं प्रयत्नाद् रक्षेत् । ततः सदर्भायां क्षितौ ब्रह्मचर्येण स्वपेत् ।

**इति विष्णुधर्मोत्तरोक्तमार्गेण राजाभिषेकप्रयोगः॥**

अथैतरेयब्राह्मणोक्तः श्रौतो राजाभिषेकः समन्त्रव्याख्यानः कथ्यते । तस्य च पुरोहितकर्त्तव्यत्वेनादौ पुरोहितप्रशंसा ।

अथातः पुरोधाया एव न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति तस्माद्राजा यक्ष्यमाणो ब्राह्मणं पुरोदधीत देवा मे अन्नमदन्त्विस्यग्नीन् वा एष स्वर्ग्यान् राजोद्धरते यत्पुरोहितं तस्य पुरोहित एवाहवनीयो भवति जाया गार्हपत्यः पुत्रोऽन्वाहार्यपचनः स यत्पुरोहिताय करोत्याहवनीय एव तज्जुहोत्यथ यज्जायायै करोति गार्हपत्य एव तज्जुहोत्यथ यत्पुत्राय करोत्यन्वाहार्यपचन एव तज्जुहोति त एनं शान्ततनवोऽभिहुता अभिप्रीताः स्वर्गं लोकमभिवहन्ति क्षत्रं च बलं च राष्ट्रं च

विशं च त एवैनमशान्ततनवोऽनभिहुता अनभिप्रीताः स्वर्गा-ल्लोकान्नुदन्ते क्षत्राच्च बलाच्च राष्ट्राच्च विशश्चाग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत्पुरोहितस्तस्य वाच्येवैका मेनिर्भवति पाद-योरेका त्वच्येका हृदय एकोपस्थ एका ताभिर्ज्वलन्तीभिर्दीप्य-मानाभिरुपोदेति राजानं स यदाह क्व भगवोऽवात्सीस्तृणा-न्यस्मा आहरतेति तेनास्य तां शमयति यास्य वाचि मेनिर्भव-त्यथ यदस्मा उदकमानयन्ति पाद्यं तेनास्य तां शमयति यास्य पादयोर्मेनिर्भवत्यथ यदेनमलङ्कुर्वन्ति तेनास्य तां शमयति यास्य त्वचि मेनिर्भवत्यथ यदेनं तर्पयन्ति तेनास्य तां शमयति याऽस्य हृदये मेनिर्भवत्यथ यदस्यानारुद्धो वेश्मसु वसति तेनास्य तां शमयति यास्योपस्थे मेनिर्भवति स एनं शा-न्ततनुरभिप्रीतः स्वर्गं लोकमभिवहति क्षत्रं च बलं च राष्ट्रं च विशं च स एवैनमशान्ततनुरनभिहुतोऽनभिप्रीतः स्वर्गाल्लो-कान्नुदते क्षत्राच्च बलाच्च राष्ट्राच्च विशश्च । ( पं० ८ अ० ५ खं० २४ )

अस्यार्थः । यतः क्षत्रियस्य ब्राह्मण एव पुरोहितश्चिकी-र्षितोऽतः पुरोधाया एव पौरोहित्यस्य एव, विधिरुच्यत इति शेषः । तं विधिं दर्शयति–न ह वेत्याद्यदन्त्वित्यन्तेन । यस्मात्पुरोहितरहितस्य राज्ञो देवा अन्नं नादन्ति न भ-क्षयन्ति तस्माद्यक्ष्यमाणो राजा प्रजापालनादिधर्मज्ञो ब्राह्मणं पुरोहितं कुर्यात् देवा मदीयमन्नं भक्षयन्त्विति । पु-रोहितं स्तौति–अग्नीनिति पुरोहितमित्यन्तेन । यद्राजा पुरोहितं करोति तत्स्वर्गसाधकानग्नीनेव प्रज्वलयति । तानग्नीन् दर्शयति-तस्येति विशं चेत्यन्तेन । अन्वाहार्यपचनो दक्षिणाग्निः । ते अग्न-यः शान्ततनवः त्यक्तोग्ररूपाः, अभिहुता अभिप्रीताः अभी-

ष्टहोमेन प्रीताः पुरोहितादिदानेन त एव प्रीताः, क्षत्रं शौर्यं, बलं शारीरं, राष्ट्रं देशं, विशं, प्रजाम् अभिवहन्ति प्रापयन्ति। विपक्षे बाधकमाह–त एवेति विशश्चेत्यन्तेन। ते पुरोहितादयोऽग्नयोऽभी-ष्टहोमाभावेनोग्ररूपाः स्वर्गादेर्नुदन्ते अपनुदन्ते। पुनरपि पुरोहि-तं प्रकारान्तरेण स्तौति–अग्निरिति भवत्यन्तेन। वैश्वानरः ए-तन्नामाग्निवत्। मेनिः परोपद्रवकारिणी क्रोधरूपोग्रशक्तिः ज्वा-लावत्। ज्वलन्तीभिः प्रज्वलिताभिः, दीप्यमानाभिः पर-स्परसन्तापं कुर्वतीभिः सहितो राजानमुपोदेति राजसमीपे प्राप्तो भवति। तदा स राजा यदाह हे भगवो भगवन् क्वै-तावन्तं कालमवात्सीः, भो परिचारका अस्मै पुरोहितायोपवे-शनार्थं तृणानि तृणनिर्मितान्यासनान्याहरतेतिप्रियोक्त्या वाचिकां मेनिं शमयति। पाद्यं पादप्रक्षालनार्हम्। अलङ्कुर्वन्ति वस्त्र-माल्यालङ्कारादिना। तर्पयन्ति धनादिदानेन। अनारुद्धो-ऽवरोधरहितः। वसति विश्रम्भेण शयनादि करोति। एतेन गृहे समागतस्य पुरोहितस्यैते पञ्चोपचाराः कर्त्त-व्या इति सूचितम्। उपचारं स्तौति–स एनमिति विशश्चेत्य-न्तेन। व्याख्या पूर्ववत्। एकखण्डः।

अग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत्पुरोहितस्ताभी राजानं परिगृह्य तिष्ठति समुद्र इव भूमिमयुत्रमार्यस्य राष्ट्रं भव-ति नैनं पुरायुषः प्राणो जहात्याजरसं जीवति सर्वमायुरेति न पुनर्म्रियते यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः क्षत्रे-ण क्षत्रं जयति बलेन बलमश्नुते यस्यैवंविद्वान् ब्राह्मणो राष्ट्रगो-पः पुरोहितस्तस्मै विशः सञ्जानते सम्मुखा एकमनसो यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः। (पं. ८ अ. ५ खं. २५)

पञ्चोपचारप्रीतं पुरोहितं स्तौति–अग्निरिति भूमिमित्यन्तेन।

ताभिः पञ्चविधोग्रशक्तिभिः परिगृह्य परितः स्वीकृत्य । पुरोहितादनिष्टपरिहारं दर्शयति—अयुवमेति पुरोहित इत्यन्तेन । यस्य राज्ञो विद्वान् वेदशास्त्रोक्तप्रकारेण धर्माधर्मौ बोधयितुमभिज्ञो राष्ट्रगोपो राष्ट्रपरिपालनक्षमः पुरोहितः तस्यास्य राष्ट्रमयुवमारि युवमरणरहितं भवति । यद्वा तस्याऽऽर्यस्य अयुवममिश्रितं न भवति । यौतिरमिश्रणेऽपि वर्त्तते । यौतीति युवम् अमिश्रितं परस्परविरुद्धमनस्कं तथा न भवति। एनं राजानं न जहाति त्यजति राज्ञोऽपमृत्युर्न भवतीत्यर्थः । आजरसं जरापर्यन्तम् जरां प्राप्य, सर्वं पूर्णमायुरेति प्राप्नोति । राजा पुरुषायुपजीवी भवतीत्यर्थः। न पुनर्म्रियते इह जन्मनि मृत्वा पुरोहितमुखेन तत्त्वज्ञानं प्राप्य मुच्यते। अत एव पुनर्जन्माभावादेव न पुनर्म्रियते । अनिष्टपरिहारं दर्शयति—क्षत्रेणेति पुरोहित इत्यन्तेन । यस्यैवंपुरोहितः स स्वकीयेन क्षत्रेण कुमारादिना, परकीयं क्षत्रम् कुमारादि, बलेन सैन्येन अश्नुते अभिभवति । इदानीं प्रजानुरागं दर्शयति-तस्मै इत्यादिना । तस्मै तस्य विशः प्रजा एकमनसः परस्परमेकमनस्काः सम्मुखा राजकार्ये उद्युक्ताः सञ्जानते राज्ञा सहैकमत्यं प्राप्नुवन्ति । कस्मिन्नपि कार्ये विमुखा न भवन्तीत्यर्थः । द्वितीयः खण्डः ।

तदप्येतदृषिणोक्तं स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभिर्वीर्येणेति सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि तानेव तच्छुष्मेण वीर्येणाभितिष्ठति बृहस्पतिं यः सुभृतं विभर्तीति बृहस्पतिर्ह वै देवानां पुरोहितस्तमन्वन्ये मनुष्यराज्ञां पुरोहिता बृहस्पतिं यः सुभृतं विभर्तीति यदा पुरोहितं यः सुभृतं विभर्तीत्येव तदाह वल्गूयति वन्दते पूर्वभाजमित्यपचितिमेवास्मा एतदाह, स इत्क्षेति सुधित ओकसि स्व इति गृहा वा ओकः

स्वेष्वेव तद्गृहेषु सुहितो वसति तस्मा इळा पिन्वते विश्वदानी-मित्यन्नं वा इळान्नमेवास्मा एत ऊर्जस्वच्छश्वद्भवति तस्मै विशः स्वयमेवानमन्त इति राष्ट्राणि वै विशो राष्ट्राण्येवैतत्स्वयमुपनमन्ति यस्मिन् ब्रह्मा राजनि पूर्व एतीति पुरोहितमेवैतदाहाप्रतीतो जयति सन्धनानीति राष्ट्राणि वै धनानि तान्यप्रतीतो जयति प्रतिजन्यान्युत या सजन्येति सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि तानप्रतीतो जयत्यवस्यवे यो वरिवः कृणोतीति यदाहावसीयसे यो वसीयः करोत्येव तदाह ब्रह्मणे राजा तमवन्ति देवा इति पुरोहितमेवैतदभिवदति । (पं० ८ अ०५ खं०२६)

द्रढयति—तदप्येतदृषिणोक्तमित्यादिना । तदस्य माहात्म्य-मृषिणा मन्त्रदर्शिनोक्तं तिसृभिर्ऋग्भिः । तत्राद्यामृचमुदाहरति-स इदिति । स इत्, स एव पुरोहितयुक्तो राजा । प्रतिजन्यानि प्रतिपक्षबलानि । विश्वा, सर्वाणि । शुष्मेण, वीर्येण स्वकीयेन । अभितस्थौ, अभिभवति । "छन्दसि परेऽपि" इत्यभेः परप्रयोगः । अमुमेवार्थं सपत्नेत्यादिना वक्ति । सपत्ना, अस्यैव व्याख्या द्विषन्तो भ्रातृव्या इति । तान् सपत्नान्, जन्यानि बलानि च । बृहस्पतिं बृहस्पतिसमम् । सुष्ठु हितोपदेशादिना राजानं बिभर्त्ति स सुभृत् तं पुरोहितं यो राजा बिभर्त्ति पोषयति । अस्यार्थवादो बृहस्पतिरित्यादिना । तं बृहस्पतिम् । अनु पश्चात् । पुरोहितं य इति पठितव्ये बृहस्पतिमिति पठितम् । पूर्वभाजम्, हितविचारेण पूर्वभजनयुक्तं पुरोहितम् । वल्गूयति, अर्चयति । वन्दते, नमस्करोति । अनेनास्मा अस्मिन्नेवापचितिं पूजामाह । द्वितीयामृचमुदाहरति—स इदिति । स इत्, सपुरोहितो राजा । स्वे, स्वकीये । ओकसि, गृहे । सुधितः सुप्रीतः । क्षेति, वसति । तस्मै, पुरोहितसहिताय राज्ञे । इळा, अन्नम् ।

विश्वदानीं शश्वत् सर्वदा। पिन्वते, ऊर्जस्वत् वर्धते,। रसयुक्तान्नसमृद्धिर्भवतीत्यर्थः। विशः, राष्ट्राणि प्रजोपेता देशाः। स्वयमेव, प्रयत्ननिरपेक्षा एव। आनमन्ते, नम्रा भवन्ति। ब्रह्मा, ब्राह्मणः। पूर्व एति, प्रथमतो गच्छति। तृतीयामृचमुदाहरति— अप्रतीत इति। प्रतिकूलैः शत्रुभिरितः प्राप्तः प्रतीतः तद्विपरीतोऽप्रतीतः। शत्रुप्राप्तिरहितो राजा सपुरोहितो धनानि धनोपेतानि राष्ट्राणि। सञ्जयति, प्रतिजन्यानि शत्रून् सजन्या सेना तांश्च जयति। अवस्यवे, वसुरहिताय। ब्रह्मणे, पुरोहिताय। यो राजा वसीयः, पूजां धनवन्तं वा। कृणोति, करोति। तं पुरोहितपूजकं राजानं देवा अवन्ति पालयन्ति। एतद्, ब्रह्मणे इतिपदं पुरोहितमेव वदति। तृतीयः खण्डः।

यो ह वै त्रीन् पुरोहितांस्त्रीन् पुरोधातॄन् वेद स ब्राह्मणः पुरोहितः स वदेत पुरोधाया अग्निर्वाव पुरोहितः पृथिवी पुरोधाता वायुर्वाव पुरोहितोऽन्तरिक्षं पुरोधाताऽऽदित्यो वाव पुरोहितो द्यौः पुरोधातैष ह वै पुरोहितो य एवं वेदाथ स तिरोहितो य एवं न वेद, तस्य राजा मित्रं भवति द्विषन्तमपबाधते यस्यैवं विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितः क्षत्रेण क्षत्रं जयति बलेन बलमश्नुते यस्यैवंविद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितस्तस्मै विशः सञ्जानते सम्मुखा एकमनसो यस्यैवंविद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितो भूर्भुवः स्वरोममोऽहमस्मि स त्वं स त्वमस्यमोऽहं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेह संवहावहै। पुराण्यस्मान्महाभयात्। तनूरसि तन्वं मे पाहि। या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः। ता मह्यमस्मिन्नासने ऽच्छिद्रं शर्म यच्छत। या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु। ता मह्यमस्मिन्नासनेऽच्छिद्रं शर्म यच्छत। अस्मिन् राष्ट्रे श्रियमावेशयाम्यतो देवीः

प्रतिपश्याम्यापः । दक्षिणं पादमवनेनिजेऽस्मिन् राष्ट्र इन्द्रियं दधामि । सव्यं पादमवनेनिजेऽस्मिन्राष्ट्र इन्द्रियं वर्द्धयामि । पूर्वमन्यमपरमन्यं पादाववनेनिजे । देवा राष्ट्रस्य गुप्त्या अभयस्यावरुद्ध्यै । आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे । ( पं० ८ अ० ५ खं० २७ )

पौरोहित्ये योग्यौ विविच्येते–यो हवा इति । त्रीन् देवान् वक्ष्यमाणानग्न्यादीन् पृथिव्यादींश्च पुरोधातॄन् पुरोहितकर्तॄन् वेद, वक्ष्यमाणमन्त्रार्थेनेतिशेषः । स च पुरोधायै पौरोहित्याय अग्निर्वावेति मन्त्रं वदेत जपेत् । एतन्मन्त्रार्थज्ञो योग्यः । य एतन्मन्त्रार्थं न वेद स तिरोहितः अयोग्यः । योग्यं स्तौति । तस्य देशान्तरवर्त्ती राजा मित्रं तथा द्विषन्तमन्यं राजानं वार्धेत नाशयति। पुरोहितवरणमन्त्रः–भूरिति पाहीत्यन्तः । भूरादयो लोकत्रयदेवताः, ओमिति परमात्मा एतेऽनुगृह्णन्तु । अमो द्युलोकः । स भूर्लोकः। दार्ढ्यार्थं पुनरुक्तिः । अस्य व्याख्या–द्यौरिति । तौ आवाम् इह राष्ट्रे आ समन्तात् पुराणि ग्रामांश्च संवहावहै पुरादिकरनिर्वाहं करवावहै । त्वं मम तनूः शरीरमसि, अतो मे तन्वं शरीरं महाभयात् अस्मादैहिकादामुष्मिकाच्च पाहि । राजदत्तविष्टराभिमन्त्रणम्–या ओषधीरिति । ओषधीरोषध्यः, वह्वीर्वह्व्यो वहुजातीयाः, सोमो राजा यासां ताः सोमराज्ञीः, शतविचक्षणाः शतशाखाभिन्नाः, ता यूयम् अस्मिन् राजदत्तासने, अच्छिद्रं छिद्ररहितं, शर्म सुखं, यच्छत प्रयच्छत । उपवेशनमन्त्रः–या ओषधीरिति । पृथिवीमनुविष्ठिताः पृथिव्यां स्थापिताः । शेषं प्राग्वत् । पाद्यानामपामभिमन्त्रणम्–अस्यन्निति । हे आपः युष्मान् देवीः द्योतनात्मिकाः पश्यामि । यतोऽहं पुरोहितोऽस्मिन राष्ट्रे श्रियं धनम् आवेशयामि सम्पादयामि । पा-

दप्रक्षालनमन्त्रः—दक्षिणमिति । अवनेनिजे प्रक्षालयामि । तेनेन्द्रियं धनम् । अन्यं दक्षिणम्, अन्यं वामम् । भो देवाः गुप्त्यै रक्षायै, अवरुद्ध्यै सम्पादनाय । प्रक्षालनावशिष्टानामपां मन्त्रणम्—आप इति । पादावनेजनीः पादशुद्धिकारिण्यः ।

तथा,

स य इच्छेदेवंवित् क्षत्रियमयं सर्वा जितीर्जयेतायं सर्वांल्लोकान्विन्देतायं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छेत साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्सार्वभौमः सार्वायुष आन्तादापरार्द्धात्पृथिव्यै समुद्रपर्यन्ताया एकराडिति तमेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वाभिषिञ्चेद्यां च रात्रीमजायेथा यां च प्रेतासि तदुभयमन्तरेणेष्टापूर्तं ते लोकं सुकृतमायुः प्रजां वृञ्जीयां यदि मे द्रुह्येरिति स य इच्छेदेवंवित् क्षत्रियोऽहं सर्वा जितीर्जयेयमहं सर्वांल्लोकान्विन्देयमहं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छेयं साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यमहं समन्तपर्यायी स्यां सार्वायुष आन्तादापरार्द्धात्पृथिव्यै समुद्रपर्यन्ताया एकराडिति स न विचिकित्सेत्स ब्रूयात्सह श्रद्धया यां च रात्रीमजायेऽहं यां च प्रेतास्मि तदुभयमन्तरेणेष्टापूर्तं मे लोकं सुकृतमायुः प्रजां वृञ्जीथा यदि ते द्रुह्येयमिति ।
(पं० ८ अ० ४ खं० १५)

यः पुरोहितः एवंवित् ऐन्द्रमहाभिषेकवित्, अयं क्षत्रियः सर्वा जितीर्युद्धभूमीर्जयेतेत्यादिफलभाजं यं क्षत्रियमिच्छेत्, तं शापयित्वा शपथं कारयित्वा एतेन वक्ष्यमाणेनाभिषेकेणाभिषिञ्चेत् । फलेच्छां दर्शयति—लोकान् देशान् वि-

न्देत लभेत, श्रैष्ठ्याद्याधिपत्यान्तान् गुणान् प्राप्नुयात्। श्रैष्ठ्यं जातिश्रेष्ठताम्, अतिष्ठां चिरकालवासित्वम्, परमतां गुणैरुत्कृष्टताम्, साम्राज्यं धर्मेण परिपालनम्, भौज्यं भोगसमृद्धिम्, स्वाराज्यम् अपराधीनताम्, वैराज्यम् अन्येभ्यो भूपतिभ्यो वैशिष्ट्यम्, एतदैहिकम्। अथामुष्मिकम्—पारमेष्ठ्यं प्रजापतिलोकप्राप्तिः, राज्यम् ऐश्वर्यम्, माहाराज्यं तत्र ज्येष्ठाधिक्यम्, आधिपत्यं स्वामित्वम्, समन्तपर्यायी कालतो देशतः सर्वव्यापी। आन्तात्समुद्रपर्यन्तं देशप्राप्तिः सार्वभौमत्वम्। आपरार्द्धात्परार्द्धाभिधेयकालपर्यन्तं सार्वायुषत्वं कालव्याप्तिः। पृथिव्यै पृथिव्याः, एकराट् एक एव राजास्तु। पुरोहितवचनेन शपथं दर्शयति—यां चेति। यस्यां रात्रौ समये उत्पन्नोऽसि प्रेतासि मरिष्यसि तदुभयमन्तरेण उत्पत्तिमरणमध्ये ते तव इष्टापूर्त्ते श्रौतस्मार्त्तकर्मणी लोकं पुण्यलोकं सुकृतादि च वृञ्जीयां नाशयेयम्। यदि मे द्रुह्येः, मम द्रोहं कुर्याः। अथ क्षत्रियवाक्यम्—स य इच्छेदिति। य एवंवित् महाभिषेकफलाभिज्ञः क्षत्रियोऽहं सर्वा जितीर्जयेयमित्यादि फलजातमिच्छेत्स पुरोहितोक्तेऽर्थे न विचिकित्सेत न संशयीत। वृञ्जीथा विनाशय। ते तव। द्रुह्येयं द्रोहं कुर्याम्।

अथ ततो ब्रूयाच्चतुष्टयानि वानस्पत्यानि सम्भरत नैयग्रोधान्यौदुम्बराण्याश्वत्थानि प्लाक्षाणीति क्षत्रं वा एतद्वनस्पतीनां यन्न्यग्रोधो यन्नैयग्रोधानि सम्भरन्ति क्षत्रमेवास्मिंस्तद्दधाति भौज्यं वा एतद्वनस्पतीनां यदुदुम्बरो यदौदुम्बराणि सम्भरन्ति भौज्यमेवास्मिंस्तद्दधाति साम्राज्यं वा एतद्वनस्पतीनां यदश्वत्थो यदाश्वत्थानि सम्भरन्ति साम्राज्यमेवास्मिंस्तद्दधाति स्वाराज्यं च ह वा एतद्वैराज्यं च वनस्पतीनां यत्प्लक्षो य-

त्वाक्षाणि सम्भरन्ति स्वाराज्यवैराज्ये एवास्मिंस्तद्दधात्यथ ततो ब्रूयाच्चतुष्टयान्यौषधानि सम्भरत तोक्मकृतानि व्रीहीणां महाव्रीहीणां प्रियङ्गूणां यवानामिति क्षत्रं वा एतदोषधीनां यद्व्रीहयो यद्व्रीहीणां तोक्म सम्भरन्ति क्षत्रमेवास्मिंस्तद्दधाति साम्राज्यं वा एतदोषधीनां यन्महाव्रीहयो यन्महाव्रीहीणां तोक्म सम्भरन्ति साम्राज्यमेवास्मिंस्तद्दधाति भौज्यं वा एतदौषधीनां यत्प्रियङ्गवो यत्प्रियङ्गूणां तोक्म सम्भरन्ति भौज्यमेवास्मिंस्तद्दधाति सैनान्यं वा एतदोषधीनां यद्यवा यद्यवानां तोक्म सम्भरन्ति सैनान्यमेवास्मिंस्तद्दधाति।(पं०८अ०४खं०१.६)

सम्भारान् विधत्ते—अथेति। अथ क्षत्रियजपधानन्तरं पुरोहितः परिचारकानाह। चतुष्टयानि चतुरवयवानि, वानस्पत्यानि पुष्परहितफलवद्वृक्षसम्बन्धीनि, सम्भरत सम्पादयत। नैयग्रोधानि फलानि। न्यग्रोधो वटः। एवमौदुम्बरादीनि फलानि। वृक्षांस्तौति—क्षत्रमिति। क्षत्रं राजवत्। भौज्यं भोज्यादिसाधनम्। अस्मिन् राज्ञि, दधाति सम्पादयति। चतुष्टयफलसम्पादनेन क्षात्रभौज्यादिलाभः। सम्भारान्तरमाह—अथेति। अथ सम्पादनानन्तरम्, औषधानि ओषधिसम्बन्धीनि, तोक्मकृतानि अङ्कुरोत्पत्तिनिमित्तानि, व्रीहयः सूक्ष्मबीजरूपाः, महाव्रीहयः प्रौढबीजरूपाः। ओषधींस्तौति—क्षत्रमिति। व्रीहीणां बलहेतुत्वात्क्षत्रत्वम्। महाव्रीह्यादीनामपि साम्राज्यहेतुत्वात्ताद्रूप्यम्।

अथास्मा औदुम्बरीमासन्दीं सम्भरन्ति तस्या उक्तं ब्राह्मणमौदुम्बरश्चमसो वा पात्री वोदुम्बरशाखा तानेतान् सम्भारान् सम्भृत्यौदुम्बर्यां पात्र्यां वा चमसे वा समावपेयुस्तेषु समोप्तेषु दधिमधुसर्पिरातपवर्ष्या आपोऽभ्यानीय प्रतिष्ठाप्यैनामासन्दीमभिमन्त्रयेत बृहच्च ते रथन्तरं च पूर्वौ पादौ भवतां वैरूपं च

वैराज्यं चापरौ शाक्वररैवते शीर्षण्ये नौधसश्च कालेयं चानूच्ये ऋचः प्राचीनातानाः सामानि तिरश्चीनवाया यजूंष्यतीकाशा यश आस्तरणं श्रीरुपबर्हणं सविता च ते बृहस्पतिश्च पूर्वौ पादौ धारयतां वायुश्च पूषा चापरौ मित्रावरुणौ शीर्षण्ये अश्विनावनूच्ये इत्यथैनमेतामासन्दीमारोहयेद्वसवस्त्वा गायत्रेण च्छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्नाऽऽरोहन्तु तानन्वारोह साम्राज्याय, रुद्रास्त्वा त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्नाऽऽरोहन्तु तानन्वारोह भौज्यायाऽऽदित्यास्त्वा जागतेन छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्नाऽऽरोहन्तु तानन्वारोह स्वाराज्याय, विश्वे त्वा देवा आनुष्टुभेन च्छन्दसैकविंशेन स्तोमेन वैराजेन साम्नाऽऽरोहन्तु तानन्वारोह वैराज्याय, मरुतश्च त्वाङ्गिरसश्च देवा अतिच्छन्दसा छन्दसा त्रयस्त्रिंशेन स्तोमेन रैवतेन साम्नाऽऽरोहन्तु तानन्वारोह पारमेष्ठ्याय, साध्याश्च त्वाऽऽप्त्याश्च देवाः पाङ्क्तेन च्छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्नाऽऽरोहन्तु तानन्वारोह राज्याय महाराज्यायाधिपत्याय स्वावश्यायातिष्ठायारोहेत्येतामासन्दीमारोहयेत्तमेतस्यामासन्द्यामासीनं राजकर्त्तारो ब्रूयुर्न वा अनभ्युत्क्रुष्टः क्षत्रियो वीर्यं कर्तुमर्हत्यभ्येनमुत्क्रोशामेति तथेति तं राज्यकर्त्तारोऽभ्युत्क्रोशन्तीमं जना अभ्युत्क्रोशत सम्राजं साम्राज्यं भोजं भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यं परमेष्ठिनं पारमेष्ठ्यं राजानं राजपितरं क्षत्रमजनि क्षत्रियोऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ताऽजन्यमित्राणां हन्ताऽजनि ब्राह्मणानां गोप्ताऽजनि धर्मस्य गोप्ताऽजनीति तमभ्युत्क्रुष्टमेवंविदभिषेक्ष्यन्नेतयर्चा ऽभिमन्त्रयेत। (पं. ८ अ. ४ खं. १७)

आसन्द्यादिसम्भारानाह—अथास्मा इति। वानस्पत्यौष-

धसम्भारानन्तरमस्मै क्षत्रियायोदुम्बरकाष्ठसम्बन्धिनीमासन्दीमासनं सम्पादयेयुः । चतुष्कोणो दण्डयुक्तो मध्ये निम्नः पात्रविशेषश्चमसः, आकाररहिता पात्री, तयोरन्यतरत्सम्पादयेत् । यद्वा पात्री मृन्मयी उदुम्बरशाखा च । ततः पात्रीचमसयोरेकस्मिन् वानस्पत्यौषधसम्भारान् समावपेयुः । ततो दध्यादिभिः संसिच्य चमसं भूमौ संस्थाप्य बृहदितिमन्त्रेण आसन्दीमभिमन्त्रयेत् । तस्या आसन्द्या उक्तं ब्राह्मणमित्युक्तम् । तदाह प्रदेशान्तरे—

औदुम्बर्यासन्दी तस्यै प्रादेशमात्राः पादाः स्युररत्निमात्राणि शीर्षण्याऽनूच्यानि मौञ्जं विवयनं व्याघ्रचर्मास्तरणम् । ( पं० ८ अ० २ खं० ५ )

अस्यार्थः । तस्यै तस्याः । वितते अङ्गुष्ठतर्जन्यौ प्रादेशः । पादाश्चत्वारः । प्रादेशद्वयमरत्निः । उपरिभागेऽवस्थितानि काष्ठानि शीर्षण्यानि, तिर्यगवस्थितान्यनूच्यानि । मौञ्जं मुञ्जतृणरज्जुनिर्मितम् । विवयनम् रज्जूनामोतप्रोतरूपेण संयोजनम् । तदुपरि व्याघ्रचर्म निदध्यात् । उदुम्बरव्याघ्रचर्मणी दध्यादि च स्तौति—

अथ यदौदुम्बर्यासन्दी भवत्यौदुम्बरश्चमस उदुम्बरशाखोर्ग्वा अन्नाद्यमुदुम्बर ऊर्जमेवास्मिंस्तदन्नाद्यं दधाति । ( पं० ८ अ० २ खं० ८ )

ऊर्क् अन्नम्, अन्नाद्यं रसः ।

व्याघ्रचर्मणा स्तृणात्युत्तरलोम्ना प्राचीनग्रीवेण क्षत्रं वा एतदारण्यानां पशूनां यद्व्याघ्रः क्षत्रं राजन्यः क्षत्रेणैव तत् क्षत्रं समर्द्धयति । ( पं० ८ अ० २ खं० ६ )

उत्तरलोम्ना उपरिभागस्थितलोम्ना । प्राचीनग्रीवेण प्राग-

चस्थितग्रीवेण । क्षत्रं शूरः । आरण्या हरिणादयः ।

अथ यद्दधि मधु घृतं भवत्यपां य ओषधीनां रसोऽपामेवा-स्मिंस्तदोषधीनां रसं दधात्यथ यदातपवर्ष्या आपो भवन्ति ते-जश्च ह वै ब्रह्मवर्चसं चाऽऽतपवर्ष्या आपस्तेज एवास्मिंस्तद्ब्रह्म-वर्चसं च दधाति । ( पं० ८ अ० २ खं० ८ )

दधिघृतयोः पशुभक्षिततृणोदकजन्यत्वादोषधिरसत्वम् । मधुनोऽपि मधुकरानीतपुष्परसत्वात् । अपाम् आतपसम्बन्धा-त्तेजस्त्वम्, फलोत्पादनाद्ब्रह्मवर्चसत्वम् । आतपवर्ष्याः आत-पयुक्तवर्षाभवा आपः ।

बृहदिति वक्ष्यमाणमन्त्रेणाभिमन्त्रयेदित्युक्तम्, तस्यार्थः— बृहदादीनि सामानि । प्राचीनातानाः प्राक्प्रत्यगायताः । मौञ्जास्तन्तवः । तिरश्चीनवायाः तिर्यक्प्रोतास्तन्तवः । अती-काशा रज्ज्वन्तरालच्छिद्राणि । यशः कीर्त्तिः । उपबर्हणं शिरस उपधानम् । एनं राजानम्, आरोहयेत् पुरोहितः, वसवस्त्वे-त्याद्यारोहान्तेन मन्त्रेण । वस्वादयो देवा गायत्र्यादिभिश्छन्दो-भिस्त्रिवृदादिस्तोमै रथन्तरादिसामभिश्च सह हे आसन्दि त्वां आरोहन्तु । तान् अनु पश्चात् त्वम् आरोह । स्वावश्यं स्वाधी-नत्वम् । राजकर्त्तारः पितृव्यभ्रात्रादयः, परस्परमिदम-ब्रुवन् । यथा वन्दिनो गुणानुवादेन कीर्त्तनम्, एवमत्रापि गु-णकीर्त्तनमभ्युत्क्रोशनं तेन रहितोऽनभ्युत्क्रुष्टः । वीर्यं परभीति-जनकं पराक्रमम्, उत्क्रोशाम, कीर्त्त्या उद्घोषयाम, इति विचार्य, तथेत्यङ्गीकृत्य । अभ्युत्क्रोशनप्रकारः—इममिति । भो जना लोका, इमं क्षत्रियम्, अभ्युत्क्रोशत उद्घोषयत । कीदृशम् । सम्राजं सम्राट्स्वरूपम्, अत एव साम्राज्यं कर्त्तुमर्हति । एवं स्वराजादि । भोजं भोक्तारम् । भोजपितरं भोगपालकम् । क्षत्रं क्षत्रियजा-

तिः । क्षत्रियः पुरुषः । विश्वस्य भूतस्य, सर्वस्य प्राणिजातस्य । विशामत्ता, प्रजानां भोक्ता । अमित्राणां शत्रूणां, गोप्ता रक्षकः । एतया, वक्ष्यमाणया ।

निषसाद धृतव्रतो वरुणः पस्त्याᳮ स्वा ॥ साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठाय सुक्रतुरिति तमेतस्यामासन्द्यामासीनमेवंवित्पुरस्तात्तिष्ठन् प्रत्यङ्मुख औदुम्बर्याऽऽर्द्रया शाखया संपलाशया जातरूपमयेन च पवित्रेणान्तर्द्धायाभिषिञ्चतीमा आपः शिवतमा इत्येतेन तृचेन देवस्य त्वेति च यजुषा भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिः । (पं०८अ०४खं०१८)

धृतव्रतः स्वीकृतनियमो, वरुणः सर्वारिष्टनिवारयितेन्द्रः, पस्त्यासु गृहेषु,आगत्य,साम्राज्यादिसिद्धये,सुक्रतुः शोभनसङ्कल्पो भूत्वा, अस्याम् आसन्द्यां, निषसाद निषण्णवान् । जातरूपं सुवर्णम्, पवित्रं दर्भदलाकारम्, अन्तर्धाय, शाखाया अधः कृत्वा । इमा आपः शिवतमा इत्यादि तृचम् ।

इमा आपः शिवतमा इमाः सर्वस्य भेषजीः ।
इमा राष्ट्रस्य वर्द्धनीरिमा राष्ट्रभृतोऽमृताः ॥
याभिरिन्द्रमभ्यषिञ्चत्प्रजापतिः सोमं राजानं वरुणं यमं मनुम् ।
ताभिरद्भिरभिषिञ्चामि त्वामहं राज्ञां त्वमधिराजो भवेह ॥

महान्तं त्वा महीनां सम्राजं चर्षणीनां देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ ( पं० ८ अ० २ खं० ७ )

देवस्य त्वेतियजुः ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि । बलाय श्रियै यशसेऽन्नाद्याय । ( पं० ८ अ० २ खं० ७ )

इमा दध्यादिद्रव्यसहिताः । शिवतमाः शान्ताः । सर्वरोगस्य भेषजीः, औषधरूपाः । वर्द्धनीः वृद्धिहेतवः । राष्ट्रभृतो राष्ट्रधारिण्यः । अमृताः विनाशरहिताः । याभिः, दध्यादिसहिताभिरद्भिः । अधिराजोऽधिको राजा । त्वा त्वाम् । महीनां महताम् । चर्षणीनां मनुष्याणाम् । जनित्री माता । अजीजनत् उत्पादितवती । अत एव, जनित्री माता, भद्रा पुण्यरूपा, अजीजनत् जाता । सवितुः, प्रेरकस्य देवस्य । प्रसवे, अनुज्ञायां सत्याम् । त्वामभिषिञ्चामि । केन साधनेन । अश्विनोर्बाहुभ्यां, न तु स्वकीयाभ्याम् । मणिबन्धपर्यन्तौ दण्डाकारौ बाहू, अङ्गुलिसहितावग्रभागौ हस्तौ । तेजः शरीरकान्तिः । वर्चः, बाह्यः प्रकाशः । इन्द्रियेण चक्षुरादिपाटवेन । कस्मै प्रयोजनायाभिषेकः ? बलं शारीरं, श्रीः हस्त्यश्वादि । अन्नाद्यमन्नसमृद्धिः ।

भूरिति य इच्छेदिममेव प्रत्यन्नमद्यादित्यथ य इच्छेद्द्विपुरुषं भूर्भुव इत्यथ इच्छेत्त्रिपुरुषं वाऽप्रतिमं वा भूर्भुवः स्वरिति ॥
(पं० ८ अ० २ खं० ७)

य इच्छेदिममेव प्रति, असावन्नमद्यान्नीरोगो भवेदितीच्छेत्, तं यजुषोऽन्ते भूरिति व्याहृत्याभिषिञ्चेत् । असौ पुत्रश्चेति य इच्छेत्स भूर्भुव इत्येताभ्याम् । असौ पुत्रः पौत्रश्चेति कामयेत, अथ वा अप्रतिममेतत्तुल्यक्षत्रियान्तररहितमेनं कुर्यामिति कामयेत तदा भूर्भुवः स्वरिति ।

प्राच्यां त्वा दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय, दक्षिणस्यां त्वा दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भौज्याय, प्रतीच्यां त्वा दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वे-

तेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्यायो-दीच्यां त्वा दिशि विश्वे देवाः षड्भिश्चैव पञ्चविंशैरहो-भिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभि-र्वैराज्यायोर्ध्वायां त्वा दिशि मरुतश्चाङ्गिरसश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः पारमेष्ठ्यायास्यां त्वा ध्रुवायां मध्यमायां प्रति-ष्ठायां दिशि साध्याश्चाप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहो-भिरभिषिञ्चन्त्वेतेन तृचेनैतेन च यजुषैताभिश्च व्याहृतिभीरा-ज्याय माहाराज्यायाधिपत्याय स्वावश्यायातिष्ठायेति स परमेष्ठी प्राजापत्यो भवति स एतेनैन्द्रेण महाभिषेकेणाभिषिक्तः क्ष-त्रियः सर्वा जितीर्जयति सर्वांल्लोकान् विन्दति सर्वेषां राज्ञां श्रै-ष्ठ्यमतिष्ठां परमतां गच्छति साम्राज्यं भौज्यं स्वाराज्यं वैरा-ज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यं जित्वाऽस्मिँल्लोके स्व-यम्भूः स्वराळमृतोऽमुष्मिन् स्वर्गे लोके सर्वान् कामाना-प्त्वाऽमृतः सम्भवति यमेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शाप-यित्वाऽभिषिञ्चति । ( पं० ८ अ० ४ खं० १९ )

प्राच्यां दिश्यवस्थिता वसुरूपा राजानो राजपुरोहिता वा षड्भिः पञ्चविंशैरेकत्रिंशत्सु दिनेषु अभिषिञ्चन्तु । सोऽभिषेकः साम्राज्याय भवति । एवमुत्तरत्र । ऊर्ध्वमध्यमयोः सर्वे । स उक्तमन्त्रेण अभिषिक्तः क्षत्रियः, परमेष्ठिपदयोग्यः प्रजापतिस-म्बन्धी भवति । स्वयम्भूः प्रजापतिसदृशः । स्वराट् स्वतन्त्र-राजः । अमृतो मुक्तः ।

इन्द्रियं वा एतदस्मिँल्लोके यद्दधि यदन्नाऽभिषिञ्चतीन्द्रिय-मेवास्मिंस्तद्दधाति रसो वा एष औषधिवनस्पतिषु यन्मधु

१ दिशोरवस्थितास्सर्वे देवा इत्यर्थः ।

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि-मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं संपूर्णम् ( वेदान्तः ) ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । ( वेदान्तः ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... ... २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ... ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । ... ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मित श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्यो।-प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ... ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद. शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता । ३

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृतिः। बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता। व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी। श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता। श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता। ४

(४५) शास्त्रदीपिका। श्रीपार्थसारथिमिश्र प्रणीता। रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपादः। २

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता। श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसंवलिता। ६

(४७) व्याकरणसिद्धान्तसुधानिधिः। पर्वतीय विश्वेश्वरसूरिविरचितः।

(४८) वीरमित्रोदयः। लक्षणप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः।

(४९) बृहदारण्यकवार्तिकसारः श्रीमद्विद्यारण्यस्वामिविरचितः। महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकयासमलंकृतः।

(५०) वीरमित्रोदयः। राजनीतिप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः।

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः,
चौखम्बा बनारस सिटी।

June 1916.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 222.

# वीरमित्रोदयः ।

राजनीतिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा संशोधितः ।

VÎRAMITRODAYA,

RAJNITI PRAKÂSA,

BY

MAHÂMAHOPÂDHÂYA PANDITA MITRA MISRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. VI.

FASCICULUS II-२

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.

AGENTS:—

OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

*Price Rupee one.*

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२२२


१ अस्यां चौखम्बा- संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्–मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... ... " " १ " ०

६ आपणव्ययः पृथग् नास्ति । ... ... ... ... ... ...


---

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २
(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १०
(३) श्लोकवार्त्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०
(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाष्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) २
(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १
(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः(मीमांसा) २
(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः ( मीमांसा ) २
(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णः । ( वेदान्तः ) ६
(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पूर्णा २
(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्ण(वेदान्तः)१
(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ... ५
(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... ... २
(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १६

यन्मध्वाभिषिञ्चति रसमेवास्मिंस्तद्दधाति तेजो वा एतत्पशू-नां यद् घृतं यद् घृतेनाभिषिञ्चति तेज एवास्मिंस्तद्दधात्यमृतं वा एतदस्मिँल्लोके यदापो यदद्भिरभिषिञ्चत्यमृतत्वमेवास्मि-स्तद्दधाति सोऽभिषिक्तोऽभिषेक्त्रे ब्राह्मणाय हिरण्यं दद्यात्स-हस्रं दद्यात्क्षेत्रं चतुष्पाद्दद्यादथाप्याहुरसङ्ख्यातमेवापरिमितं दद्यादपरिमितो वै क्षत्रियोऽपरिमितस्यावरुद्ध्या इत्यथास्मै सुराकंसं हस्त आदधाति स्वादिष्ठया मदिष्ठया पवस्व सोम धा-रया॥इन्द्राय पातवे सुत इति तां पिबेद्यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः। इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि। अभि त्वा वृषभा सुते सुतं सृजामि पी-तये। तृम्प व्यश्नुही मदामिति यो ह वाव सोमपीथः सुरायां प्रविष्टः सहैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य भ-क्षितो भवति न सुरा तां पीत्वाऽभिमन्त्रयेताऽपाम सोमं शन्नो भवेति तद्यथावादः प्रियः पुत्रः पितरं प्रिया वा जाया पतिं सुखं शिवमुपस्पृशत्यानिस्रस एवं हैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्त-स्य क्षत्रियस्य सुरा वा सोमो वाऽन्यद्वाऽन्नाद्यं सुखं शिव-मुपस्पृशत्याविस्रसः। ( पं० ८ अ० ४ खं० २० )

इन्द्रियमिति। इन्द्रियपाटवहेतुत्वाद्दध्न इन्द्रियत्वम्। मधुनः पुष्पजन्यत्वेनौषधिजन्यत्वम्। घृतस्य शुक्लभास्वरत्वेन प-शुतेजस्त्वम्। अपाम् आप्यायनहेतुत्वादमृतत्वम्। हिरण्यस्यैव सहस्रं विशेषणम्। सहस्रनिष्कमितं हिरण्यं दद्यात्। चतुष्पात् गवादि। असङ्ख्यातमपरिमितं सङ्ख्यारहितं, शक्त्यनुसारेणे-त्यर्थः। अपरमितो बहुधनः। अवरुद्ध्यै प्राप्त्यै। दक्षिणादानो-त्तरं पुरोहितकर्तव्यम्—अथेति। सुरा औदुम्बरपात्रस्थानाङ्कु-राणामभिषुतो रसः, तत्पूर्णं कंसं, कांस्यपात्रं चषकरूपम्।

श्लोका अभिगीताः—

याभिर्गोभिरुदमयं प्रैयमेधा अयाजयन् ।
द्वे द्वे सहस्रे बद्वानामात्रेयो मध्यतोऽददात् ॥
अष्टाशीतिः सहस्राणि श्वेतान् वैरोचनो हयान् ।
प्रष्टीन्निश्चृत्य प्रायच्छद् यजमाने पुरोहिते ॥
देशाद्देशात्समोळ्हानां सर्वासामाढ्यदुहितॄणाम् ।
दशाददात्सहस्राण्यात्रेयो निष्ककण्ठ्यः ॥
दशनागसहस्राणि दत्त्वाऽऽत्रेयो वचत्नुके ।
श्रान्तः पारिकुटान् प्रैप्सद्दानेनाङ्गस्य ब्राह्मणः ॥
शतं तुभ्यं शतं तुभ्यमिति स्मैव प्रताम्यति ।
सहस्रं तुभ्यमित्युक्त्वा प्राणान् स्म प्रतिपद्यते इति ॥ (पं० ८ अ० ४ खं० २२ )

एतेन ह वा ऐन्द्रेण महाभिषेकेण दीर्घतमा मामतेयो भरतं दौष्यन्तिमभिषिषेच तस्मादु भरतो दौष्यन्तिः समन्तं सर्वतः पृथिवीं जयन् परीयायाश्वैरु च मेध्यैरीजे तदप्येते श्लोका अभिगीताः—

हिरण्येन परीवृतान् कृष्णाञ्छुक्लदतो मृगान् ।
मष्णारे भरतोऽददाच्छतं बद्वानि सप्त च ॥
भरतस्यैष दौष्यन्तेरग्निः साचीगुणे चितः ।
यस्मिन् सहस्रं ब्राह्मणा बद्वशो गा विभेजिरे ॥
अष्टासप्ततिं भरतो दौष्यन्तिर्यमुनामनु ।
गङ्गायां वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतं हयान् ॥
त्रयस्त्रिंशच्छतं राजाऽश्वान् बद्धाय मेध्यान् ।
दौष्यन्तिरत्यगाद्राज्ञो मायां मायवत्तरः ॥
महाकर्म भरतस्य न पूर्वे नापरे जनाः ।

दिवं मर्त्य इव हस्ताभ्यां नोदापुः पञ्च मानवाः ॥ इत्येतं ह वा ऐन्द्रं महाऽभिषेकं बृहदुक्थ ऋषिर्दुर्मुखाय पाञ्चालाय प्रोवाच तस्मादु दुर्मुखः पाञ्चालो राजा सन् विद्यया समन्तं सर्वतः पृथिवीं जयन् परीयायैतं ह वा ऐन्द्रं महाभिषेकं वासिष्ठः सात्यहव्योऽत्यरातये जानन्तपये प्रोवाच तस्मादुत्यरातिर्जानन्तपीराजा सन् विद्यया समन्तं सर्वतः पृथिवीं जयन् परीयाय स होवाच वासिष्ठः सात्यहव्यो ऽजैर्षीर्वै समन्तं सर्वतः पृथिवीं महन्मा गमयेति स होवाचात्यरातिर्जानन्तपिर्यदा ब्राह्मणोत्तरकुरूञ्जयेयमथ त्वमुहैव पृथिव्यै राजा स्याः सेनापतिरेव तेऽहं स्यामिति स होवाच वासिष्ठः सात्यहव्यो देवक्षेत्रं वैतन्न वै तन्मर्त्यो जेतुमर्हत्यद्रुक्षो वै म आ त इदं दद इति ततो हात्यरातिं जानन्तपिमात्तवीर्यं निःशुक्रममित्रतपनः शुष्मिणः शैब्यो राजा जघान तस्मादेवंविदुषे ब्राह्मणायैवं चक्रुषे न क्षत्रियो द्रुह्येन्नेद्राष्ट्रादवपद्येयन्नेद्वा मा प्राणो जहादिति जहादिति। (पं० ८ अ० ४ खं० २३)

उक्तं महाभिषेकं पुरा शिष्टाचारोदाहरणेन प्रशंसति—एतेनेति। तुरो महर्षिः। सर्वतः,सर्वासु दिक्षु। समन्तं समुद्रपर्यन्तम्, जयन्। अस्य वृत्तान्तस्य वैदिकैर्यज्ञगाथा गीयते—आसन्दीति। आसन्दीवति देशविशेषे। देवेभ्यो देवतार्थम्। धान्यादं, धान्यमत्ति तम्। रुक्मिणं ललाटगश्वेतलाञ्छनवन्तम्। हरितस्रजं हरितवर्णदेहम्। सारं,कर्मसु श्रेष्ठं यागं गच्छतीति सारङ्गः। अनयाऽभिषेकमाहात्म्यमुक्तम्। न मेति। मा माम्। मर्त्यो मनुष्यः। दिदासिथ दातुमिच्छसि। निमङ्क्ष्ये, मज्जनं करिष्ये। मोघो व्यर्थः। आस बभूव। सङ्गरः प्रतिग्रहः। एतेन अभिषेकमहिम्ना। मरुत इति। मरुतो देवाः। परिवेष्टारः,परिवेषणकर्तारो भूत्वा अवसन्।

कामान् प्रीणाति पूरयति तस्य कामप्रेः, मरुत्तविशेषणम् । विश्वे-देवाः सभासदः सभायामुपविष्टाः, सेवन्त इति शेषः । सहेति । स अङ्गः, अलोपाङ्गः, सम्पूर्णावयवाङ्गः । स्वतो यागं कुर्वाणम्, उदमयमुवाच । हे ब्राह्मण मां यज्ञे उपह्वय । अहं ते तुभ्यं द-क्षिणापूर्त्तये दशनागसहस्राणि ददामि दास्यामि । दानस्या र्थवादः—याभिरिति । प्रियमेधस्य पुत्राः प्रैयमेधा ऋषयः । याभिर्गोभिर्दक्षिणारूपाभिः । बद्वानां शतकोटिसङ्ख्याकानाम् । तासां गवां मध्ये द्वे द्वे सहस्रे प्रतिदिनमात्रेय उदमयोऽदात् । अष्टाशीतिरिति । वैरोचनोऽङ्गः । प्रष्टीन् प्रेष्टवाहनयोग्यान् । नि-श्चृत्य निष्कास्य । यजमाने,जाते सति । समोल्हानाम् आनीताना-म् । आढ्यानां धनिनाम् । ताश्च दुहितरो निष्ककण्ठ्यः । दशे-ति । अङ्गस्य ब्राह्मण उदमयः । अवचत्नुके देशविशेषे । पारिकु-टान् परिचारकान् । प्रैप्सत् प्रेषितवान् । स्वयं दानेन श्रान्तः परिचारकान् दानाय पुरश्चकारेत्यर्थः । वाग्व्यापारश्रमं दर्श-यति—शतमिति । शतं तुभ्यं दापितं गृहाणेत्याद्यप्युक्त्वा, प्रता-म्यति, ग्लानिं प्राप्तवान् । ततः सहस्रमित्युक्त्वा, प्राणान् प्रति-पद्यते स्म, दीर्घं निश्वसितवान् । पुरोहितस्यैतदभिषेकप्रसादल-ब्धं सामर्थ्यम् ।

हिरण्येनेति । मृगान् गजान् । मष्णारे देशविशेषे । शतं सप्तेति । सप्ताधिकशतसङ्ख्यानि । भरतस्येति । भ-रतेन साचीगुणे देशे एषोऽग्निश्चितः । चयनं कृतमित्यर्थः । य स्मिन् चयने । गाः, लब्धा इति शेषः । अश्वेराजि इत्युक्तं तत्स-ङ्ख्यामाह—अष्टेति । यमुनामनु यमुनातीरे । त्रय इति त्रयस्त्रिं-शच्छतमितिपूर्वोक्तसङ्ख्यानिगमनम् । बद्वाय बध्वा । मायवत्तरः, मायावी सन् । राज्ञः शत्रोः, मायामत्यगात्, अतिक्रान्तवान् ।

महेति । पूर्वे पित्रादयः । अपरे पुत्रादयः । नोदापुः, न शक्नुयुः । अत्र दृष्टान्तः–दित्रमिति । हस्ताभ्यां स्प्रष्टुमशक्तः । एवं पञ्च मानवा निषादपञ्चमाश्चत्वारो वर्णाः । अभिषेकं स्तौति–एतमिति । विद्यया महाभिषेकज्ञानेन । विद्याज्ञानेनैव फलसिद्धिं दर्शयति–एतमिति । अत्यरातिर्ब्राह्मणः । महत्, महत्त्वम् ऐश्वर्यं, मा, मां गुरुं, गमय प्रापय । त्वमिति । त्वमेव पृथिव्या राजा भव । पुरोहितमभिषेककर्त्तारं न द्रुह्येदित्युक्तम् , तदतिक्रमफलं दर्शयति । देवक्षेत्रम् उत्तरकुरवः । मे मह्यम् । अद्रुक्षो द्रोहं कृतवान् । मया याचितं महत्त्वं दातुमनिच्छुर्वैश्वनयोत्तरकुरुजयं प्रार्थितवानसि । अतस्ते तव गुरुद्रोहिण, इदं सामर्थ्यम्,आददे अपहरामि । आत्तवीर्यम् अपहृतवीर्यम् । शुष्मिणो राजा । एवंविदुषे अभिषेकज्ञाय । चक्रुषे कर्त्रे । अद्रोहे कारणमाह नेदिति । नैव राष्ट्राद्देशाधिपत्याद् भ्रष्टो भूयासम् । जहत् परित्यजतु ।

अत्र ऋग्विधानोक्तः प्रकारविशेषः ।
राजानमभिषिञ्चयेत तिष्येण श्रवणेन वा ।
पौष्णसावित्रसौम्याश्विरोहिण्यामुत्तरासु च ॥
हुत्वाऽग्निं राजलिङ्गाभिः सावित्र्या प्रयतः शुचिः ।
महाव्याहृतिभिश्चैव सम्पाताभिर्हुतो भवेत् ॥
सर्वौषधिरसैः श्लक्ष्णैर्नदीनां सलिलेन च ।
व्याघ्रचर्मण्यथासीनमासन्द्यामभिषिञ्चयेत् ॥
तिष्ठन् प्रत्यङ्मुखो ब्रूयाज्जय त्वं पृथिवीमिमाम् ।
धर्मस्ते निखिलो राजन् वर्द्धतां पालय प्रजाः ॥
वर्द्धस्व च श्रियै पुष्ट्यै जयायाभ्युदयाय च ।
राजानः सन्तु ते गोत्रे ततोऽप्रतिरथं जपेत् ॥

वैयाघ्रं तु भवेच्चर्म समिदौदुम्बरी भवेत् ।
त्रिरेतमभिषिच्यैवं दुन्दुभीनभिमन्त्रयेत् ॥
प्राच्यां तु दिशि वसवो ह्यभिषिञ्चन्तु तेजसे ।
दक्षिणस्यां दिशि रुद्रा अभिषिञ्चन्तु वृद्धये ॥
प्रतीच्यां दिशि त्वादित्या अभिषिञ्चन्तु पुष्टये ।
विश्वेदेवा उदीच्यां तु अभिषिञ्चन्तु श्रेयसे ॥
अभिषिच्य च राजानमाशीर्भिरभिनन्द्य च ।
आत्वाहार्षमन्तरेधीत्यथैनमभिमन्त्रयेत् ॥
पतङ्गमिति नित्यं तु जपेदज्ञानभेदनम् ।
मायाभेदनमेतद्धि सर्वमाया प्रबाध्यते ॥

आत्वाहार्षमिति षड्ऋचस्य सूक्तस्य आङ्गिरसो ध्रुव ऋषिरनुष्टुप्छन्दः अभिषिक्तस्य राज्ञः स्तुतिरूपोऽर्थो देवता अभिमन्त्रणे विनियोगः । तदुक्तम्—

आत्वा षड् ध्रुवो राज्ञः स्तुतिस्त्वानुष्टुभं त्विति ।
आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः ।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधिभ्रशत् ॥
इहैवैधि मा पच्योष्ठाः पर्वत इवाविचाचलिः ।
इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमुधारय ॥
इममिन्द्रो अदीधरद् ध्रुवं ध्रुवेण हविषा ।
तस्मै सोमो अधिब्रवत्तस्मा उ ब्रह्मणस्पतिः ॥
ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ।
ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामयम् ॥
ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ।

ध्रुवन्त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥
ध्रुवं ध्रुवेण हविषाभिसोमं मृशामसि ।
अथो त इन्द्रः केवलीर्विशो बलिहृतस्करत् ॥

आत्वेति प्रथमा । हे राजन् त्वा त्वाम्, अस्मद्राष्ट्रस्य स्वामित्वेनाहार्षं, स त्वमस्मासु अन्तः मध्ये,एधि स्वामी भव, ध्रुवः नित्यः सन्, अविचाचलिः चलनरहितश्च सन्, तिष्ठ राष्ट्रमधितिष्ठ । सर्वा विशः प्रजाः । त्वा त्वाम् । वाञ्छन्तु,अयमेव सर्वदाऽस्माकं राजाऽस्त्वितीच्छन्तु । त्वत्, त्वत्तः सकाशात् । राष्ट्रं राज्यम् । माऽधिभ्रशत्, मा भ्रश्यतु, मा वियुक्तं भवतु । इहैवेति द्वितीया । हे राजन्, इहैव अस्मिन्नेव राज्ये । एधि, सदा स्वामी भव । मा पच्योष्ठाः, अपच्युतो मा भूः । पर्वत इव चलनरहितो भव । इह राष्ट्रमुधारय, इह लोके राष्ट्रं च स्वे स्वे कर्मण्यवस्थापय । इममिन्द्र इति तृतीया।इमम्, अभिषिक्तम् । ध्रुवेण स्थिरेण, हविषा तप्यमानं, ध्रुवं स्थिरम्, इन्द्रः अदीधरत् धारयतु । तस्मै राज्ञे, सोमो ब्रह्मणस्पतिर्मन्त्रप्रतिपालको देवश्च, अधिब्रवत्, मदीयोऽयमिति ब्रवीतु । ध्रुवा द्यौरिति चतुर्थी । यथा द्यौरादयो ध्रुवाः स्थिराः । विश्वं सर्वम् । एवं विशां प्रजानां, राजा, ध्रुवः, स्थिरो भवतु । पञ्चमी ध्रुवं त इति । हे राजन् ते तव राष्ट्रं राजा वरुणो बृहस्पत्यादयश्च धारयन्तु । षष्ठी ध्रुवमिति । वयमृत्विजो यागार्थं, ध्रुवं सोमं, ध्रुवेण, हविषा पुरोडाशादिना युक्तम् । अभिमृशामसि संस्पृशाम । अथो अथ, इन्द्रस्ते विशः प्रजाः, केवलीः असाधारणाः, बलिहृतः कामदात्रीः, करत् करोतु ।

पतङ्गमिति तृचस्य सूक्तस्य प्राजापत्यः पतङ्ग ऋषिः आद्याया जगतीच्छन्दः द्वयोस्त्रिष्टुप्छन्दः मायाभेदनं देवता

मायाभेदने विनियोगः । तदुक्तम्—पतङ्गः प्राजापत्यो मायाभेदं जगत्यादीति ।

पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः।
समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः ॥
पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तः।
तां द्योतमानां स्वर्यं मनीषामृतस्य पदे कवयो निपान्ति ॥
अपश्यङ्गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः ॥

प्रथमा पतङ्गमिति । असुरस्य सर्वोपाधिरहितस्य परब्रह्मणः सम्बन्धिन्या, मायया त्रिगुणात्मिकया, अक्तम् अभिव्यक्तं, पतङ्गं सूर्यं, विपश्चितो विद्वांसो, हृदा मनसा, हृत्स्थेन मनसा, पश्यन्ति जानन्ति। कवयः क्रान्तदर्शिनः, समुद्रे, समुद्द्रवन्त्यस्मादृश्मय इति समुद्रः सूर्यमण्डलं तस्मिन्, अन्तः, मध्ये, विचक्षते विपश्यन्ति । मण्डलान्तर्वर्त्तिनं हिरण्मयं पुरुषमपि जानन्तीत्यर्थः। अयमेवार्थः—

आदित्यपुराणे,

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान्मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

एवंविधा वेधसो विधातारः सूर्योपासनकर्तारो, मरीचीनां रश्मीनां, पदं, स्थानं सूर्यमण्डलम्, इच्छन्ति प्राप्नुवन्ति । यद्वा मायया प्रज्ञया, अक्तं जीवरूपेणाभिव्यक्तं, विपश्चितो वेदान्ता-

भिज्ञाः, हृत्स्थेनान्तर्मुखेन मनसा, पतङ्गं परमात्मानं, पश्यन्ति, उपाधिपरित्यागेन जीवात्मनः परमात्मना तादात्म्यं साक्षात्कुर्वन्ति। अपिच, ते कवयो वेदान्ताभिज्ञाः, समुद्द्रवन्त्यस्मिन्निति समुद्रः परमात्मा तस्मिन्नधिष्ठानभूते, अन्तर्मध्ये, सर्वं दृश्यगध्यस्तत्वेन पश्यन्ति। अतो दृश्यातिरिक्तस्य मिथ्यात्वात्, वेधसो विधातारो, मरीचीनां वृत्तिज्ञानानाम्, पदम्, अधिष्ठानभूतं सच्चित्सुखात्मकं यत् परं ब्रह्म, तदेवेच्छन्ति, तद्भावप्राप्तिमेव कामयन्ते। द्वितीया पतङ्गो वाचमिति। पतङ्गः सूर्यः, वाचं त्रयीरूपां, मनसा प्रज्ञया, बिभर्त्ति धारयति। श्रूयते हि—

ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः।
सामवेदेनास्तमये महीयते वेदैरशून्यैस्त्रिभिरेति सूर्यः॥ इति।

तामेव वाचं, गर्भे, शरीरस्य मध्ये, वर्त्तमानो, गन्धर्वः, गाः शब्दान् धारयतीति गन्धर्वः प्राणवायुः, अन्तः मध्ये, अवदत्, वदति, प्रेरयति।

"मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्"

इतिस्मरणात्। द्योतमानां, स्वर्यं स्वर्गमयित्रीं, स्वर्गाय हितां वा। मनीषां मनस ईषाम्। तां त्रयीरूपां वाचम्। ऋतस्य यज्ञस्य, सत्यभूतस्य सूर्यस्य वा। पदे स्थाने, कवयो, मेधाविन ऋषयः। निपान्ति, अध्ययनेन नितरां रक्षन्ति। यद्वा पतङ्गः, सर्वोपाधिशून्यो व्याप्तः परमात्मा, सृष्ट्यादौ वाचं मनसा बिभर्त्ति, कानि कानि स्रष्टव्यानीति पर्यालोचनया मनसा सर्वार्थप्रतिपादकं वेदं परामृष्टवानित्यर्थः। स्मर्यते हि—

वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः। इति।

गर्भे, हिरण्मये ब्रह्माण्डे, अन्तर्वर्त्तमानो गन्धर्वो हिरण्यगर्भः, तां वाचमवदत्, प्रथममुच्चारितवान्। द्योतमानत्वादिगुणविशि-

ष्टां तां वाचं, कवयः, क्रान्तदर्शिनो देवाः, ऋतस्य सत्यस्य ब्रह्मणः, पदे स्थाने, निपान्ति निभृतं रक्षन्ति । तृतीया अपश्यं गोपामिति । गोपां गोपायितारमादित्यम् । अपश्यम् अज्ञासिषम् । एष हि सर्वाणि भूतानि उदयास्तमयादिकर्मणा गोपायति । कीदृशम्, अनिपद्यमानम् उच्चैर्गच्छन्तम्, पथिभिराकाशमार्गैः, पूर्वाह्णे आचरन्तं सम्मुखमागच्छन्तं, सायं पराङ्मुखं गच्छन्तम् । प्रकारद्वयसमुच्चयार्थौ चशब्दौ । स सूर्यः, सध्रीचीः प्राच्यादिमहादिशः, सविषूचीराग्नेय्याद्यवान्तरदिशो, वसानः प्रकाशयन्, भुवनेषु, अन्तर्मध्ये, आवरीवर्त्ति उद्यन्नस्तङ्गच्छंश्चावर्त्तते । यद्वा, गोपां शरीरस्य गोपायितारम् । अनिपद्यमानम् अविनाशिनम् । पथिभिः नाडीमार्गैः, आभिमुख्येन पराङ्मुखेन च शरीरे वसन्तमहमपश्यम् अदर्शम् ।

पूर्वोक्तानां श्रौतानामभिषेकानापविरुद्धानामेकत्रोपसंहारेणैकोऽभिषेकः कार्यः, "सर्वशाखाप्रत्ययमेकं कर्म" इतिन्यायादित्येके । अन्ये तु श्रौतानां स्मार्त्तानां च तत्तच्छ्रुतिस्मृतिपठितानामङ्गानामनुपसंहारेणैकैकप्रयोगमिच्छन्ति । तदेवं यस्य पुरोहितस्य स्वशाखाविहितत्वेन यः पक्षः सन्निःहितस्तेनैव तेनाभिषेकः कार्यः ।

इत्यैतरेयब्राह्मणोक्तो राजाभिषेकः ।
अथाथर्वणपरिशिष्टोक्तः पुष्पाभिषेको निरूप्यते ।
अथ पुष्पाभिषेकस्य विधिं वक्ष्यामि साम्प्रतम् ।
धर्मार्थकामसंयुक्तं राजा कुर्यात्पुरोहितम् ॥
सौवर्णै राजतैस्ताम्रैः कलशैः पार्थिवैरपि ।
सहस्रेण शतेनाथ तोयग्रहणमिष्यते ॥
चतुर्णां सागराणां तु नदीनां च शतस्य तु ।

अभिषेकाय राज्ञस्तु तोयमाहृत्य यत्नतः॥
एकद्वित्रिचतुर्णां वा सागरस्य तु पञ्चमम्।
औषधीस्तेषु सर्वेषु कलशेषूपकल्पयेत्॥
सहा च सहदेवी च ····बला तथा।
सदयन्ती वचा श्वेता व्याघ्रदन्ती सुमङ्गला॥
शतावरी जयन्ती च शतपुष्पा सचन्दना।
प्रियङ्गुरोचनोशीरममृता च ससारिवा॥
अश्वत्थप्लक्षबिल्वानां न्यग्रोधपनसस्य च।
शिरीषाम्रकपित्थानां पल्लवैः समलङ्कृतान्॥
हेमरत्नौषधीबिल्वपुष्पगन्धाधिवासितान्।
आच्छादितान् सितैर्वस्त्रैरभिमन्त्र्य पुरोहितः॥
सावित्र्युभयतः कृत्वा शन्नोदेवीस्तथैव च।
हिरण्यवर्णासूक्तं च अनुवाकाद्यमेव च॥
धरणी पादपीठं स्याद्दूर्वामूलाङ्कुराञ्छुभान्।
तस्योपरि भवेत्पीठं हैमं रौप्यमथापि वा॥
अनडुद्व्याघ्रसिंहानां मृगस्य च यथाक्रमम्।
चत्वारि चर्माण्येतानि पूर्वादारभ्य विन्यसेत्॥
चातुर्होत्रविधानेन जुहुयाच्च पुरोहितः।
चतुर्दिक्षु स्थितैर्विप्रैर्वेदवेदाङ्गपारगैः॥
बिल्वाहारः फलाहारः पयसा वापि वर्त्तयेत्।
सप्तरात्रं घृताशी वा ततो होमं प्रयोजयेत्॥
गव्येन पयसा कुर्यात्सौवर्णेन स्रुवेण तु।
वेदानामादिभिर्मन्त्रैर्महाव्याहृतिपूर्वकैः॥
शर्मवर्मगणश्चैव तथा स्यादपराजितः।
आयुष्यश्चाभयश्चैव तथा स्वस्त्ययनो गणः॥

एतान् पञ्च गणान् हुत्वा वाचयेत्तु द्विजोत्तमान् ।
हिरण्येनाक्षताढ्येन फलैश्च मधुसर्पिषा ॥
पुण्याहं वाचयित्वास्य प्रारम्भं कारयेद्बुधः ।
तिथिनक्षत्रसंयुक्ते मुहूर्त्ते करणे शुभे ॥
उच्चैर्घोषयते तूर्याण्यभिमन्त्र्य पुरोहितः ।
सर्वतूर्यनिनादेन अभिषिक्तो ह्यलङ्कृतः ॥
सिंहासनं समारुह्य पीठकं वा क्रमागतम् ।
चामरच्छत्रसंयुक्तं प्रतीहारविभूषितम् ॥
मत्तद्विपचतुष्कं च चतुर्दिक्षु प्रकल्पयेत् ।
उपविष्टस्ततो राजा प्रजानां कारयेद्धितम् ॥
अकरा ब्राह्मणा गावः स्त्रीबालजडरोगिणः ।
ततस्तु दर्शनं देयं ब्राह्मणानां नृपेण तु ॥
श्रेणीप्रकृतिमुख्यानां स्त्रीजनं च नमस्करेत् ।
आशिषस्ते हि दास्यन्ति तुष्टा जनपदा भुवि ॥
एवं प्रजाऽनुरज्येत पृथिवी च वशा भवेत् ।
पुरोहितं मन्त्रिणं च सेनाध्यक्षं तथैव च ॥
अश्वाध्यक्षं गजाध्यक्षं कोष्ठागारपतिं तथा ।
भाण्डागारपतिं वैद्यं दैवज्ञं च यथाक्रमम् ॥
यथार्हेण च योगेन सर्वान् सम्पूजयेन्नृपः ।
राज्यं पुरोहिते न्यस्य शेषाणां च यथाक्रमम् ॥
स्थानान्तराणि चान्यानि दत्त्वा सुखमवाप्नुयाद् ।
दूर्वासिद्धार्थकान् सर्पिः शमी व्रीहियवौ तथा ॥
शुक्लानि चैव पुष्पाणि मूर्ध्नि दद्यात्पुरोहितः ।
अथर्वविहितो ह्येष विधिः पुष्याभिषेचने ॥
राजा स्नातो महीं भुङ्क्ते शक्रलोकं स गच्छति ।
इति पुष्याभिषेकः ।

अथ राज्ञो जन्मनक्षत्रे प्रतिमासमभिषेक उक्तो—
विष्णुधर्मोत्तरे,
पुष्कर उवाच ।
राजा तु जन्मनक्षत्रे प्रतिमासं समाचरेत् ।
जन्मनः क्षालकं कर्म यत्तत्पूर्वं मयेरितम् ॥
पुष्यस्नानं तथा कुर्यात्प्रतिमासं नराधिप ।
सङ्क्रान्तं पूजयेत्सूर्यं वालमिन्दुं तथैव च ॥
ग्रहं सम्पूजयेद्राजा निर्गतं रविमण्डलात् ।
निर्गतम् उदितम् ।
अगस्त्यस्योदये कार्या तथा पूजा नराधिपैः ॥
इति प्रतिमासं जन्मनक्षत्रे अभिषेकः ।

अथ संवत्सराभिषेकः ।

विष्णुधर्मोत्तरे,
राम उवाच ।
सम्वत्सराभिषेकं च कथयस्व महीक्षितः ।
तत्र मे संशयो देव त्वं हि सर्वविदुच्यसे ॥

पुष्कर उवाच ।

राजाभिषेकनक्षत्रे प्रतिसंवत्सरं द्विजैः ।
पूर्वाभिषेकविधिना कर्त्तव्यमभिषेचनम् ॥
धन्यं यशस्यं रिपुनाशनं च सौभाग्यदं पुष्टिविवर्द्धनं च ।
वर्षाभिषेकं नृपतेः प्रदिष्टं सौख्यावहं राज्यविवृद्धिदं च ॥ इति।
ब्रह्मपुराणेऽपि—
राजाभिषेकमुक्त्वा,
अनेन विधिना यस्तु कुर्याद्वर्द्धापनं सदा ।

अभिषेकाद्धि यत्नेन प्रतिसंवत्सरं नृपः ॥ इति ।

इति संवत्सराभिषेकः ।

अथाभिषिक्तस्य राज्ञो गुणवतो जनपदपरिपालनादीन् धर्मान् वक्तुं यैर्गुणैः प्रजापालनयोग्यो भवति ते गुणा उच्यन्ते । तत्र—

शङ्खलिखितौ, राजा दीर्घदर्शी महोत्साहः शक्तिमाननसूयुर्भक्तबलस्त्यागी शरण्यः सर्वभूतानां संविभक्तः सत्यवागमत्सरी गम्भीरोऽमर्षणो बुधस्तेजस्वी प्रतिविधानकुशलोऽदीर्घसूत्रो दक्षः क्षमावान् लक्ष्यज्ञो देशकालद्रव्यप्रयोगसङ्ग्रहनिमित्तज्ञानकुशलो गूढमन्त्रप्रचारसंवृतरन्ध्रः पररन्ध्रज्ञो दृढप्रहारी लघुहस्तो जितस्थानासनहिमातपो जितकामरागद्वेषलोभमत्सरः प्रजाभिरामो दीनानुग्रहकर्त्ता ब्राह्मणेष्वन्नप्रदाता श्रीयशोऽर्थी ।

अस्यार्थः । दीर्घदर्शी अनागतकार्यतत्त्वज्ञः । महोत्साहः, पुरुषार्थसाधनकर्माध्यवसाय उत्साहः स महान् यस्य सः । बहुविषयत्वमविहन्यमानत्वं चोत्साहस्य महत्त्वम् । शक्तिमान् प्रभावोत्साहमन्त्रशक्तित्रययुक्तः । अनसूयुः, असूया परगुणेषु दोषारोपस्तद्रहितः । गम्भीरः अनुपलक्षितक्रोधहर्षाद्याकारः । अमर्षणः परसमृद्धेरसोढा । प्रतिविधानम्, उपस्थितानिष्टप्रतीकारः, तत्र कुशलः । अदीर्घसूत्रः, अचिरक्रियः, अवश्यकार्याणां कर्मणां प्रारम्भे प्रारब्धानां च परिसमाप्तौ यो न विलम्बते । दीर्घसूत्रस्य कर्महानिरुक्ता—

मत्स्यपुराणे,

अदीर्घसूत्रश्च भवेत्सर्वकर्मसु पार्थिवः ।
दीर्घसूत्रस्य नृपतेः कर्महानिर्ध्रुवं भवेत् ॥ इति

कार्यविशेषे दीर्घसूत्रतापि कर्त्तव्येत्युक्तम्—

तत्रैव,

दोषे दर्पे च माने च द्रोहे पापे च कर्मणि ।
अप्रिये चैव कर्त्तव्ये दीर्घसूत्रः प्रशस्यते ॥ इति ।

लक्ष्यज्ञः तत्कालकर्त्तव्यज्ञः । गूढमन्त्रप्रचारः फलानुमितमन्त्रतत्त्वः । संवृतरन्ध्रः, रन्ध्रं यत्र परे प्रभवन्ति, तत्संवृतं यस्य ।

तथा च मनुः,

नास्य च्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ इति ।

तथा यत्रातिशयं कुर्याद्यथाऽस्य च्छिद्रं शत्रुर्न जानाति, शत्रोस्तु छिद्रं प्रकृतिभेदादिकं चारैर्जानीयात् । यथा कूर्मो मुखचरणादीन्यङ्गानि आत्मदेहे गोपायति, एवममात्यादीनि राज्याङ्गानि दानमानसत्कारैरात्मसात्कुर्यात् । दैवात्प्रकृतिभेदे जाते यत्नतः प्रतीकारं कुर्यात् । जितमत्सर इति पुनर्ग्रहणम् उत्पन्नस्यापि मत्सरस्याप्रकाशनार्थम् । प्रजाभिरामः प्रजानामभिरमयिता ।

गौतमः, राजा सर्वस्येष्टे ब्राह्मणवर्जं साधुकारी साधुवादी त्रय्यामान्वीक्षिक्यां चाभिविनीतः शुचिर्जितेन्द्रियो गुणवत्सहायोपायसम्पन्नः समः प्रजासु स्यात् हितं चासां कुर्वीत ।

सर्वस्य जनपदस्य, ईष्टे, अधिपतिर्भवति निग्रहानुग्रहादिषु, ब्राह्मणवर्जम्, ततस्ते स्वधर्मात् च्यवन्तोऽपि सान्त्वेन धर्मेऽवस्थाप्याः । सर्वक्रियासु स्वतन्त्रताख्यापनार्थं वचनम् । यथाह—

नारदः,

अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः । इति ।

साधुकारी शास्त्राविरुद्धाचरणशीलः। साधुवादी, व्यवहारकाले सत्यवादी । त्रयी ऋग्यजुःसामवेदाः । अथर्वणस्तु वेद एतेष्वेवान्तर्भवति । ऋग्यजुरात्मकत्वात्तस्य । भेदव्यवहारस्तु प्रवचननिमित्तः शान्तिकपौष्टिकप्रमेयभेदनिबन्धनो वा।आन्वीक्षिकी, वेदाद्यविरुद्धा आत्मज्ञानोपयोगिनी न्यायविद्या । तयोरभिविनीतो गुरुभिः सम्यक् शिक्षितः ।

मनुस्तु,

त्रैविद्येभ्यस्त्रयीं विद्याद्दण्डनीतिं च तद्विदः ।
आन्वीक्षिकीं चात्मविद्भ्यो वार्तारम्भांश्च लोकतः ॥ इति।

विद्यामिति द्वितीयान्तपाठे पूर्वोक्तमनुश्लोकादधिगच्छेदित्यनुपञ्जनीयम् । शुचिः, अन्तः परद्रव्यादिष्वस्पृहः, बहिः स्नानादिपरः । जितेन्द्रियः इन्द्रियजयवान् । अस्य फलमाह–

मनुः,

इन्द्रियाणां जये योगं समातिष्ठेद्दिवानिशम् ।
जितेन्द्रियो हि शक्नोति वशे स्थापयितुं प्रजाः ॥ इति ।

गुणवत्सहायाः, चारित्रादिमन्तोऽमात्याः, उपायाः, सामादयः सप्त वक्ष्यन्ते, तैरुपसम्पन्नो युक्तः । समः प्रजासु, प्रिये द्वेष्ये च । हितं, तडागखननादिना । आसां प्रजानाम् ।

याज्ञवल्क्यः,

महोत्साहः स्थूललक्ष्यः कृतज्ञो वृद्धसेवकः ।
विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक् शुचिः ॥
अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा ।
धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥
स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ।
विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥

स्थूललक्ष्यः बहुदेयार्थदर्शी । तस्य च सर्वा पृथिवी वश्या भवतीत्युक्तम्—

मत्स्यपुराणे,

भाव्यं धर्मभृतां श्रेष्ठ स्थूललक्ष्येण भूभृता ।
स्थूललक्ष्यस्य वशगा सर्वा भवति मेदिनी ॥ इति ।

परकृतोपकारापकारौ न विस्मरतीति कृतज्ञः । वृद्धसेवकः, विनयशिक्षार्थं तपोज्ञानादिवृद्धनां सेवकः । तदुक्तम्—

मनुना,

वृद्धांश्च नित्यं सेवेत विप्रान् वेदविदः शुचीन् ।

वृद्धान्, वयस्तः, ब्राह्मणानब्राह्मणान् वा । विप्रानित्यादि व्याख्यातप्रायम् । शुचीन् निरुपधीन् । एतदप्यपूर्वमिति मेधातिथिः । कुल्लूकभट्टस्तु विप्रानित्यस्य सर्वाणि विशेषणानीत्याह ।

वृद्धसेवी च सततं रक्षोभिरपि पूज्यते ।

रक्षांसि, निर्दयानि महाबलानि सर्वधर्मशून्यानि, तैरपि पूज्यते किमुत मनुष्यैरिति कैमुतिकन्यायद्योतनार्थमिदम् । वृद्धसेवायाः फलमाह—

तेभ्योऽधिगच्छेद्विनयं विनीतात्मापि नित्यशः ।

विनीतात्मापि पाटवातिशयजननार्थं विनयमधिगच्छेत् ।

विनीतात्मा हि नृपतिर्न विनश्यति कर्हिचित् ।
बहवोऽविनयाद्भ्रष्टा राजानः सपरिच्छदाः ॥
वनस्थाश्चैव राज्यानि विनयात्प्रतिपेदिरे ।
वेनो विनष्टोऽविनयान्नहुषश्चैव पार्थिवः ॥
सुदासः पैजवनश्च सुमुखो निमिरेवच ।

सुदासनामा पैजवनस्य पुत्रः । तथा च—

ब्राह्मणम्, तस्मादु सुदासः पैजवन इति ।

पृथुश्च विनयाद्राज्यं प्राप्तवान्मनुरेव च ।
कुबेरश्च धनैश्वर्यं ब्राह्मण्यं चैव गाधिजः ॥ इति ।

महाभारते,

न राज्यं प्राप्तमित्येव वर्त्तितव्यमसाम्प्रतम् ।
श्रियं ह्यविनयो हन्ति जरारूपमिवोत्तमम् ॥

विनीतो विनययुक्तः । विनयशब्देनाविरुद्धः पूर्वोक्तः स्नातकधर्मकलाप उच्यते । " न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् " इत्यादिनोक्तः । सत्त्वसम्पन्नः सम्पदापदोर्हर्षविषादरहितः । दुर्दशामापन्नोऽपि न न्यायादपैति स सत्त्वसम्पन्न इत्यपरार्कः । मातृतः पितृतश्चाभिजनवान् कुलीनः । अवगताविस्मरणशीलः स्मृतिमान् । अनल्पहृदयः, योऽल्पापकारोपकाराभ्यां कोपप्रसादवान् सोऽल्पहृदयः, तथा न भवतीत्यर्थः । अपरुषः अकठोरवाक् । धार्मिकः प्रसिद्धवर्णाश्रमधर्मान्वितः । पुरुषार्थविक्षेपकं द्यूतादि व्यसनं तद्रहितोऽव्यसनः । व्यसनानि वक्ष्यन्ते । प्राज्ञो गम्भीरार्थावधारणक्षमः । शूरो निर्भयः । रहस्यवित् गोपनीयगोपनचतुरः । स्वरन्ध्रगोप्ता, स्वस्य सप्तसु राज्याङ्गेषु यस्य वैकल्ये परप्रवेशस्तस्य गोप्ता रक्षकः ।

कात्यायनः,

विनीतः शास्त्रसम्पन्नः कोशशौर्यसमन्वितः ।
ब्रह्मण्यो दानशीलः स्याद्धर्मसत्यपरो नृपः ॥
स्तम्भोपतापपैशुन्यचापलक्रोधवर्जितः ।
प्रगल्भः सन्नतोदग्रः सम्भाषी प्रियदर्शनः ॥
वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।

परीक्ष्य कारिणं धीरमत्यन्तं श्रीर्निषेवते ॥

स्तम्भः परामर्णातिः । उपतापोऽत्र प्रजापीडनम् । पैशुन्यं परदोषाविष्करणम् । प्रगल्भः अपरिषद्भीरुः । सन्नतोदग्रः, सत्सु नतोऽसत्सु अधृष्यः । संभाषी स्मितपूर्वाभिभाषी । तदुक्तम्—

मत्स्यपुराणे,

स्मितपूर्वाभिभाषी स्यात्सर्वस्यैव महीपतिः ।
वध्येष्वपि महाभाग भ्रुकुटिं न समाचरेत् ॥ इति ।

विष्णुरपि राजेत्यनुवृत्तौ,

स्मितपूर्वाभिभाषी स्याद्वध्येष्वपि न भ्रुकुटिमाचरेदिति ।

एतेषु गुणेषु केषांचिद्व्यवस्थामप्याह—

मनुः,

स्वराष्ट्रे न्यायवृत्तः स्याद्भृशं चण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥

याज्ञवल्क्योऽपि,

ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मी क्रोधनोऽरिषु ।
स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥ इति ।

इति राजगुणाः ।

अथ राजधर्माः ।

तत्रादौ विहितधर्मा उच्यन्ते ।

मत्स्यपुराणविष्णुधर्मोत्तरयोः,

स्वे स्वे धर्मे व्यवस्थानं वर्णानां पृथिवीपतेः ।
परो धर्मः सदा प्रोक्तस्तत्र यत्नपरो भवेत् ॥
स्वधर्मप्रच्युतान् राजा स्वे धर्मे विनियोजयेत् ।

व्यवस्थानं व्यवस्थापनम् । तथा च—

विष्णुः, वर्णाश्रमाणां स्वे स्वे धर्मे व्यवस्थापनम् । इति ।

वर्णाश्रमपदे सङ्करपाखण्डादीनामप्युपलक्षके । सङ्कराणां वर्णमूलत्वात्, पाखण्डानामाश्रममूलत्वात् । तथा च–

विष्णुपुराणे,

यस्तु सन्त्यज्य गार्हस्थ्यं वानप्रस्थो न जायते ।
परिव्राडपि मैत्रेय स नग्नः पापकृन्नरः ॥ इति ।

स्वे स्वे धर्म इति वीप्सया सामयिकधर्माणामपि सङ्ग्रहः ।

देवब्राह्मणगोसाध्वीसाधूनामपि पूजनम् ।
समता व्यवहारेषु स्वयं चैवान्ववेक्षणम् ॥

व्यवहाराणामिति शेषः । तदुक्तम्–

याज्ञवल्क्येन,

व्यवहारान्नृपः पश्येत्–इति ।

राज्ञां धर्मं परं विद्यात्तथा वै चरदृष्टिता ।
स्वदेशपालनं धर्मः परराष्ट्राभिमर्दनम् ॥
यज्ञदानक्रिया चैव सङ्ग्रामे चापलायनम् ।

कामादीनामाभ्यन्तराणां स्वविषयवासित्वेनाऽऽभ्यन्तराणां भृत्यादीनां च जय उक्तः—

तत्रैव,

कामः क्रोधो मदो मानो लोभो हर्षस्तथैव च
जेतव्यो रिपुषड्वर्ग आन्तरः पृथिवीक्षिता ॥

स्वस्वविषये व्यवस्थापनं जयः ।

एतेषां विजयं कृत्वा कार्यो भृत्यजयस्तथा ।
कृत्वा भृत्यजयं राजा पौरान् जानपदान् जयेत् ॥
कृत्वा च विजयं तेषां शत्रून् बाह्यांस्ततो जयेत् ।

अन्तिमो जयः पराभवः । बाह्यास्त्रिविधा उक्ताः—

तत्रैव,

बाह्याश्च त्रिविधा ज्ञेयास्तुल्याभ्यन्तरकृत्रिमाः ॥
गुरवस्ते यथापूर्वं तेषु यत्नः सदा भवेत् ।
अमात्यादिभी राजा रक्ष्यो राज्ञा च ते रक्ष्या इत्युक्तम्–
तत्रैव,
स्वाम्यमात्यो जनपदो दुर्गं दण्डस्तथैव च ।
कोशो मित्रं च धर्मज्ञ सप्ताङ्गं राज्यमुच्यते ॥
दण्डो बलम् ।
सप्ताङ्गस्यापि राज्यस्य मूलं स्वामी प्रकीर्त्तितः ।
मूलं प्रधानम् ।
तन्मूलत्वात्तथाङ्गानां स तु रक्ष्यः प्रयत्नतः ॥
अमात्यादिभिरिति शेषः ।
षडङ्गरक्षा कर्त्तव्या तथा तेन प्रयत्नतः ।
षडङ्गानि अमात्यादयः । तेन राज्ञा ।
अङ्गेभ्यश्च तथैकस्तु द्रोहमाचरतेऽल्पधीः ॥
एकः, अङ्गमध्यस्थः कश्चित् ।
वधस्तस्य तु कर्तव्यः शीघ्रमेव महीक्षिता ॥
तथा,
एकस्यैव महीभर्तुर्भूयःकार्ये सुनिश्चिते ।
ब्राह्मणान् पर्युपासीत त्रय्यां राम सुनिश्चितान् ॥
नासच्छास्त्ररतान्मूढांस्ते हि लोकस्य कण्टकाः ।
सुनिश्चिते, उपस्थित इति शेषः । उपासीत नियुञ्जीत ।
तथा,
यजेत राजा बहुभिः क्रतुभिः स्वाप्तदक्षिणैः ॥
स्वाप्तदक्षिणैः, ऋत्विग्भिः प्राप्ता दक्षिणा येषु तैः ।
धर्मार्थं चैव विप्रेभ्यो दद्याद्भोगान् धनानि च ।

स्याच्चाम्नायपरो लोके वर्तेत पितृवन्नृपु ॥
आवृत्तानां गुरुकुलाद्द्विजानां पूजनं भवेत् ।
आवृत्तानां कृतसमावर्तनानाम् ।
नृपाणामक्षयो ह्येष निधिर्ब्राह्मो विधीयते ॥
हिः प्रसिद्धः ।
तस्माद्राज्ञा निधातव्यो ब्राह्मणेष्वक्षयो निधिः ।
तथा,
सङ्ग्रामेष्वनिवर्त्तित्वं प्रजानां परिपालनम् ।
शुश्रूषा ब्राह्मणानां च राज्ञां निःश्रेयसं परम् ॥
कृपणानाथवृद्धानां विधवानां च योषिताम् ।
योगक्षेमं च वृत्तिं च तथैव परिकल्पयेत् ॥
योगः अलब्धलाभः । क्षेमं सिद्धस्य परिपालनम् । वृत्तिर्जीवनोपायः ।
तथा,
आश्रमेषु यथाकालं तैलं भाजनभोजनम् ।
स्वयमेव नयेद्राजा सत्कृतानवमत्य च ॥
आश्रमेषु स्थानेषु । सत्कृतान्, कार्येषु नियुक्तान् । अवमत्य उपेक्ष्य । अनेनादरातिशय उच्यते ।
तथा,
तापसे सर्वकार्याणि राज्यमात्मानमेव च ।
निवेदयेत्प्रयत्नेन देववच्चैनमर्चयेत् ॥
मनुः,
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥

---

१ अयं सार्धश्लोको मुद्रितमनुपुस्तके नोपलभ्यते ।

विश्वासयेच्चापि परं तत्त्वभूतेन हेतुना ।
वकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥

यथा वृको मेषादिरक्षकानवधानमासाद्य मेषं हन्ति, एवं शत्रुरक्षकानवधाने शत्रुं हन्यात् । विनिष्पतेत्, शत्रुभिराभिभूत आश्रयान्तरं गच्छेत् ।

विष्णुधर्मोत्तरे तु,

दृढप्रहारी च भवेत्तथा सूकरवन्नृपः ।
चित्राकारश्च शिखिवद्दृढभक्तस्तथा श्ववत् ॥
भवेच्च मधुराभाषी तथा कोकिलवन्नृपः ।
काकशङ्की भवेन्नित्यमज्ञातवसतिं वसेत् ॥

काकशङ्की, काकवन्न कमपि विश्वसेत् ।

विष्णुः, आयद्वाराणि नोच्छिन्द्यान्नापात्रवर्षी स्यात् ।

आयद्वाराणि, द्रव्योत्पत्तिस्थानानि खनिशुल्कप्रभृतीनि ।

महाभारते तु विशेषः ।

चरेद्धर्माणि कटुको मुञ्चेत्स्नेहं न नास्तिकः ।
आनृशंसश्चरेदर्थं चरेत्काममनुद्धतः ॥
प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ॥
सन्दधीत न चानार्यैर्विगृह्णीयान्न च बन्धुभिः ।
नाभक्तं चारयेच्चारं कुर्यात्कार्यमपीडया
अर्थं ब्रूयान्न चासत्सु गुणान् ब्रूयान्न चात्मनः ।
आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ॥
नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत् ।
विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ॥

अनीर्षुर्गुप्तदारः स्यादृजुः स्यादघृणी नृपः ॥
स्त्रियः सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ।
अस्तब्धः पूजयेन्मान्यान् गुरून् सेवेदमायया ॥
अर्चेद्देवानदम्भेन श्रियमिच्छेदकुत्सिताम् ।
सेवेत प्रणयं हित्वा[1] दक्षः स्यान्न त्वकालवित् ॥
सान्त्वयेन्नत्र[2] मोघाशमनुगृह्णन्न च क्षिपेत् ।
प्रहरेन्न त्वविज्ञाय हत्वा शत्रून्न शोचयेत् ॥
क्रोधं कुर्यान्न चाकस्मान्मृदुः स्यान्नापकारिषु ।
तथा,
ऊखरेष्वपि वर्षन्तं पात्रेषु मृदु वर्षिणम् ।
पर्जन्यमपि निन्दन्ति किम्पुनर्वसुधाधिपम् ॥ इति ।
विष्णुधर्मोत्तरे बालकादीनां धनं राज्ञैव रक्ष्यमित्युक्तम् ।
बालदायादकं रिक्थं तावद्राजाऽनुपालयेत् ।
यावत्स स्यात्समावृत्तो यावद्वाऽतीतशैशवः ॥
बालपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ।
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥
जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ।
तान् शिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥
तथा चौरैरपहृतं प्रजाद्रव्यं राज्ञा स्वकोशाद्दातव्यमित्युक्तम्—
तत्रैव,
सर्वेषामेव वर्णानां चौरैरपहृतं धनम् ।
तत्प्रमाणं स्वकात्कोशाद्दातव्यमविचारयन् ॥
ततस्तु पश्चात्कर्त्तव्यं चौरान्वेषणमञ्जसा ।
चौररक्षाधिकारिभ्यो राजाऽपि तदवाप्नुयात् ॥

---

१ धृत्वा, घाञो रूपमिदम् । २ न च मोक्षयेत्यपि पाठः ।

आहृते च तथा वित्ते हृतमित्येव वेदिनम् ।
निर्द्धनं पार्थिवः कृत्वा विषयात्स्वाद्विवासयेत् ॥

आहृते, चौरान्वेषिभिरितिशेषः । हृतमित्येव वेदिनम्, चौरैरपहृतं न मया प्राप्तमिति निवेदयितारं चौरान्वेषिणं मिथ्यावादितया प्रमाणैर्निर्णीय निर्द्धनं कृत्वा स्वदेशाद्विवासयेदिति व्याख्येयम् । अपहृतस्यादाने राज्ञो दोषमाह—

**याज्ञवल्क्यः,**

देयं चौरहृतं द्रव्यं राज्ञा जानपदाय तु ।
अददद्धि समाप्नोति किल्विषं यस्य तस्य तत् ॥ इति ।

यत्तु धनस्वामिन एव परिचारकैर्नीतं तत्तु राज्ञा न देयमित्युक्तम्—

**विष्णुधर्मोत्तरे,**

न तद्राज्ञा प्रदातव्यं गृहे यत्परिचारकैः ।
प्रचरद्भिर्हृतं द्रव्यं कार्यं तत्रान्ववेक्षणम् ॥

अन्ववेक्षणम्, तर्जनताडनादिना तत्परिचारकेभ्यो दापनीयं, न तु स्वयं दातव्यमित्यर्थः । स्वविषये क्षुधाऽवसद्यमानस्य श्रोत्रियस्य वृत्तिकल्पनमपि राज्ञ आवश्यकमित्युक्तम्—

**तत्रैव,**

न च क्षुधाऽवसीदेत श्रोत्रियो विषये वसन् ।
यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा ॥
तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधितस्करैः ।
श्रुतवित्ते तु विज्ञाय वृत्तिं तस्य प्रकल्पयेत् ॥
रक्षेच्च सर्वतस्त्वेतान् पिता पुत्रमिवौरसम् ।
संरक्ष्यमाणो राज्ञा यः कुरुते धर्ममन्वहम् ॥
तेनायुर्वर्द्धते राज्ञो द्रविणं राष्ट्रमेव च । इति ।

देवतारामादेः पालनं तत्पूजनं चावश्यकमित्युक्तम्—

तत्रैव,

स्वदेशदेवताचार्याः कृतारामं पुरातनैः ।
दायं वित्तं जनं तासां प्रयत्नात्परिपालयेत् ॥
पालयन्ति महीं देवाः पालिताः पृथिवीक्षिता ।
देवायत्तमिदं सर्वं भूतलं द्विजपुङ्गव ॥
धूपदीपनमस्कारपुष्पमाल्यानुलेपनैः ।
रत्नानां सम्प्रदानैश्च पूजनीयाः सुरोत्तमाः ॥
पूजिताः पूजयन्त्येते आयुषा यशसा श्रिया ।
प्राप्यते देवताभक्त्या मनुष्येण महत्पदम् ॥
पूजिताः सम्प्रयच्छन्ति कामान्नृणां मनोगतान् ।
एकमप्याश्रितो देवं राजा भार्गवनन्दन ॥
सर्वासां पूजनं कुर्याद्देवतानामसंशयम् ।
ब्राह्मणाश्च नियोक्तव्या वेदोक्तसुरपूजने ॥

ब्राह्मणस्य पूजनं पालनं चोक्तम्—

तत्रैव,

ब्राह्मणान् पूजयेद्राजा ब्राह्मणान् पालयेत्सदा ।
ब्राह्मणा हि महाभागा देवानामपि देवताः ॥
ब्राह्मणानां क्षितिं दद्याद्भोगानन्यांश्च पार्थिव ।

ब्राह्मणानामिति षष्ठी चतुर्थ्यर्थे । ब्राह्मणानां क्षितिं दत्त्वा स्वमुद्राङ्कितं पत्रमपि दद्यात् । तदुक्तम्—

विष्णुना,

ब्राह्मणेभ्यो भुवं दद्यात्तेषां च प्रतिपादयेत् तेषां स्ववंश्यान् भुवः प्रमाणं दानच्छेदोपवर्णनं च पटे ताम्रपट्टे वा लिखितं स्वमुद्राङ्कितं चागामिनृपतिपरिज्ञानार्थं द-

च्यादिति ।

येषां येभ्य इत्यर्थः । तेषां वंश्यान् । स्ववंश्यांश्चेति काचित्पाठः । दानच्छेदोपवर्णनम्, दानच्छेदे उपवर्णनं, नरकस्येति शेषः । अथ वा दानच्छेदो दत्तभूमिसीमापरिच्छेदः । तथाच—

याज्ञवल्क्यः,

दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।
अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥
प्रतिग्रहपरिमाणं दानच्छेदोपवर्णनम् ।
स्वहस्तकालसम्पन्नं शासनं कारयेत्स्थिरम् ॥ इति ।

व्यासः,

स्थानं वंशानुपूर्वीं च देशं ग्राममुपागतान् ।
ब्राह्मणांस्तु तथा चान्यान् याज्यानधिकृतानपि ॥
कुटुम्बिनोऽथ कायस्थान् दूतवैद्यमहत्तरान् ।
मेदचण्डालपर्यन्तान् सर्वान् सम्बोधयन्निति ॥
मातापित्रोरात्मनश्च पुण्यायामुकसूनवे ।
दत्तं मयाऽमुकायाद्य दानं सब्रह्मचारिणे ॥
अनाच्छेद्यमनाहार्यं सर्वभोगविवर्जितम् ।
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयागतम् ॥
दातुः पालयितुः स्वर्गं हर्तुर्नरकमेव च ।
षष्टिवर्षसहस्राणि दानच्छेदे फलं लिखेत् ॥
स्वमुद्रावर्षमासार्द्धदिनाध्यक्षाक्षरान्वितम् ।
एवंविधं राजकृतं शासनं समुदाहृतम् ॥ इति ।

स्थानं राजधानी। उपागतान् आगन्तुकान्। महत्तरो ग्रा-

मदाता । अर्द्धं पक्षः । दिनाध्यक्षो वारः । तत्र पत्रेऽन्यानपि स्मृत्यन्तरोक्तान् श्लोकान् लिखेत् । ते च श्लोकाः-

पूर्वदत्तां द्विजातिभ्यो यत्नाद्रक्षेद्युधिष्ठिर ।
महीं मतिमतां श्रेष्ठ दानाच्छ्रेयोऽनुपालनम् ॥
बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
षष्टिवर्षसहस्राणि स्वर्गे मोदति भूमिदः ।
आक्षेप्ता चावमन्ता च तान्येव नरके वसेत् ॥
अपानीयेष्वरण्येषु शुष्ककोटरवासिनः ।
कृष्णाहयोऽभिजायन्ते पूर्वदायं हरन्ति ये ॥ इति ।

स्मृत्यन्तरे,

सन्धिविग्रहकारी तु भवेद्यस्तस्य लेखकः ।
स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम् ॥ इति ।

विष्णुधर्मोत्तरे,

ब्राह्मणेषु तु यद्दत्तं विधिवत्पारलौकिकम् ।
वेदलाङ्गलकृष्टेषु द्विजक्षेत्रेषु भार्गव ॥
उप्तस्य दानबीजस्य फलस्यान्तो न विद्यते ।
तस्मात्पूज्या नमस्कार्याः संविभाज्यास्तथा द्विजाः ॥
राज्ञा सर्वप्रयत्नेन लोकद्वयमभीप्सता ।
यद्ब्राह्मणास्तुष्टतमा वदन्ति तद्देवताः प्रत्यभिनन्दयन्ति ।
तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः ॥ इति ।

तथा साध्वीनामपि पालनमुक्तम्-

तत्रैव,

साध्वीनां पालनं कुर्यात्पूजनं च महीपतिः ।
एकपत्न्यः स्त्रियः सर्वा धारयन्ति जगत्त्रयम् ॥

भर्तृव्रता भर्तृपरा भर्तृपूजनतत्परा ।
यतः स्त्री सा दिवं याति सह भर्त्रा द्विजोत्तम ॥
एकपत्न्यस्तु यद्दुःखं सहन्ते द्विजसत्तम ।
तेन ताः स्वर्गमासाद्य सुखमायान्त्यनेकधा ॥
तासां प्रभावो हि महांस्तेजश्चैवातिदुःसहम् ।
न कोपनीया नापेक्ष्या नैव ताश्च विमानयेत् ॥
नाह्वयेदपराधेषु दण्ड्यस्तासां पतिर्भवेत् ।
तथा,
अनाथां च सदा साध्वीं बिभृयात्पार्थिवोत्तमः ।
तस्यां यद्दीयते दानं तदनन्तं प्रकीर्तितम् ॥
साध्वीनामपमानेन कुलं दहति पूरुषः ।
तासां सम्पूजनाद्राम स्वकुलं चोन्नतं भवेत् ॥ इति ।
तथा—
गवां हि पालनं राज्ञा कर्त्तव्यं भृगुनन्दन ।
इत्यादिनाध्यायेनौषधान्नघासजलादिदानान्युक्तानि तत्रैव ।
तथा,
गवां प्रचारभूमिं तु वाहयित्वा हलादिना ।
नरकं महदाप्नोति यावदिन्द्राश्चतुर्दश ॥ इति ।
मनुः,
अलब्धं चैव लिप्सेत लब्धं रक्षेच्च यत्नतः ।
रक्षितं वर्द्धयेच्चैव वृद्धं पात्रेषु निक्षिपेत् ॥
एतच्चतुष्टयं विद्यात्पुरुषार्थप्रयोजनम् ।
अस्य सम्यगनुष्ठानं नित्यं कुर्यादतन्द्रितः ॥ इति ।
महाभारते,
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।

नैकत्र परिनिष्ठाऽस्ति ज्ञानस्य पुरुषे क्वचित् ॥
सर्वस्य ज्ञानस्यैकत्र पुरुषे परिनिष्ठाऽवस्थितिर्नास्तीत्यर्थः ।
अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥
धनुर्वेदेतिहासे च यत्नः कार्यो विजानता ।
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव हि ॥
द्वौ भागावितिहासार्थे भागस्त्वन्यो विधीयते ।
इष्वस्त्रादिषु भागोऽन्यश्चतुर्थेऽत्रमहः स्मृतम् ॥
येषां त्रीण्यवदातानि योनिर्विद्या च कर्म च ।
तान् सेवेत्तैः समास्या हि शास्त्रेभ्योऽपि गरीयसी ॥
समास्या. सम्यक्प्रकारेण आस्या उपवेशनम् ।
गुरुपूजां च सततं वृद्धानां पर्युपासनम् ।
श्रवणं चैव विद्यानां कुर्वन् श्रेयोऽधिगच्छति ॥
न वै श्रुतमविज्ञाय वृद्धाननुपसेव्य च ।
धर्मार्थौ वेदितुं शक्यौ बृहस्पतिसमैरपि ॥
विद्यावृद्धान् सदैव त्वमुपासीथा नराधिप ।
शृणुया यच्च ते ब्रूयुः कुर्याश्चैवाविचारयन् ॥
सहस्रमपि मूर्खाणां यद्युपास्ते महीपतिः ।
अथ वाप्ययुतान्येव नास्ति तेषु सहायता ॥
एकोऽपि शास्त्रवित्प्राज्ञो गुरूणां पर्युपासिता ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥
सदैव हितकामानां सुहृदां न शृणोति यः ।
प्राज्ञानां कृतविद्यानां स नरः शत्रुनन्दनः ॥
शत्रुनन्दनः शत्रूणामानन्दजनकः ।
आदावेव मनुष्येण वर्त्तितव्यं यथाक्रमम् ।

यथा नातीतमर्थं वै पश्चात्तापेन शोचति ॥
अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः।
इन्द्रियाणामनैश्वर्यादैश्वर्याद्भ्रश्यतीह सः ॥
सन्नियच्छति योगेन उत्थितं कामहर्षयोः।
स श्रियो भाजनं राजन् पश्चाद्यस्तु न मुह्यति ॥
नावमान्या बुद्धिमद्भिरवरोत्कृष्टमध्यमाः।
न हि मानप्रदग्धानां कश्चिदस्ति मदः क्वचित् ॥
अवृत्तेर्भयमन्त्यानां मध्यानां मरणाद्भयम्।
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ॥

अन्त्यानाम्, अधमानां मर्त्यानाम्। अवृत्तेः, जीविकानाशात् भयम्।

कर्मणा मनसा वाचा चक्षुषा च चतुर्विधम्।
प्रसादयति यो लोकं तं लोको न प्रसीदति ॥

तमुद्दिश्य लोको न प्रसीदति नावसन्नो भवति।

यो नोद्धतं जातु करोति वेषं न पौरुषेणापि विकत्थते च।
नीत्या हि किञ्चित्क्षमते विवादं सर्वत्र तादृग्लभते प्रशंसाम् ॥ इति।

राज्ञोऽधिकमित्यनुवृत्तौ—

**गौतमः,**

योगश्च विजये भये विशेषेण चर्या च रथधनुर्भ्याम्। इति।

योग उपायः। विजये, शत्रूणां तद्राष्ट्रादेश्च। भये विशेषेण, भये शत्रुप्रभृतिभ्य उपस्थिते, विशेषेणोपायः कार्य इत्यर्थः। चर्या पर्यटनम्। रथधनुर्भ्यामिति वाहनायुधानामुपलक्षणम्, दृष्टार्थत्वात्।

**मनुः,**

नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः।

नित्यं संवृतसंवार्यो नित्यं छिद्रानुसार्यरेः ॥
नित्यमुद्यतदण्डस्य कृत्स्नमुद्विजते जगत् ।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥
अमाययैव वर्त्तेत न कथञ्चन मायया ।
बुद्ध्येतारिप्रयुक्तां च मायां नित्यं सुसंवृतः ॥
तथा,
तीक्ष्णश्चैव मृदुश्च स्यात्कार्यं वीक्ष्य महीपतिः ।
तीक्ष्णश्चैव मृदुश्चैव राजा भवति संमतः ॥ इति ।

उद्यतदण्डः, दण्डो हस्त्यश्वादियुद्धादिशिक्षाभ्यासः, स उद्यतस्सव्यापारो यस्य स तादृशः । अथ वा दण्डो दण्ड्यानां दण्डनं तदुद्यतं यस्य स तादृशः । विवृतपौरुषः, विवृतं प्रकाशीकृतं पौरुषम् अस्त्रविद्याप्रकर्षादिकं यस्य स तथा । संवृतसंवार्यः, संवृतं परैरज्ञायमानं संवार्यं संवरणार्हं मन्त्राकारचेष्टितादि यस्य स तथा । उद्विजते बिभेति । तेन च प्रतापख्यातिर्भवतीत्यर्थः । अमायया अच्छद्मना । वर्तेत, अमात्यादिष्विति शेषः । अहितेषु तु क्वचिच्छद्मापि विहितमेव ।

शङ्खलिखितौ, राजा स्वाधीनवृत्तिरात्मप्रत्ययकोशः स्वयं कृत्यानुदर्शी विप्रस्वनिवृत्तश्चिरं भद्राणि पश्यति । इति ।

आत्मप्रत्ययकोशः, आत्मनः स्वस्य प्रत्ययो विज्ञानं यस्य तादृक्कोशवान् ।

यमः,
समः सर्वेषु भूतेषु नयानयविशारदः ।
नैकः कार्याणि यः कुर्यात्सोऽत्यन्तं पाति मेदिनीम् ॥
अत्यन्तं चिरकालम् ।
तथा,

अन्तर्दोषं समुत्पन्नमाकारेणोपलक्षयेत् ।
शङ्क्येषु शङ्कितो नित्यं रक्षेच्छक्त्या सदोत्थितः ॥
पापानां निग्रहं कुर्यात्साधूनां परिपालनम् ।
यथाक्रमं च वृद्धानां काले काले निषेवणम् ॥ इति ।

शङ्क्येषु, पूर्वकृतापकारादिना शङ्कास्पदेषु ।

नारदः,

सतामनुग्रहो नित्यमसतां निग्रहस्तथा ।
एष धर्मः स्मृतो राज्ञामर्थश्चापि भवेत्ततः ॥
तस्य वृत्तिः प्रजारक्षा वृद्धप्राज्ञोपसेवनम् ।
दर्शनं व्यवहाराणामात्मनश्चापि रक्षणम् ॥ इति ।

राज्ञः कर्त्तव्यमित्यनुवृत्तौ–

शङ्खलिखितौ,

स्वपक्षे परपक्षे च स्थानवृद्धिक्षयाश्रयः ।
स्थानादीनां विभागश्च काले द्रव्यार्थसङ्ग्रहः ॥ इति ।

स्वपक्षे स्थानवृद्धिः, परपक्षे स्थानक्षयः, तयोराश्रयणम् । स्थानादीनाम्, अवस्थानस्थलानां दुर्गकोशादीनां च । विभागः, उचिताधिकारिभ्यस्समर्पणम् । काले यथोचितकाले । द्रव्यस्य, वस्त्रधान्यादेः, अर्थस्य, सुवर्णरजतादेः सङ्ग्रहः । राजधर्मानुवृत्तौ-

मार्कण्डेयपुराणे,

अहो तितिक्षामाहात्म्यमहो दानफलं महत् ।
पद्भ्यां गतो हरिश्चन्द्रः पुरश्चेन्द्रत्वमागतः ॥ इति ।

अत्र तितिक्षादानयोः सर्वसाधारणधर्मत्वेऽपि राज्ञोऽवश्य-कर्त्तव्यत्वेन तितिक्षायाश्चातिदुष्करत्वेन राजधर्मेषु विशिष्योपादानम् ।

यमः,

याचितो नेति न ब्रूयाद्दीक्षितो नानृतं वदेत् ।
सङ्ग्रामे न निवर्त्तेत तं देवाः क्षत्रियं विदुः ॥
दाता यज्वा च शूरश्च देवद्विजपरायणः ।
समः सर्वेषु भूतेषु चिरं पालयते महीम् ॥

तथा,

पर्जन्यमिव भूतानि महाद्रुममिवाण्डजाः ।
भृत्या यमुपजीवन्ति स राजा शक्रलोकभाक् ॥ इति ।

कात्यायनः,

शौर्यविद्यार्थबाहुल्यात्प्रभुत्वाच्च विशेषतः ।
सदा चित्तं नरेन्द्राणां मोहमायाति कारणात् ॥
तस्माच्चित्तं प्रबोद्धव्यं राजधर्मे सदा द्विजैः ।
पवित्रं परमं पुण्यं स्मृतिवाक्यं न लङ्घयेत् ॥ इति ।

द्विजैः, करणभूतैः, राज्ञा स्वचित्तं राजधर्मे प्रबोद्धव्यम् ।

गौतमः, ब्राह्मणं च पुरोदधीत विद्याभिजनवाग्रूपवयः शीलसम्पन्नं न्यायवृत्तं तपस्विनं, तत्प्रसूतः कर्माणि कुर्वीत, ब्रह्मप्रसूतं हि क्षत्रमृद्ध्यते न व्यथत इति च विज्ञायते, यानि च दैवोत्पातचिन्तकाः प्रब्रूयस्तान्याद्रियेत, तदधीनमप्येके योगक्षेमं प्रतिजानते, शान्तिपुण्याहस्वस्त्ययनायुष्यमङ्गलसंयुक्तान्याभ्युदयिकानि विद्वेषणसंवननाभिचारद्विषद्व्यृद्धियुक्तानि च शालाग्नौ कुर्याद्यथोक्तमृत्विजोऽन्यानि । इति ।

पुरोदधीत, पुरोहितं कुर्यात् । सर्वेषु कर्मसु पुरो धीयत इति पुरोहितः । तत्प्रसूतः तदनुज्ञातः । तत्प्रसूत इत्यत्र तच्छब्दानुकर्षणीयत्वेन ब्राह्मणं निर्दिशति—ब्रह्मप्रसूतमिति । ब्रह्म, ब्राह्मणस्तेन प्रसूतं तदनुज्ञातम् । ऋद्ध्यते समृद्धो भवति ।

विज्ञायते, परम्परया दृश्यते । तदधीनं, दैवोत्पातचिन्तकैर्ज्योतिर्विद्भिर्यद्ग्रहवैकृतादौ कर्तव्यतयोक्तं तस्यायत्तम् । योगक्षेममित्यत्र समाहारद्वन्द्वेन नपुंसकतैकवद्भावश्च । शान्तिसंयुक्तं, ग्रहशान्तिमहाशान्त्यादि । पुण्याहसंयुक्तं, दिनदोषनाशाय विवाहादौ क्रियमाणम् । स्वस्त्ययनसंयुक्तं, यात्रादौ क्रियमाणम् । आयुष्यसंयुक्तं, जन्मनक्षत्रादावायुर्वृद्ध्यर्थं क्रियमाणं दूर्वाहोमादि । मङ्गलसंयुक्तं, गृहप्रवेशादौ क्रियमाणं वास्तुहोमादि । एतान्यभ्युदयहेतुत्वादाभ्युदयिकानि । विद्वेषणं, येनास्य शत्रुः प्रकृतीनां द्वेष्यो भवति तत् । संवननं वशीकरणम् । द्विषदवृद्धिः, द्विषतां शत्रूणामवृद्धिः ऋद्ध्यभावः । एतानि च राजा अर्थप्रदानादिसंविधानद्वारा कर्त्ता सन्, शालाग्नौ कुर्यात्, पुरोहितद्वारा सम्पादयेत् । अत्रापस्तम्बेन "राज्ञस्तु विशेषान् वक्ष्याम" इत्युपक्रम्य, "वेश्म आवसथः सभा" इति त्रीणि स्थानान्यभिधायोक्तम्—

सर्वेष्वेवाजस्रमग्नयः स्युरग्निः प्रजा च नित्या यथा गृहमेध इति।

तेषामन्यतरोऽत्र शालाग्निर्नोपासनाग्निर्न त्रेताग्निः तयोर्गार्ह्येषु श्रौतेषु च नियतत्वात् । यथोक्तं, यथा श्रुतिस्मृत्यादिप्रूक्तम् ।

विष्णुः, राजा सर्वेषु कार्येषु सांवत्सराधीनः स्यात् । तथा, शान्तिस्वस्त्ययनैर्दैवोपघातान् प्रशमयेत्परचक्रोपघातांश्च शस्त्रनित्यतया वेदेतिहासधर्मशास्त्रकुशलं कुलीनमव्यङ्गं तपस्विनं च पुरोहितम् । इति ।

शस्त्रनित्यतया शस्त्राभ्यासपरत्वेन। पुरोहितं, कुर्यादिति शेषः।

याज्ञवल्क्यः,

पुरोहितं च कुर्वीत दैवज्ञमुदितोदितम् ।

दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥ इति ।

महाभारते,

पुरोहितप्रधानो हि राजा हितमवाप्नुयात् ।
सदाऽऽचरति यो धर्मं नृपो ब्राह्मणदेशितम् ॥
तावता स कृतप्रज्ञश्चिरं यशसि तिष्ठति ।
तस्य धर्मस्य सिद्धस्य भागी राज्ञः पुरोहितः ॥ इति ।

ब्रह्मपुराणे,

द्वौ लक्षहोमौ कुर्वीत तथा संवत्सरं प्रति ।
एकं च कोटिहोमं च यत्नात्सर्वाभयप्रदम् ॥
अथर्ववेदविहितं समन्त्री सपुरोहितः ।
नित्यान्याहार्यकाम्यानि तथा नैमित्तिकानि च ॥
ग्रहणे सूर्यशशिनोर्भूकम्पोत्पातदर्शने ।
तत्क्षणे च महाशान्तिः कर्त्तव्याऽनिष्टनाशिनी ॥ इति ।

याज्ञवल्क्यः,

श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादृत्विजस्तथा ।
यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ॥
भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि ।
अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम् ॥ इति ।

राजेत्यनुवृत्तौ–

शङ्खलिखितौ,

दद्यादानमर्चयित्वा ब्राह्मणाय, निमित्तपूर्वं शेषेभ्यः, कृपणातुरानाथव्यङ्गविधवाबालवृद्धानौषधावसथाशनाच्छादनैर्विभृयात् । इति ।

शेषेभ्यः क्षत्रियादिभ्यः । निमित्तपूर्वं सेवाद्युपाधिना । राजधर्मेषु—

आपस्तम्बः, भृत्यानामनुरोधेन क्षेत्रं वित्तं च ददद्ब्राह्मणेभ्यो यथार्हमनन्तान् लोकान् जयति। इति।

भृत्यानां, राजरक्षणोपयुक्तानाममात्यानुजीविप्रभृतीनाम्। अनुरोधेन तद्भृत्यपीडनेन। यथार्हं, वृत्तशीलविद्याकुटुम्बादिकं विचार्य।

कात्यायनः,

वेदध्वनिप्रभावेन देवाः स्वर्गनिवासिनः।
तेऽपि तत्र प्रमोदन्ते तृप्तास्तु द्विजपूजनात्॥
तस्माद्यत्नेन कर्तव्या द्विजपूजा सदा नृपैः।
तेन भूयोऽपि शक्रत्वं नरेन्द्रत्वं पुनः पुनः॥ इति।

सत्कर्मणा शक्रत्वं प्राप्य पुण्यक्षये पुनर्नरेन्द्रत्वं, प्राप्नुयादितिशेषः। अत एवोक्तम्—

अत्रैव,

सुराध्यक्षश्च्युतः स्वर्गान्नृपरूपेण तिष्ठति।
कर्त्तव्यं तेन तन्नित्यं येन तत्त्वं समाप्नुयात॥ इति।

तत्त्वं सुरेशत्वम्। यस्य राज्ञो राज्यं स्वयं प्राप्तं तत्प्रेतकृत्यं राजा कुर्यात्तन्मातापित्रादींश्चावश्यं विभृयात्। तदाह—

वसिष्ठः, राजनि च दद्यात्प्रेते प्रासङ्गिकम्। अनेन मातापितृवृत्तिर्व्याख्याता, राजमहिषीपितृवृत्तिर्व्याख्याता। राजमहिषीपितृव्यमातुलान् राजा विभृयात्, तद्बधूंश्च। अन्याश्च राजपत्न्यो ग्रासाच्छादनं लभेरन्। अनिच्छन्त्यो वा व्रजेयुः। क्लीबोन्मत्तान् राजा विभृयात्तद्गामित्वाद्रिक्थस्य। इति।

अस्यार्थः। राजनि प्रेते मृते यः पुत्रातिरिक्तोऽपि राजा भवति, स प्रासङ्गिकं, मरणप्रसङ्गेनावश्यकं तच्छ्राद्धादि, कुर्यादित्यर्थः। यस्तु पितृमरणोत्तरं राजा भवति तं प्रति श्राद्धादिविधा-

नस्यानर्थक्यप्रसङ्गात्, सामान्यत एव प्राप्तेः। अनेन, तच्छ्राद्धादिविधानेन। मातापितृवृत्तिः, मृतराज्ञो मातापित्रोर्भरणादिरूपा। व्याख्याता, अवश्यं कर्त्तव्येत्यर्थः। अन्याश्च राजपत्न्यः, तदवरोधवासिन्योऽविवाहिता अपि, एता ग्रासाच्छादनं लभेरन्निति, अनेन पूर्वोक्तानां भरणविधानं पूर्वराजकृततद्वृत्त्यनुच्छेदपरम्। तत्रापि मातापित्रोर्यावती पूर्वराजकृता वृत्तिः सा सर्वापि दातव्या, राजमहिषीपितृव्यमातुलानां तु भरणं मानपुरःसरम्। अवश्यं तद्भरणीयजनपोषणं यथा भवति तथा विधेयम्। तदवरोधवासिनीनामन्यासां विवाहितानामविवाहितानां च ग्रासाच्छादनमात्रं दद्यात्, पृथक्पृथङ्निर्देशात्। अत एव सर्वशेषे "तद्गामित्वाद्रिक्थस्य" इति हेतूपन्यासः। रिक्थस्य तत्तद्दायस्य। तद्गामित्वात् नूतनराजगामित्वात्। क्लीबोन्मत्तान्। पूर्वराजान्तःपुरादावधिकृतान् क्लीबान्, उन्मादोऽसावधानता सा च रोगवयःप्रभृतिदोषकृता तद्युक्ततया पूर्वराजेनावश्यभृतान्।

आपस्तम्बः, आवसथे वसंश्छ्रोत्रियानतिथीन् वासयेत्तेषां यथागुणमावसथाः शय्याऽन्नपानं च देयं गुरूनमात्यांश्च नातिजीवेत्। इति।

देयं, राज्ञेतिशेषः। नातिजीवेत्, अतिक्रम्य न जीवेत्। गुरूणाममात्यानां च जीविकां कृत्वैव स्वजीविकां कुर्यादित्यर्थः।

मनुः,

श्रोत्रियं व्याधितार्त्तौ च बालवृद्धावकिञ्चनौ।
महाकुलीनमार्यं च राजा सम्पूजयेत्सदा॥ इति।

राजेत्यनुवृत्तौ गौतमः,

विभृयाद्ब्राह्मणांश्छ्रोत्रियान्निरुत्साहांश्चाब्राह्मणानकरांश्चो-

पकुर्वाणांश्च । इति ।

निरुत्साहान्, कर्तव्यार्थे स्थिरः प्रयत्न उत्साहस्तद्रहितान्, अलसानितियावत् । अब्राह्मणान्, ब्राह्मणातिरिक्तान् क्षत्रियादीन् । अथ वा अब्राह्मणान् श्रोत्रियत्वादिगुणरहितान् ब्राह्मणान । अकरान्, येभ्यः करो न गृह्यते, किन्तु मासि मास्येकैकदिनं कर्म कार्यते तादृशान् शिल्प्यादीन् । अत एव–

मनुः,

यस्य राज्ञस्तु विषये ब्राह्मणः सीदति क्षुधा ।
तस्यापि तत्क्षुधा राष्ट्रमचिरेणैव सीदति ॥
श्रुतवृत्ते विदित्वास्य वृत्तिं धर्म्यां प्रकल्पयेत् ।
संरक्षेत्सर्वतश्चैनं पिता पुत्रमिवौरसम् ॥
संरक्ष्यमाणो राज्ञा यं कुरुते धर्ममन्वहम् ।
तेनायुर्वर्द्धते राज्ञो द्रविणं राष्ट्रमेव च ॥ इति ।

अत्र हि मनुवाक्ये–"ब्राह्मणः सीदति क्षुधा" इति प्रथममुपक्रम्य, "श्रुतवृत्ते विदित्वास्य" इत्यनेन श्रोत्रियस्यैवावश्यभरणीयत्वमुपसंहृतम् । तदेकमूलकतया गौतमवाक्येऽपि श्रोत्रियस्यावश्यभरणीयत्वमुक्त्वा तदतिरिक्तस्य जातिमात्रब्राह्मणस्य भरणे निरुत्साहत्वं हेतुत्वेनोपन्यस्तं वेदितव्यम् ।

शङ्खलिखितौ, राजन्यवैश्यावप्यजीवन्तौ राजानमुपतिष्ठेयातां तावुभौ शक्तितः संविभक्तावुपकुर्यातां स्वस्वधर्मानुष्ठानेन शिल्पिनः कारवश्च शूद्राः । इति ।

अजीवन्तौ, स्वस्ववृत्त्या जीविकामलभमानौ । एतद्वाक्येऽपि– संविभक्तौ कृतजीविकौ, तावुभौ राजन्यवैश्यौ, राज्ञः शक्तितो यथासामर्थ्यमुपकुर्याताम्, अपिशब्दात् शिल्प्यादयः शूद्रा अपि जीविकामलभमाना राज्ञा कृतसंविभागाः, स्वस्वध-

र्मानुष्ठानेन राज्ञ उपकुर्युरित्युक्तम् । तथा चोपकुर्वतामेव क्षत्रियादीनां त्रयाणां वर्णानां राज्ञोऽवश्यभरणीयत्वं, न त्वनुपकुर्वताम् । पूर्वोदाहृतगौतमवाक्ये निरुत्साहांश्च ब्राह्मणानित्यनेनानुपकुर्वतामपि जातिमात्रब्राह्मणानामवश्यभरणीयत्वे निरुत्साहत्वं हेतुरुपन्यस्तः । अन्यथा हि अनुपकुर्वतामपि स्वराष्ट्रवर्त्तिनां सर्वेषामवश्यभरणीयत्वेनैतेषामभरणे राज्ञो महान् दोषोऽशक्यानुष्ठानता च स्यात् ।

हरदत्तस्तु पूर्वोदाहृतं गौतमवाक्यमेवं व्याख्यातवान् । विभृयात् श्रोत्रियान् ब्राह्मणान्, श्रोत्रिया अधीतवेदाः तान्, ब्राह्मणानन्नादिदानेन विभृयात् । निरुत्साहांश्चाब्राह्मणान्, जीवनार्थं यत्नं कर्तुमसमर्थान् अब्राह्मणान् क्षत्रियादीनपि विभृयात्, किं पुनर्ब्राह्मणान् । पूर्वसूत्रे तु अर्जने समर्थानपि श्रोत्रियान् स्वयमाहूय विभृयादिति । अकरांश्च, येभ्यः पूर्वैः करो न गृहीतस्तान् अकरान्, विभृयात्, तेभ्यः स्वयं करं नोत्पादयेत् । उपकुर्वाणांश्च, अधीयानां ब्रह्मचारिण उपकुर्वाणास्तांश्च विभृयादन्नादिदानेन, यद्यर्थिनः, स्वयञ्जीवनवतश्च करादिव्यावर्त्तनेन । उपकुर्वाणा, लोकोपकारिणो वैद्यादय इति केचित् ।

यमः,

अभेद्यमच्छेद्यमनादिमक्षयं निधिं पुराणं पालयन्ति ये ।
महीपतिस्तानभिपूज्य वै द्विजान् भवेदजेयो दिवि देवराडिव ॥

पुराणं निधिं, वेदरूपम् ।

शक्यं हि कवचं भेत्तुं नाराचेन शरेण वा ।
अपि वज्रसहस्रेण ब्राह्मणाशीः सुदुर्भिदा ॥ इति ।

तथा,

पूर्वरात्रान्तरात्रेषु द्विजा यस्य ह्यधीयते ।
स राजा सह राष्ट्रेण वर्द्धते ब्रह्मतेजसा ॥
राजा यत्कुरुते पापं प्रमादात्सह तेन च ।
वसन्तो ब्राह्मणा राष्ट्रे जप्येन शमयन्ति तत् ॥
ब्राह्मणान् पूजयेन्नित्यं प्रातरुत्थाय भूमिपः ।
ब्राह्मणानां प्रसादेन वसन्ति दिवि देवताः ॥
यदृच्छया हरन्त्येते शुभं वा यदि वाऽशुभम् ।
तत्तथा नान्यथा कुर्याद्ब्राह्मणा ह्यत्र कारणम् ॥ इति ।

मनुः,

नाब्रह्म क्षत्रमृध्नोति[1] नाक्षत्रं ब्रह्म वर्द्धते ।
ब्रह्म क्षत्रेण संयुक्तमिह चामुत्र वर्द्धते ॥ इति ।

यमः,

राजा वृक्षो ब्राह्मणास्तस्य मूलं पौराः पर्णं मन्त्रिणस्तस्य शाखाः ।
तस्माद्राज्ञा ब्राह्मणा रक्षणीया मूले गुप्ते नास्ति वृक्षस्य नाशः ॥

आसन्नं हि दहत्यग्निर्दूराद्दहति ब्राह्मणः ।
प्ररोहत्यग्निना दग्धं ब्रह्मदग्धं न रोहति ॥
ब्राह्मणानां च शापेन सर्वभक्षो हुताशनः ।
समुद्रश्चाप्यपेयश्च विफलस्तु पुरन्दरः ॥

विफलः वृषणरहितः ।

चन्द्रमा राजयक्ष्मी च पृथिव्यामूषराणि च ।
वनस्पतीनां निर्यासो दानवानां पराजयः ॥
अनन्तान्येव तेजांसि ब्राह्मणानां महात्मनाम् ।
तस्माद्विप्रेषु नृपतिः प्रणमेन्नियमेन च ॥ इति ।

महाभारते,

---

१ वर्धते इत्यर्थः ।

अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान् प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥
ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥
नैतान् स्मरति कृत्येषु याचितश्चाभ्यसूयति ।
एतान् दोषान्नरः प्राज्ञो बुद्ध्या बुद्ध्वा विवर्जयेत् ॥
तथा तत्रैव भीष्मवाक्यम्—
एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत ।
ब्राह्मणानामनुज्ञातमत्यन्तं सुखमिच्छता ॥
कर्तव्यं पार्थिवेनेह तद्विद्धि भरतर्षभ ।
श्रोत्रियान् स्नातकान् वृद्धान्नित्यमेवाभिपूजयेत् ।
पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान् ।
सान्त्वेन भोगदानेन नमस्कारैस्तथेज्यया ॥
एतत्कृत्यतमं राज्ञां नित्यमेवाभिलक्षयेत् ।
यथात्मानं यथा पुत्रांस्तथैतान् परिपालयेत् ॥
ये चाप्येषां पूज्यतमास्तान्नृपः प्रतिपूजयेत् ।
तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते ॥ इति ।

राज्ञां खड्गादिषु देवीपूजनमावश्यकं सर्वदा कर्तव्यत्वेनोक्तम्—

देवीपुराणे,
नामभेदेन सा भिन्ना अभिन्ना परमार्थतः ।
शिवा नारायणी गौरी चर्चिका विमला उमा ॥
सा वन्द्या पूजनीया च सततं तत्प्रभावितैः ।
विजयार्थं नृपैः खड्गे छुरिकापादुके पटे ॥
चामुण्डां चित्ररूपां च लिखितां चाथ पुस्तके ।

ध्वजे वा कारयेच्छत्रे स नृपो विजयेद्रिपून्। इति।

कार्त्तिकेयपूजापि सर्वदा कर्त्तव्यत्वेन, विशेषतश्च रणे प्रस्थितस्य राज्ञ आवश्यकत्वेनोक्ता भविष्यपुराणे—

राज्ञां पूज्यः सदा प्रोक्तः कार्त्तिकेयो महीपते।
कार्त्तिकेयादृते राज्ञां नान्यं पूज्यं प्रचक्षते॥
सङ्ग्रामे गच्छमानो यः पूजयेत्कार्त्तिकासुतम्।
स शत्रूञ्जयते वीरो यथेन्द्रो दानवान् रणे॥
तस्मात्सर्वप्रयत्नेन पूजयेच्छङ्करात्मजम्।
पूजयानस्तु तं भक्त्या चम्पकैर्विविधैर्नृप॥
मुच्यते सर्वपापेभ्यः सद्यो गच्छेच्छिवालयम्।

नान्यं पूज्यमित्यनेन कार्त्तिकेयपूजाविधानस्यावश्यकत्वम्, न त्वन्यदेवतापूजानिषेधः। उदाहृतदेवीपुराणवचनेन देवीपूजायाः, कूर्मपुराणादौ शिवविष्ण्वादिदेवतापूजाया अपि राजकर्तृकत्वेन विशिष्याभिधानात्।

राजेत्यनुवृत्तौ अन्यदपि कर्त्तव्यत्वेनोक्तं ब्रह्मपुराणे—

नित्यं सन्निहितान् देवान्मुनीन् नागांश्च पूजयेत्।
पिशाचेभ्यो बलिं दद्यात्सन्ध्याकाले च नित्यशः॥ इति।

उक्तवृत्तस्य राज्ञः फलमाह मनुः—

एवंवृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः।
विस्तार्यते यशो लोके तैलबिन्दुरिवाम्भसि॥ इति।

कात्यायनोऽपि—

आत्मीये संस्थिता धर्मे नृपाः शक्रत्वमाप्नुयुः।
अवीचिवासिनो ये तु व्यपेताचारिणः सदा॥

ये तु व्यपेताचारिणः त्यक्तवर्णाश्रमधर्मास्ते सदा बहुकालपर्यन्तमवीचिनामकनरकवासिनः।

गच्छेत्सम्यगविज्ञाय वशं क्रोधस्य यो नृपः ।
वसेत्स नरके घोरे कल्पान्तं तु न संशयः ॥
सम्यगविज्ञाय, स्वक्रोधनिमित्तं परापराधमनिर्णीय ।
कर्त्तव्यान्तरमप्युक्तं गरुडपुराणे—
मनस्तापं न कुर्वीत आपदं प्राप्य पार्थिवः ।
समबुद्धिः प्रसन्नात्मा सुखदुःखसमो भवेत् ॥
वीराः कष्टमनुप्राप्य न भवन्ति विषादिताः ।
प्रविश्य वदनं राहोर्विनोदति पुनः शशी ॥
तथा,
कारणेन विना भृत्ये यस्तु कुप्यति पार्थिवः ।
स गृह्णाति विषोन्मादं कृष्णसर्पेण दंशितः ॥
तथा,
लीलां करोति यो राजा भृत्ये सज्जनगर्विते ।
स वादे विग्रहे क्षिप्रं रिपुभिः परिभूयते ॥
लीलां क्रीडाम् । वादे, वाक्कलहे । विग्रहे, शस्त्रसाध्ये सङ्ग्रामे ।
तथा,
तुल्यार्थं तुल्यसम्बन्धं मर्मज्ञं व्यवसायिनम् ॥
अर्द्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते । इति

### इति राज्ञो विहितधर्माः ।

### अथ राज्ञः प्रतिषिद्धा धर्माः,

### मत्स्यपुराणविष्णुधर्मोत्तरयोः,

मृगयां पानमक्षांश्च वर्जयेत्पृथिवीपतिः ।
एतान्यासेवमानास्तु विनष्टाः पृथिवीक्षितः ॥

बहवो नृपशार्दूल सङ्ख्या येषां न विद्यते।
दिवास्वप्नं वृथाऽट्यां च विशेषेण विवर्ज्जयेत् ॥
वृथाऽट्या, वृथाऽटनम्।
वाक्पारुष्यं न कर्त्तव्यं दण्डपारुष्यमेव च।
परोक्षनिन्दा च तथा वर्जनीया महीक्षिता ॥
अर्थस्य दूषणं राजा द्विप्रकारं विवर्जयेत्।
अर्थानां दूषणं चैकं तथाऽर्थेन च दूषणम् ॥
प्राकाराणां समुच्छेदो दुर्गादीनामसत्क्रिया।
अर्थानां दूषणं प्रोक्तं विप्रकीर्णत्वमेव च ॥
अदेशकाले यद्दानमपात्रे दानमेव च।
अर्थेन दूषणं प्रोक्तमसत्कर्मप्रवर्त्तनम् ॥
तथा,
न राज्ञा मृदुना भाव्यं मृदुर्हि परिभूयते।
न भाव्यं दारुणेनातितीक्ष्णादुद्विजते जनः ॥
काले मृदुर्यो भवति काले भवति दारुणः।
राजा लोकं दयाऽपेक्षी तस्य लोकद्वयं भवेत् ॥
भृत्यैः सह महीपालः परिहासं विवर्जयेत्।
भृत्याः परिभवन्तीह नृपं हर्षैकसङ्कथम् ॥
व्यसनानि च सर्वाणि भूपतिः परिवर्जयेत्।
लोकसङ्ग्रहणार्थाय भृतकव्यसनी भवेत् ॥
शौण्डीरस्य नरेन्द्रस्य नित्यमुद्रिक्तचेतसः।
जना विरागमायान्ति सदा दुःसेव्यभाविताः ॥
व्यसनानि, पुरुषार्थविक्षेपकाणि मृगयादीनि।
तान्याह मनुः—
मृगयाऽक्षा दिवास्वापः परिवादः स्त्रियो मदः।

तौर्यत्रिकं वृथाऽट्या च कामजो दशको गणः ॥

तौर्यत्रिकं नृत्यगीतवाद्यानि । एतत्त्रिकमादाय दश कामजानि व्यसनानि ।

पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् ।
वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥

वाक्पारुष्यं दण्डजं च पारुष्यमादायाष्टविधत्वं द्रष्टव्यम् ।

द्वयोरप्येतयोर्मूलं यं पूर्वे कवयो विदुः ।
तं यत्नेन जयेल्लोभं तज्जये तावुभौ गणौ ॥
दश कामसमुत्थानि तथाऽष्टौ क्रोधजानि च ।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ॥
कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।
वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु ॥

आत्मनैव वियुज्यते, मरणमापद्यत इत्यर्थः ।

तत्र सप्त कष्टतमानि ।

यथाऽऽह मनुः—

पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥
दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥
सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः ।
पूर्वपूर्वं गुरुतरं विद्याद्व्यसनमात्मनः ॥

परिवादः, परदोषकथनम् । वृथाऽट्या, वृथाऽटनम् । पैशुन्यम्, अनभिव्यक्तदोषाविष्करणम् । साहसम्, साधोर्बन्धनादिनिग्रहः । द्रोहः, ब्रह्मवधः । ईर्ष्या, परगुणासहिष्णुता । परगुणेषु दोषाविष्करणमसूया । अर्थदूषणम्, अर्थापहारो देयानामदानं च । वा-

क्पारुष्यम्, आक्रोशादि। दण्डपारुष्यम्, अल्पापराधेऽपि बहुला-र्थग्रहणं, शारीरदण्डो वा।

व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते।
व्यसन्यधोऽधो व्रजति स्वर्यात्यव्यसनी मृतः॥

अधोऽधो व्रजति, नरकं प्रतिपद्यत इत्यर्थः। नरकाणां पाताल एव वर्णितत्वात्।

विष्णुधर्मोत्तरे—

न गाहेज्जनसम्बाधं न चाज्ञातं जलाशयम्।
नापरीक्षितपूर्वं तु पुरुषैराप्तकारिभिः॥
नारोहेत्कुञ्जरं व्यालं नादान्तं तुरगं तथा।

व्यालम्, दुष्टम्।

नाविज्ञातां स्त्रियं गच्छेन्नैव चाशुष्कवाससम्।

अशुष्कवाससम्, आर्द्रवाससं, रजस्वलामित्यर्थः।

तथा,

नारोहेद्विषमां नावं नापरीक्षितनाविकाम्।

तथा,

देवतासु न वोच्छिन्द्यात्पूर्वदायान् कथञ्चन।
प्राक्स्थितं च न चोच्छिन्द्यान्न चोच्छिन्द्यात्तथा जनात्॥
उच्छेत्ता नरकं याति सह पूर्वैः पितामहैः।
अपि स्वल्पं न हर्त्तव्यं देवद्रव्यं विजानता॥
स्वल्पस्यापि फलं घोरं यस्माज्जन्मान्तरे भवेत्।
षष्टिर्वर्षसहस्राणि षष्टिर्वर्षशतानि च॥
देवद्रव्यापहरणान्नरकं प्रतिपद्यते।
सन्तीह देवताः सौम्याः सन्त्युग्राश्चापि भारत॥

दर्शयन्ति रुपं सौम्याः राज्यभ्रंशादिभिर्नृणाम् ।
अस्मिंल्लोके रुपं क्रूरा नैव कुर्वन्ति देवताः ॥
तासां वित्तापहरणाद्राजा नरकमृच्छति ।
पूर्वैः पितामहैः सार्द्धं प्रागुक्तं कालमेव तु ॥
देवद्रव्यापहरणं नैव जातु भवेद् वृथा ।
सर्वस्वरहितान् कृत्वा देवद्रव्यापहारिणः ॥
अङ्कयित्वा द्विजश्रेष्ठ स्वराष्ट्राद्विप्रवासयेत् ।
त्रैविद्या वाणिजो वैश्या लिङ्गिनो देवपालकाः ॥
तथा तत्प्रतिबद्धाश्च न कुर्युः कलहं मिथः ।
तेषां तन्नायकः स्वामी निग्रहानुग्रहे भवेत् ॥
रागद्वेषवियुक्तस्तु विवास्यश्चान्यथा भवेत् ।
तथा तत्रैव,
ब्रह्मस्वं नैव चाऽऽदद्याद्ब्रह्मस्वं पालयेत्तथा ।
ब्रह्मस्वहरणाद्राम नरके पच्यते नरः ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं सप्त पूरुषान् ॥
ब्रह्मस्वं प्रणयाद् भुक्तं हिनस्त्यासप्तमं कुलम् ।
द्रोहाद् भुक्तं तदेवेह कुलानां पातयेच्छतम् ॥
सुवर्णमेकं गामेकां भूमेरप्येकमङ्गुलम् ।
हरन्नरकमाप्नोति यावदाभूतसम्प्लवम् ॥
अत्र सुवर्णशब्दः परिमाणविशिष्टसुवर्णवचनः ।
दृष्ट्वाऽविद्यं दुराचारं ब्राह्मणं न द्विषेत्कचित् ॥
ब्राह्मणानां परीवादान्नाशमाप्नोति मानवः ।
न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम् ॥
नैवास्ति ब्राह्मणवधात्पापं गुरुतरं कचित् ।

ब्रह्महा नरकं याति यावदाभूतसम्प्लवम् ॥
वर्षाणामयुतं राम पच्यते चावगूरिते ।
शोणितं यावतः पांसून् सङ्गृह्णाति द्विजन्मनाम् ॥
क्षतात्तावन्ति वर्षाणि क्षतकृन्नरके वसेत् ।
उपद्रुतो द्विजो येन त्यजेज्जीवितमात्मनः ॥
ब्रह्महत्या भवेत्तस्य नात्र कार्या विचारणा । इति ।

विष्णुः—

स्वदत्तां परदत्तां च भुवं नापहरेद्ब्राह्मणेभ्यः । इति ।

मनुः—

परामप्यापदं प्राप्तो ब्राह्मणं न प्रकोपयेत् ।

परामपि, कोपक्षयेण वलवद्राजविरोधेन चोत्कृष्टाम्, आपदं प्राप्तो राजा ब्राह्मणं न प्रकोपयेत् । तदीयधनाऽऽदानेन तदवगणनया वा तन्मन्युं नोत्पादयेत् ।

ते ह्येनं कुपिता हन्युः सद्यः सबलवाहनम् ॥
यैः कृतः सर्वभक्षोऽग्निरपेयश्च महोदधिः ।
क्षयी चाप्यायितः सोमः को न नश्येत्प्रकोप्य तान् ॥
लोकानलोकान् कुर्युस्ते लोकपालांश्च कोपिताः ।
देवान् कुर्युरदेवांश्च कः क्षिण्वंस्तान् समृध्नुयात् ॥
यान्समाश्रित्य तिष्ठन्ति देवा लोकाश्च सर्वदा ।
ब्रह्मैव च धनं येषां को हिंस्यात्तान् जिजीविषुः ॥
प्रणीतश्चाप्रणीतश्च यथाऽग्निर्दैवतं महत् ।
एवं विद्वानविद्वांश्च ब्राह्मणो दैवतं महत् ॥
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ।
हूयमानश्च यज्ञेषु भूय एवाभिपूज्यते ॥
एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्मसु ।

सर्वथा ब्राह्मणः पूज्यो दैवतं परमं हि तत् ॥
क्षत्रस्यापि प्रवृद्धस्य ब्राह्मणान् प्रति सर्वशः ।
ब्रह्मैव संनियन्तृ स्यात् क्षत्रं हि ब्रह्मसम्भवम् ॥
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥

"परामप्यापदं प्राप्त" इत्यस्य निषेधस्य "ते ह्येनं कुपिता हन्युः" इत्यारभ्य "स्वासु योनिषु शाम्यति" इत्यन्तः सर्वोऽयमर्थवादः । ब्रह्मैव च धनं येषामिति । ब्रह्मैव वेद एव येषां ब्राह्मणानाम् अभ्युदयसाधनतया याजनाध्यापनादिना धनार्जनोपायत्वेन धनम् अवश्यापेक्षितमवश्यरक्षणीयं च, तान् ब्राह्मणान् जिजीविषुर्जीवितुमिच्छन् को हिंस्यात्पीडयेत् । अपराधिनोऽपि ब्राह्मणस्य दण्डनिवृत्त्यर्थं स्तुतिरियम् ।

मनुः—

द्यूतं समाह्वयं चैव राजा राष्ट्रान्निवारयेत् ।
राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥
प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत् ॥
अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥
द्यूतं समाह्वयं चैव यः कुर्यात्कारयेत वा ।
तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥
कितवान् कुशीलवान् चौरान् पाखण्डस्थांश्च मानवान् ।
विकर्मस्थान् शौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात् ॥
एते राष्ट्रे वर्तमाना राज्ञः प्रच्छन्नतस्कराः ।

विकर्मक्रियया नित्यं बाधन्ते भाद्रिकाः प्रजाः ।
द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं महत् ॥
तस्मात् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ।
प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः ॥
तस्य दण्डविकल्पः स्याद्यथेष्टं नृपतेस्तथा ।

देवनसमाह्वयावित्यत्र देवनं द्यूतं च पर्यायौ । अप्राणिभिः, अक्षशलाकादिभिः । प्राणिभिः, मेषकुक्कुटादिभिः । तत्रापि पणपूर्वं यत्क्रियते तदेव द्यूतं समाह्वयश्च । अपणपूर्वके तु न द्यूतसमाह्वयशब्दौ प्रवर्त्तेते । लोके तयोः क्रीडाशब्देनैव व्यवहारात् । अत एव तयोर्लोके विगानाभावः । कुर्यात्कारयीत वेत्यत्र यः कितवो द्यूतसमाह्वयौ कुर्यात्, यश्च सभिकः कारयीत, तान् सर्वान् राजा अपराधमपेक्ष्य घातयीत हस्तच्छेदादिना योजयीतेति वाक्यार्थः । द्विजलिङ्गिनः, यज्ञोपवीततिलकादिब्राह्मणचिह्नधारिणः । यथेष्टम्, अपराधमपेक्ष्य राज्ञो यथा इच्छा भवति शारीरे दण्डे, द्रव्यग्रहणरूपे वा दण्डे, तथा स्यात्, स धर्म इत्यर्थः ।

इति राज्ञो निषिद्धा धर्माः ।

## अथाभिषिक्तस्य राज्ञो दिनकृत्यम् ।

विष्णुधर्मोत्तरे—

राम उवाच ।

अजस्रं कर्म मे ब्रूहि राज्ञो राजीवलोचन ।
यच्च कार्यं नरेन्द्राणां तथा च प्रतिवासरम् ॥

पुष्कर उवाच ।

द्विमुहूर्त्तावशेषायां रात्रौ निद्रां त्यजेद् बुधः ।
वेणुवीणामृदङ्गानां पटहानां च निस्वनैः ॥
वन्दिनां निस्वनैश्चैव तथा मङ्गलवादिनाम् । इति ।

तथा च शङ्खलिखितौ—

राज्ञः शङ्खपटहतूर्येण प्रस्वापोत्थानम् । इति ।

तथा याज्ञवल्क्यः—

संविशेत्तूर्यघोषेण प्रतिबुद्ध्येत्तथैव च ।
शास्त्राणि चिन्तयेद् बुध्या सर्वकर्तव्यतां तथा ॥
प्रेषयेत ततश्चारान् स्वेष्वन्येषु च सादरम् । इति ।

तूर्यघोषेण, वेणुवीणामृदङ्गादिशब्देन । संविशेत्, स्वापार्थं गृहे प्रविशेत् । तथैव ब्राह्मे मुहूर्ते उत्थाय श्रुतिस्मृतिवचांसि तदर्थावगमोपायांश्च सर्वकार्याणि च चिन्तयेत् । चारान्, वणिग्वैद्यपरिव्राजकबौद्धदिगम्बरादिरूपधारिणो निगूढान् परचेष्टावेदिनः । स्वेषु, स्वसामन्तादिषु । परेषु, मित्रादिमहीपतिषु । प्रेषयेत, तच्चिकीर्षितज्ञानाय ।

वृद्धवासिष्टोऽपि—

त्यक्तनिद्रोदयात्पूर्वं चिन्तयेदात्मनो हितम् ।
गीततूर्यरवैः सार्द्धं निजेच्छातो नृपोत्तमः ॥
त्यक्तनिद्र उदयादिति वक्तव्ये छान्दसः सन्धिः ।

विष्णुधर्मोत्तरे—

ततः पश्येन्महीपालो गूढांश्च पुरुषान्निशि ।
विज्ञायन्ते न ये लोके तदीया इति केन चित् ॥
निशि, रात्रिशेषे ।
आयव्ययस्य श्रवणं ततः कार्यं यथाविधि ।

तथा याज्ञवल्क्यः—

कृतरक्षः समुत्थाय पश्येदायव्ययौ स्वयम् ।
व्यवहारांस्ततो दृष्ट्वा स्नात्वा भुञ्जीत कामतः ॥

कृतरक्षः, पुरस्यात्मनश्च रक्षां विधाय प्रतिदिनं प्रातरुत्थायाधिकृतैः क्रियमाणावायव्ययौ स्वयमेव पश्येत् । स्वयंग्रहणमादरार्थम् । स्नानं सकलमाध्याह्निकोपलक्षणम् । कामतः, यथारुचि ।

मनुः—

अहन्यहन्यवेक्षेत कर्मान्तान् वाहनानि च ।
आयव्ययौ च नियतावाकरान् कोशमेव च ॥

वृद्धवासिष्ठः—

मौनी मूत्रपुरीषे तु ततः कुर्यादुदङ्मुखः ।

मनुः—

उत्थाय पश्चिमे यामे कृतशौचः समाहितः ।
हुत्वाग्निं ब्राह्मणांश्चार्च्य प्रविशेत्तु सभां शुभाम् ॥

स्मृत्यन्तरेऽपि—

प्रातरुत्थाय नृपतिः कुर्याद्दन्तस्य धावनम् ।
स्नानशालां समागत्य स्नात्वा पूतेन वारिणा ॥
अर्घं दत्त्वा तु देवाय भास्कराय समाहितः ।
ततोऽलङ्कृतगात्रः सन् वक्त्रमालोक्य मन्त्रवत् ।
घृतपात्रं तु विप्राय दद्यात्सकनकं नृपः ॥

मन्त्रस्त्वग्रे वक्ष्यते । मुखावलोकनं चार्थाद् घृत एव ।

विष्णुधर्मोत्तरे—

वेगोत्सर्गं ततः कृत्वा राजा स्नानगृहं व्रजेत् ।
दत्ताभ्यङ्गः प्रदोषे तु कल्यमुत्सादितस्ततः ॥

वेगाः,मूत्रपुरीषादयः। कल्यम्,प्रातः। उत्सादितः,कृतोद्वर्तनः।
स्नानं कुर्यात्ततः पश्चाद्दन्तधावनपूर्वकम् ।
औषधैर्मन्त्रपूतैस्तु पानीयैर्विविधैः शुभैः ॥
सन्ध्यामुपास्य प्रयतः कृतजप्यः समाहितः ।
अग्न्यगारं प्रविश्याथ वह्नीन् पश्येत्पुरोधसा ॥
हुतान्सम्यक्ततः कुर्याद्वासुदेवस्य चार्चनम् ।
दुःस्वप्नशमनं कर्म तस्य कुर्यात्पुरोहितः ॥
स्वयं चोपसदे वह्नौ पवित्रान् जुहुयान्नृपः ।
तर्पयेदुदकैर्देवान् पितॄनथ यथाविधि ।
दद्यात् द्विजातये धेनुं सवस्त्रां च सकाञ्चनाम् ॥
शक्त्या धनैः पूजयित्वा दत्ताशीः सततं द्विजैः ।
अनुलिप्तस्ततः स्रग्वी सुवासाश्चाप्यलङ्कृतः ॥
दर्पणे च मुखं पश्येत्ससुवर्णे च सर्पिषि ।
आज्यं प्रसन्नं सुरभि यदि स्याद्विजयो भवेत् ॥
दीयमाने च दुर्भेदे पतिते च भयं भवेत् ।
विकृतं चेन्मुखं पश्येद्राजा मृत्युमवाप्नुयात् ॥
सुप्रभं च यदा पश्येत्तदा तस्य शुभं भवेत् ।
तथा,
यस्तु कल्यं समुत्थाय मुखमाज्ये निरीक्षते ।
तस्यालक्ष्मीः क्षयं याति वर्द्धते तेजसा श्रिया ॥
ततश्च शृणुयाद्राजा सांवत्सरमुखोद्गतम् ।
दिवसं तिथिनक्षत्रं सर्वाशुभविनाशनम् ॥
भिषजां च वचः कुर्यात्तेजस्त्वारोग्यवर्द्धनम् ।
मङ्गलालम्भनं कृत्वा ततः पश्येद् गुरून्नृपः ॥
कृताशीर्गुरुभिः पश्चाद्राजा गच्छेत्सभां ततः ।

आथर्वणपरिशिष्टे तु घृतावेक्षणस्य कश्चित्प्रकारविशेषोऽप्युक्तः। स यथा—

अथ घृतावेक्षणं वक्ष्यामः, प्रातः शङ्खदुन्दुभिनादेन ब्रह्मघोषेण वा प्रतिबोधेत राजा। शयनगृहादुत्थाय राजाऽपराजितां दिशमभिनिष्क्रम्य जयेत्। अथ पुरोहितः स्नातोऽनुलिप्तः शुचिः शुक्लवासा घृतमङ्गलसहितः सोष्णीषी शान्तिगृहं प्रविश्य तेन स्वस्तिवाचनादनुज्ञातो विनीतवदुपविशेत। 'यमस्य लोका', 'यथाकलं यो न जीवोऽसि' इति स्वस्त्ययनं कृत्वोल्लिख्याभ्युक्ष्य, परिस्तीर्य, शन्तातीयेन तिलान् घृताक्तान् हुत्वा, सौवर्णं राजतमौदुम्बरं वा पात्रं घृतपूर्णं सहिरण्यं 'घृतस्य जूतिः', 'सहस्रशृङ्गः', 'यमस्य लोका', 'उरु विष्णो विक्रमस्व' इत्यभिमन्त्र्य, 'आज्यं तेज' इति तदालभेत्।

आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम्।
आज्येन देवास्तृप्यन्ति आज्ये लोकाः प्रतिष्ठिताः॥
भौमान्तरिक्षाद्दिव्यं च यन्मे किल्बिषमागतम्।
सर्वं तदाज्यसंस्पर्शात्प्रणाशमुपगच्छतु॥ इति।

तस्मिन् घृतपात्रस्थमात्मानं पश्येत्। राजेतिशेषः। दध्ना शिरोहृदयमन्वालभ्य जपेत। 'उच्चापतन्तम्' इति द्वाभ्याम्। 'सूर्यस्यावृतम्' इति प्रदक्षिणमावृत्त्य शेषं कारयेत्। अत्र श्लोकाः।

अयं घृतावेक्षणस्य प्रोक्तो विधिरथर्वणा।
उपास्यो नित्यकालं तु राज्ञा विजयकाङ्क्षिणा॥
एतत्समाहृतं सर्वं प्रयतस्तु समाहितः।
राजा विजयते राष्ट्रं नश्यन्ते तत्र शत्रवः॥
द्विजोत्तमाय कपिलां राजा दद्यात्तु गां शुभाम्।

गुरुणा याचितो यस्माद्दीर्घमायुरवाप्नुयात् ॥
आयुष्यमथ वर्चस्यं सौभाग्यं शत्रुनाशनम् ।
दुःस्वप्ननाशनं पुण्यं घृतस्यावेक्षणं स्मृतम् ॥ इति ।
इति आथर्वणपरिशिष्टोक्तं घृतावेक्षणम् ।

ब्रह्मपुराणे—

नित्यं राज्ञा समुत्थाय पूजनीयाः सुरद्विजाः ।
वह्निसम्पूजनं कार्यं द्रष्टव्यं चन्दनं घृतम् ॥
श्रोतव्ये तिथिनक्षत्रे कर्त्तव्यं वैद्यभाषितम् । इति ।

याज्ञवल्क्यः—

ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः ।
दृष्ट्वा ज्योतिर्विदो वैद्यान् दद्याद्गाः काञ्चनं महीम् ॥
नैवेशिकानि च तथा श्रोत्रियाणां गृहाणि च ।

दृष्ट्वा, तदधीनं कार्यजातं च विचार्य । गाः, दोग्ध्रीः । नैवेशिकानि, विवाहोपयोगीनि कन्यालङ्करणादीनि । गृहाणि च श्रोत्रियेभ्यो वेदविद्भ्यो दद्यात् ।

शङ्खलिखितौ—राज्ञः प्रत्यहं घृतान्वीक्षणं मङ्गलदर्शनं कपिलाप्रदानं स्वलङ्कृतस्य सम्भाषणं वैद्यदर्शनम् । इति ।

सभाऽनुवृत्तौ विष्णुधर्मोत्तरे—

तत्रस्थान् ब्राह्मणान् पश्येदमात्यान् मन्त्रिणस्तथा ।
प्रकृतीश्च महाभाग प्रतीहारनिवेदितः ॥
तत्रेतिहासश्रवणं कुर्यात्किञ्चिदतन्द्रितः ।
ततः कार्यार्थिनां कुर्याद्यथाधि कार्यनिर्णयम् ॥
व्यवहारांस्ततः पश्येत्समो भूत्वाऽरिमित्रयोः । इति ।

बृहस्पतिः—

पूर्वाह्णे तामधिष्ठाय वृद्धामात्यानुजीविनः ।

पश्येत्सुरान् स धर्मार्थशास्त्राणि शृणुयाचतः ॥

ताम्, सभाम् । सुरान्, भूसुरान् । पूर्ववाक्ये तत्रस्थान् ब्राह्मणानित्युपादानात् ।

मनुः—

तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् ।
विसृज्य च प्रजाः सर्वा मन्त्रयेत्सह मन्त्रिभिः ॥

तत्र, सभायाम् ।

मन्त्रे स्थलं कालं च स एवाह—

गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः ।
अरण्ये निःशलाके वा मन्त्रयेताविभावितः ॥

निःशलाके, विविक्ते देशे ।

मध्यन्दिनेऽर्धरात्रे वा विश्रान्तो विगतक्लमः ।
चिन्तयेद्धर्मकामार्थान् सार्द्धं तैरेक एव वा ॥
परस्परविरुद्धानां तेषां च समुपार्जनम् ।

तेषाम्, धर्मार्थकामानाम् ।

कन्यानां सम्प्रदानं च कुमाराणां च रक्षणम् ॥
दूतसम्प्रेषणं चैव कार्यशेषं तथैव च ।
अन्तःपुरप्रचारं च प्रणिधीनां च चेष्टितम् ॥
कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च तत्त्वतः ।
अनुरागापरागौ च प्रचारं मण्डलस्य च ॥

अष्टविधं कर्म प्रचेता आह—

आदाने च विसर्गे च तथा प्रैषनिषेधयोः ।
पञ्चमे चानुवचने व्यवहारस्य चेक्षणे ॥
दण्डशुद्ध्योः सदा युक्तस्तेनाष्टगणिको नयः ।
अष्टकर्मा दिवं याति राजा शक्राभिपूजितः ॥

आदानम्, करादीनाम्। विसर्गो, भूतेभ्यो धनदानम्। प्रैषः, अमात्यादीनां दृष्टादृष्टार्थानुष्ठाने। निषेधः, विरुद्धक्रियासु। अनुवचनं, कार्यसन्देहे राजाज्ञा। शुद्धिः, प्रायश्चित्तम्।

पञ्चवर्गः-

सहायाः साधनोपाया विभागो देशकालयोः।
विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते॥ इति।

विष्णुधर्मोत्तरे-

त्यक्त्वा सभां ततः कुर्यान्मन्त्रं तु सह मन्त्रिभिः।
यत्रास्य कश्चित्तं मन्त्रं शृणुयान्न कथञ्चन॥
मन्त्रं कृत्वा ततः कुर्याद्व्यायामं पृथिवीपतिः।
रथे नागे तथैवाश्वे खड्गे धनुषि चाप्यथ॥
अन्येषु चैवं शस्त्रेषु नियुद्धेषु ततः परम्।
पद्मामुद्वर्तितः स्नातः पश्येद्विष्णुं सुपूजितम्॥
हुतं च पावकं पश्येद्विप्रान् पश्येत्सुपूजितान्।
श्वसितान् दक्षिणाभिश्च पूजितान् भृगुसत्तम॥

श्वसितान्, तर्पितान्।

ततोऽनुलिप्तः सुरभिः स्रग्वी रुचिरभूषणः।
सुवासा भोजनं कुर्याद्गीतं च शृणुयात्तदा॥
आप्तैः परीक्षितं वह्नौ मृगपक्षीङ्गितैस्तथा। इति।

तथा मनुः-

एवं सर्वमिदं राजा सह संमन्त्र्य मन्त्रिभिः।
व्यायम्याऽऽप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं व्रजेत्॥
तत्रात्मभूतैः कालज्ञैरहार्यैः परिचारकैः।
सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः॥ इति।

विष्णुधर्मोत्तरेऽपरीक्षितस्य निषेधोऽप्युक्तः-

नापरीक्षितपूर्वं च भोजनं शयनं स्पृशेत्।
वस्त्रं पुष्पमलङ्कारं यच्चान्यन्मनुजोत्तम ॥ इति।
मनुः,
विषघ्नैरुदकैश्चास्य सर्वद्रव्याणि नेजयेत्।
नेजयेत् प्रक्षालयेत्।
विषघ्नानि च रत्नानि नियतो धारयेत्सदा॥
परीक्षिताः स्त्रियश्चैनं व्यजनोदकधूपनैः।
वेषाभरणसंयुक्ताः संस्पृशेयुः समाहिताः॥
एवं प्रयत्नं कुर्वीत यानशय्यासनाशने।
स्नाने प्रसाधने चैव सर्वालङ्कारकेषु च ॥ इति।
तथा विष्णुः,
सुदर्शनश्च स्याद्विषघ्नागदमन्त्रधारी नापरीक्षितमुपभुञ्ज्यात्।इति।
अगदानि औषधानि। अत्र विशेष उक्तो-
विष्णुधर्मोत्तरे,

राम उवाच।

कल्पना भोजनीयानां गन्धानां या च कल्पना।
तामहं श्रोतुमिच्छामि त्वत्तो धर्मभृतां वर॥

पुष्कर उवाच।

भक्ष्यं भोज्यं तथा लेह्यं चोष्यं पेयं तथैव च।
कल्पना पञ्चधा राम भोज्यस्यैषा प्रकीर्तिता॥
अभ्यासगम्या चाप्येषा वक्तव्यं तत्र मे शृणु।
कटुतोयोदकक्वाथशोधितानामसंशयम्॥
सुराज्यधान्यजातीनां गन्धमाशु विनश्यति।
श्रेष्ठं सार्षपकं तैलं शाकानां परिशोधने॥
मांसं कठिनमायाति कौमल्यं चार्द्रकाम्बुना।

वरुणक्षारसंयोगान्नत्स्यस्यास्थि विलीयते ॥
गण्डिकाभिः पलाशस्य क्षीरमावर्त्तितं द्रुतम् ।
कपित्थचूर्णयोगेन तथा चैव सुजानता ।
घृतं सुगन्धीभवति दग्धैः क्षिप्तैस्तया यवैः ॥
पद्मवारिणि योगेन काञ्जिकस्याम्लता भवेत् ।
गुडाद्यं शुद्धिमाप्नोति क्षीरेण च तथा द्रुतम् ॥
पद्मरागसमं चूर्णमंशुमत्या च जायते ।
पानकानां महाभाग यस्याप्यन्यस्य चेच्छसि ॥
क्षारयोगेन चाम्लस्य तथाम्लत्वं विनश्यति ।
लवणाधिकविक्षेपसञ्जातविरसं ध्रुवम् ॥
सिकतापिण्डिकाक्षेपैः सुरसत्वमवाप्नुयात् ।
चणकक्षारयोगेन पुष्पाणि च फलानि च ॥
सर्वाणि द्रुतिमायान्ति द्रुतानां कल्पना भवेत् ।
गन्धवर्णरसाधानं पानकादिषु सर्वतः ॥
यथाकालं यथादेशं यथासात्म्यं च कारयेत् ।
नात्यर्थदीप्तेन हुताशनेन नात्यन्तमन्देन धमाद्यमन्नम् ।
रसेन चाप्यत्र भवेत्प्रभूतं तात्पर्यमेतत्कथितं मया ते ॥ इति ।

अद्यम् अदनार्हम् । धम संयोजय । विस्तरश्चास्य सूपशास्त्रादवगन्तव्यः । सविषान्नादेः परीक्षाप्रकारश्च—

मत्स्यपुराणे,

विषाच्च रक्ष्यो नृपतिस्तत्र युक्तिं निबोध मे ।
क्रीडानिमित्तं नृपतिर्धारयेन्मृगपक्षिणः ॥
अन्नं वै प्राक्परीक्षेत वह्नौ चान्यतमेषु च ।
वस्त्रं पात्रमलङ्कारं भोजनाच्छादने तथा ॥
नापरीक्षितपूर्वं तु स्पृशेदपि महीपतिः ।

श्यावास्यचक्रः सन्तप्तः सोद्वेगं च निरीक्षते ॥
श्यावास्यचक्रः, ईषत्कृष्णश्वेतमुखमण्डलः ।
विपदो वा विषं दत्त्वा यत्र तत्र निरीक्षते ।
स्रस्तोत्तरीयो विमनाः स्तम्भकुड्यादिभिस्तथा ॥
प्रच्छादयति चात्मानं लज्जते स्खलते तथा ।
भुवं विलिखति ग्रीवां तथा चालयति द्विज ॥
कण्डूयति च मूर्द्धानं परिलक्ष्यो नरः सदा ।
क्रियासु त्वरितो राजन् विपरीतास्वपि ध्रुवम् ॥
एवमादीनि चिह्नानि विषदस्य परीक्षयेत् ।
ततो विचारयेदग्नौ तदन्नं त्वरयाऽन्वितः ॥
इन्द्रायुधसवर्णोऽग्नी रूक्षः स्फोटसमन्वितः ।
एकवर्णोऽथ दुर्गन्धिर्भृशं चटचटायते ॥
तद्धूमदर्शनाज्जन्तोश्शिरोरोगश्च जायते ।
सविषेऽन्ने निलीयन्ते न च पार्थिव माक्षिकाः ॥
विलीनाश्च विपद्यन्ते दृष्टे च सविषे तथा ।
विरज्यति चकोरस्य दृष्टिः पार्थिवसत्तम ॥
विकृतिं च स्वरो याति कोकिलस्य तथा नृप ।
गतिः स्खलति हंसस्य भृङ्गराजश्च कूजति ॥
क्रौञ्चो मदमथाभ्येति कृकवाकुर्विरौति च ।
विक्रोशति शुको राजन् सारिका वाशते तथा ॥
चामीकरोऽन्यतो याति मृत्युं कारण्डवस्तथा ।
मेहते वानरो राजन् ग्लायते जीवजीवकः ॥
हृष्टरोमा भवेद्बभ्रुः पृषतश्चैव रोदिति ।
हर्षमायाति च शिखी विषसन्दर्शनान्नृप ॥
अन्नं च सविषं राजंश्चिरेण च विपच्यते ।

तथा भवति सास्रावं पक्वं पर्युषितोपमम् ॥
व्यापन्नरसगन्धं च चन्द्रिकाभिस्तथा युतम् ।
व्यञ्जनानां च शुष्कत्वं द्रवाणां बुद्बुदो भवेत् ॥
ससैन्धवानां द्रव्याणां जायते फेनमालिका ।
रसस्य राजिस्ताम्रा स्यान्नीला च पयसस्तथा ॥
कोकिलाभा च मद्यस्य तोयस्य च नृपोत्तम ।
धान्याकस्य तथा कृष्णा कपिला कोद्रवस्य च ॥
मधुश्यावा च तक्रस्य नीलपीता तथैव च ।
घृतस्योलूकसङ्काशा कपोताभा च मस्तुनः ॥
हरिता माक्षिकस्यापि तैलस्य च तथाऽरुणा ।
फलानामप्यपक्वानां पाकः क्षिप्रं प्रजायते ॥
प्रस्वेदश्चैव पक्वानां माल्यानां म्लानता तथा ।
मृदुता कठिनानां च मृदूनां च विपर्ययः ॥
सूक्ष्मतन्तूपसदनं तथा चैवातिरोमता ।
श्याममण्डलता चैव वस्त्राणां च विशेषतः ॥
लोहानां च मणीनां च मलपङ्कोपदिग्धता ।
अनुलेपनगन्धानां स्रूनानां च नृपोत्तम ॥
विगन्धता च विज्ञेया पर्णानां म्लानता तथा ।
एवमादीनि चिह्नानि विज्ञेयानि नृपोत्तम ॥
तस्माद्राजा सदा तिष्ठेन्मणिमन्त्रौषधागदैः ।
उक्तैः संरक्षितो राजा प्रमादपरिवर्जकः ॥
प्रजातरोर्मूलमिहावनीशस्तद्रक्षणाद्वृद्धिमुपैति राज्यम् ।
तस्मात्प्रयत्नेन नृपस्य रक्षा सर्वेण कार्या रविवंशचन्द्र॥इति।

स्रूनानां प्रसूनानाम् । अगदैः संरक्षितः सदा तिष्ठेदित्युक्तम्, तत्र कान्यगदानीत्यपेक्षायाम्—

विष्णुधर्मोत्तरे,

राम उवाच ।

रक्षोघ्नानि विषघ्नानि यानि कार्याणि भूभुजा ।
अगदानि समाचक्ष्व तानि धर्मभृतां वर ॥

पुष्कर उवाच ।

विल्वाढकीयवक्षारपाटलावाल्हिकोषणाः ।
श्रीपर्णीशल्लकीयुक्ता निष्क्वाथः प्रोक्षणं परम् ॥
सविषं प्रोक्षितं तेन सद्यो भवति निर्विषम् ।
यवसेन्धनपानीयवस्त्रशय्यासनौदनम् ॥
कवचाभरणच्छत्रवालव्यजनमेव च ।

यवसं तृणमर्जुनम्, तदादि वेश्मान्तं विल्वादिक्वाथैः प्रोक्षि-
। सद्यो निर्विषं भवति ।

शेलूपाटल्यतिविषाशिग्रुगोभीपुनर्नवाः ।
समङ्गाटृक्षमूलत्वक्कपित्थं टृषशोणितम् ॥
सहदन्तशठं तद्वत्प्रोक्षणं विषनाशनम् ।
लाक्षाप्रियङ्गुमञ्जिष्ठासमङ्गासहरेणुकाः ॥
सपथ्याह्वा मधुयुता वभ्रुपित्तेन कल्किताः ।
निखनेद्गोविषाणस्थाः सप्तरात्रं महीतले ॥
ततः कृत्वा मणिं हेम्ना वद्धं हस्तेन धारयेत् ।
संस्पृष्टः सविषस्तेन सद्यो भवति निर्विषः ॥
मनोह्वाऽऽलशमीपुष्पत्वङ्गिशाश्वेतसर्पपाः ।
कपित्थकुष्टमञ्जिष्ठाः पित्तेन श्लक्ष्णकल्किताः ॥
शुनो गोः कपिलायाश्च सौम्याख्योऽयं परोऽगदः ।
विषजित्परमः कार्यो मणिरत्नं च पूर्ववत् ॥

पूर्ववत्, "ततः कृत्वा मणिं हेम्ना" इत्यादिप्रकारेण ।
मूषिका जीरका वापि हस्ते बद्धा विषापहा ।
हरेणुमांसीमञ्जिष्ठारजनी मधुकं मधु ॥
अक्षत्वक्सुरसा चापि श्वपित्तं पूर्ववन्मणिः ।
वादित्राणि पताकाश्च पिष्टैरेतैः प्रलेपिताः ॥
श्रुत्वा दृष्ट्वा समाघ्राय सद्यो भवति निर्विषः ।
त्र्यूषणं पञ्चलवणं मञ्जिष्ठा रजनीद्वयम् ॥
सूक्ष्मैला त्रिवृतापत्रविडङ्गानीन्द्रवारुणी ।
मधुकं चेति सक्षौद्रं गोविषाणे निधापयेत् ॥
तस्मादुष्णाम्बुना मात्रां प्रागुक्तां योजयेत्तथा ।
विषं भुक्तं जरां याति निर्विषेऽपि न दोषभाक् ॥
सक्तुसर्जरसोशीरसर्षपापत्रवालकैः ।
सवेल्लारुष्करखुरैः कुसुमैरर्जुनस्य च ॥
धूपो वासगृहे हन्ति विषं स्थावरजङ्गमम् ।
न तत्र कीटाः सविषा दर्दुरा न सरीसृपाः ॥
न कृत्याः कार्मणा याश्च धूपोऽयं यत्र दह्यते ।
फल्कितैश्चन्दनक्षीरपलाशद्रुमवल्कलैः ॥
मूर्वैलवालुसुरसानाकुलीतन्दुलीयकैः ।
क्वाथः सर्वोदकार्थेषु काकमाचीयुतैर्हृतः ॥
रोचनापत्रनेपालीकुङ्कुमैस्तिलकं वहन् ।
विषैर्न बाध्यते स्याच्च नरनारीनृपप्रियः ॥
चूर्णैर्हरिद्रामञ्जिष्ठाकिणिहीकणनिम्बकैः ।
दिग्धं निर्विषतामेति गात्रं सर्वविषार्दितम् ॥
शिरीषस्य फलं पत्रं पुष्पं त्वङ्मूलमेव च ।
गोमूत्रपिष्टं ह्यगदः सर्वकर्मकरः स्मृतः ॥ इति ।

मणयो मन्त्राश्चागदाः प्रसिद्धास्तत्सङ्ग्रहं च कुर्यात् । एवमादिभिर्निर्विषमन्नं निर्णीय भुञ्जीत ।

तथा तत्रैव,

भुक्त्वा गृहीतताम्बूलः परिक्रम्य विशेषतः ।
शयने वामपार्श्वेन ततः शास्त्राणि चिन्तयेत् ॥ इति ।

मनुः,

भुक्तवान् विहरेच्चैव स्त्रीभिरन्तःपुरे सह ।
विहृत्य च यथाकालं पुनः कार्याणि चिन्तयेत् ॥
अलङ्कृतस्तथा पश्येदायुधीयं पुनर्जनम् ।
वाहनानि च सर्वाणि शस्त्राण्याभरणानि च ॥ इति ।

याज्ञवल्क्यः,

हिरण्यं व्यापृतानीतं भाण्डागारे न्यसेत्ततः ।
पश्येच्चारांस्तथा दूतान् प्रेषयेन्मन्त्रिसङ्गतः ॥

हिरण्यं हिरण्यादिधनम् । व्यापृतानीतं, व्यापृतैराकरादिद्रव्यार्जनस्थानेषु नियुक्तैरानीतम् ।

ततः स्वैरविहारी स्यान्मन्त्रिभिर्वा समागतः ।
बलानां दर्शनं कृत्वा सेनान्या सह चिन्तयेत् ॥
सन्ध्यामुपास्य शृणुयाच्चाराणां गूढभाषितम् ।
गीतैर्नृत्यैश्च भुञ्जीत पठेत्स्वाध्यायमेव च ॥ इति ।

भुक्त्वा यथेच्छमङ्गनाभिः सह क्रीडेत, कार्यवशान्मन्त्रिभिर्वा समागतो भवेत् । बलानां हस्त्यश्वादीनाम् । सेनान्या चमूपतिना सह बलविषयमर्थं च चिन्तयेत् । सन्ध्यां, सायंसन्ध्याम् । गीतं नृत्यं च श्रुत्वा भुक्त्वा वेदं पठेत् । अत्र विशेषान्तरमाह—

मनुः,

सन्ध्यामुपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् ।

रहस्याख्यायिनां चैव प्रणिधीनां च चेष्टितम् ॥ इति ।

विशेषान्तरमाह—

**वृद्धवसिष्ठः,**

सायंसन्ध्यादिकं कृत्वा सभां प्राग्वत्प्रवेशयेत् ।
ततो राज्ञो विलासिन्यः कुर्युः सन्ध्यावलिक्रियाम् ॥
तैजसेष्वथ पात्रेषु चैकस्मिन्नथ वा त्रिषु ।
तत्तद्राज्यानुसारेण पञ्चस्वपि च सप्तसु ॥
त्रिषु कार्याण्यष्टदलपद्मान्यन्नैर्विचित्रकैः ।
दलेषु कर्णिकायां च दीपैर्बहुभिरुज्ज्वलैः ॥
विराजदक्षतैर्मन्त्रैः सह मङ्गलपारगैः ।
पूर्ववच्चिन्तयेद्राज्यं प्रेषयेद्गुप्तचारकान् ॥
अन्तःपुरं सम्प्रविशेन्नियम्य त्वस्य रक्षकान् ।
तासां मनोरथान् कृत्वा प्रवृत्तिं समनुस्मरेत् ॥
एवं समाचरन्नित्यं सदा सत्कीर्तिमाप्नुयात् ।
तस्मात्सर्वप्रयत्नेन राज्यं धर्मेण पालयेत् ॥ इति ।

**तथा मनुः,**

गत्वा कक्षान्तरं त्वन्यत्समनुज्ञाप्य तं जनम् ।
प्रविशेद्भोजनार्थं तु स्त्रीवृतोऽन्तःपुरं पुनः ॥
तत्र भुक्त्वा पुनः किञ्चित्तूर्यघोषैः प्रहर्षितः ।
संविशेच्च यथाकालमुत्तिष्ठेच्च गतक्लमः ॥ इति ।

**विष्णुधर्मोत्तरेऽपि,**

अन्तःपुरचरो भूत्वा लघु भुक्त्वा तथा हितम् ।
सवेणुवीणापटहस्वनेन सेवेत निद्रां कृतपूर्वरक्षः ।
एतद्यशस्यं च नराधिपानामाजस्रिकं ते कथितं विधानम्॥इति।

विशेषान्तरमाह—

मनुः,

एतद्विधानमातिष्ठेदरोगः पृथिवीपतिः ।
अस्वस्थः सर्वमेवैतन्मन्त्रिमुख्ये निवेशयेत् ॥ इति ।
एतत्सर्वं, प्रजारक्षणादि ।

इति राज्ञो दैनंदिनं कृत्यम् ।

अथ वर्षकृत्यम् ।

तदुक्तम्—

आथर्वणपरिशिष्टे,

ॐ अथ प्रतिसंवत्सरं राज्ञः कर्म्माणि क्रमेण वक्ष्यामः । अथाश्वयुजे मासे शुक्लपक्षस्य तृतीयेऽहनि हरिद्रायवानां "रक्षन्तु त्वाग्नय" इति चतसृभी रक्षां बद्धा हस्त्यश्वानाम् । अश्वोऽसि क्षिप्रजन्मासि सप्तद्वीपां वसुन्धराम् । हस्तेन युक्ते चन्द्रमसि पौर्णमास्याममावास्यायां वा पुण्ये नक्षत्रे शुचौ देशे तन्त्रमित्युक्तं प्राश्चमिध्ममुपसमाधायान्वारभ्याथ जुहुयात् । सवित्रे स्वाहा, पतङ्गाय स्वाहा, पावकाय स्वाहा, सहस्ररश्मये स्वाहा, मार्त्तण्डाय स्वाहा, विष्णवे स्वाहा, प्रजापतये स्वाहा, परमेष्ठिने स्वाहेतिहुत्वा कनकानां ( मालां ) बद्धा हस्त्यश्वानां नीराजनं कुर्यात् । अथ नवम्यामपराह्ले वाहनानि स्नापयित्वा अहतवासा ब्रह्मा द्वादशहस्तमितां वेदिं कृत्वा तन्त्रमित्युक्तां शान्तिं कृत्वा दर्पणेन वाहनं त्रिः प्रोक्ष्य परीयात्, "निःसालाम्" इति सूक्तं जपन् प्रत्येत्याभिपिश्चेदेनमश्वमलङ्कृतं शबलकण्ठं कृत्वोपस्थाप्य दध्यात्, एवमेव मैश्रधान्यान्युदपात्राण्यन्तरासु दिक्षु, तत्रैव देवता यजेत अग्निं वायुं वरुणमश्विनाविति । पयसि स्थालीपाकं श्रपयित्वा "समास्त्वाग्ने" "त्वन्नो अग्ने" "मा नो विदन्"

अभयैरपराजितैरायुष्यैः स्वस्त्ययनैरप्रतिरथेनेति च हुत्वा संस्थाप्य "अग्नेरदोसि"इत्यहतवासोभिः प्रच्छाद्य रसैः कुम्भानौदुम्बरान् पूरयित्वा प्रतिदिशमवस्थाप्य, "ममाग्ने वर्चो" "अभयं द्यावापृथिवी""उदुत्तमं वरुण""अश्विना ब्रह्मणायातम्"इति जुहुयात्। पौर्णमासीप्रथमेति च जुहुयात् दुन्दुभिमाहन्यादित्युक्तम्। "उपश्वासय पृथिवीम्" इति तत्रैवानुमन्त्रणं च। सर्वाणि च वादित्राणि वाहनानि च "जनस्यास्मान् प्रहर्षय" पञ्चमीं प्रतिष्ठापयेत्। "न तं यक्ष्मा एतु देव"इति गुग्गुलुकुष्ठधूपं दद्यात्। "यस्ते गन्धस्त्यायुषम्" इति भूतिं प्रयच्छेत्। "दूष्या दूषिरसि" इति प्रतिसरं बद्धा "वार्तः पुरस्तात्"इति प्रतिदिशं क्षिपेत्। बहिर्निःसृत्योत्तरेण गत्वा वाह्येनोपनिष्क्रम्य सुहृदे कुर्याच्छ्रद्दधते कुर्याद्वाहनानामभयं कर्म्म।

तन्त्रमित्युक्तां शान्तिं, 'तन्त्रभूतां महाशान्तिं प्रवक्ष्याम' इत्यादिनोक्ताम्। दूषणेन, 'दूष्या दूषिरासि' इतिसूक्तेन। निःसालां, 'निःसालां धृष्णुं धिषणम्' इतिसूक्तम्। प्रतिसरं, हस्ते तन्तुमयं कङ्कणम्।

अथाश्वयुजे मासे पूर्णमास्यामपराह्णे हस्तिने नीराजनं कुर्यात्।

प्रागुदक्प्रवणे देशे यत्र वा मनो रमते। "गिरयस्ते पर्वता" इत्येतया हस्तशतमर्द्धं वा मण्डलं परिगृह्य "याभिर्यज्ञम्" इति सम्प्रोक्षेत्। तत्र श्लोकाः—

दशहस्तसमुत्सेधं पञ्चहस्तं तु विस्तृतम्।
शान्तिवृक्षमयं कुर्यात्तोरणं पुष्टिवर्द्धनम्॥
शुक्लैः शुक्लाम्बरध्वजैर्माल्यैश्च परिभूषितम्।
कारयेदविले शुभ्रे रसैश्च परिपूरिते॥
रसैस्त्वामभिषिञ्चामि भूमे मह्यं शिवा भव।

असपत्ना सपत्नश्रीर्मम यज्ञविवर्द्धनी ।
इमं स्तम्भूधृतांत्यक्तावुभौ मा यससावताव ॥ ?

यो मा कश्चाभिदासति तमिमौ भूमिर्दहतामित्युच्छ्रयस्व "इमाया ब्रह्मणस्पत" इति । एताभ्यामुच्छ्रयीणि मालापतार्वैस्तम्भान् संयोज्य तस्यां चतुर्हस्तां वेदिं कृत्वा दर्भपवित्रपाणिर्वलिं पुष्पाणि च दत्त्वा मधुना मिश्रैः स्वस्तिकं सयावकदधिकृशरापूपकान् पायसं घृतं विविधपानभक्षफलैरग्निं परिस्तीर्य "आपोऽस्मान्मातरः सूदयन्तु" इति चतुरौदुम्बरान् कुम्भान् ह्रदोदकेन पूरयित्वा प्रतिदिशमवस्थाप्य दध्यात् रौद्राग्नेयवासव्यवारुणा मन्त्राः । रक्षोघ्नं कृत्वा दूषणं यशस्यवर्चस्यानि च हुत्वौषधिं समादाय द्विहस्तं मण्डलमित्युक्तम् । तत्र श्लोकः—

बृहत्कण्टारिकण्टकालघुकण्टारिकाः स्मृताः ।
सुवर्णपुष्पी श्वेतागिरिकार्णिका क्षुदिसत्त्वा ॥ १

सिंही व्याघ्री हिरण्यवर्णामपराजिता पृश्निपर्णी दूर्वा पद्मुन्मत्तमालिनीं तामनुमन्त्रयते । वैणवं कटमवस्थाप्यादध्यात् । द्वैपवैयाघ्रानडुच्चर्म परिस्तीर्य ततो या स्यादधिदेवता तस्यै वालिं दत्त्वा पिण्डानि च दद्यात् । हस्तिनमाचामयेत् । यस्यां दिशि रिपुर्न भवति तां दिशं गत्वा हस्तिनमानयेद्धिरण्येन रजतेन वज्रमणिमुक्तादिभिः शङ्खेन चन्दनेन भद्रदारुणा कुष्ठेन नलदेन रोचनेनाञ्जनेन मनःशिलया पद्मकुमुदोत्पलैः "ममाग्ने वर्च" इति सूक्तं दक्षिणोत्तरमुखं प्रतिजपेच्छेषेण गात्राण्यभ्यञ्जयेत् । तत्र श्लोकः—

हस्तिनां रक्षणे दण्डः कर्त्तव्यो वैणवो नवः ।
षोडशारत्निमात्रस्तु चारुपर्वा मनोरमः ॥

तेन वारणान् वारयेत्। दन्ताग्रेषु तृणानि कृत्वा "यथा हव्यं वहसि ग्रसति तं जातवेदसम्" इत्यग्निं प्रज्वालयेत्। "सुजातं जातवेदसम्" इति वाचयेद् "यथा हव्यम्" इति नीराजयित्वा। "निधिं विभ्रति" इति शालां प्रवेशयेदनपेक्षमाणाः स्वानि स्थानानि व्रजन्ति दीर्घायुषो बलवन्तश्च भवन्ति । गोसहस्रं कर्त्रे दक्षिणा ग्रामवरं च ।

'निधिं बिभ्रति बहुधा गुहासु' इतिसूक्तं पठित्वा शालां प्रवेशयेत् ।

इति हस्त्यश्वदीक्षा समाप्ता ।

परिशिष्टद्वयम्—

अथ वर्षशतं प्रवर्द्धमानो राजानमभिवर्द्धयिष्यन् संवत्सरे जन्मदिने कुर्यात् । तन्त्रमित्युक्तं,"पुनन्तु मा वायोः पूतो वैश्वानरो रश्मिः" इति । पवित्रैः पुण्याहादीनि च मङ्गलैर्यजमानं च सम्प्रोक्ष्य "यदा बध्नन्" इति पुष्पाद्यलङ्कारमावर्ज्जयित्वा माहेन्द्रं चरुं श्रपयेत् । लोकपालेभ्यश्च द्वितीयं चरुं श्रपयेत् । "महां इन्द्रो य ओजसा" इति ह्यग्नौ हुत्वा इन्द्राय स्वाहेत्यादिलोकपालांश्चेष्ट्वा राजानमन्वालभ्य आदिवज्जुहुयात् "अर्वाञ्चमिन्द्रः सुत्रामेममिन्द्र वर्द्धय क्षत्रियं मे शतं जीवन्तु शरद" इति । "रक्षन्तु त्वाग्नय" इति चतसृभी रक्षां कृत्वा रोचनया अलङ्कुर्यात्। त्रिगुणेन सूत्रेण बद्ध्वा "मानायीतन्तुम्" इति सूक्तेन रक्षासूत्रं सम्पातं च कृत्वा "धाता ते ग्रन्थिम्" इति बध्नाति । उत्तरं तन्त्रं हिरण्यं दक्षिणा ॥ १ ॥ महानवम्यां हस्त्यश्वदीक्षा प्रतिपत्प्रभृति नवरात्रं शस्त्रसस्वसम्पातः। तृतीयायां हस्त्यश्वानां कर्म्म,सप्तम्यां हस्त्यश्वानां दर्शनम्, अष्टम्यामथ पिष्टमयीमित्यादि,नवम्यां दुर्गापूजनम् अथ नवम्यामित्यादि नवम्याम्। अथा-

पराजितदशम्यां पूर्वाह्णे विजयमुहूर्त्ते उक्तं प्रास्थानिकम् । एतानि खलु प्राग्द्वाराणि इत्यादि "स्वस्तिदा ये ते पन्थान" इत्यादि नक्षत्रहोमश्च अथ श्रवणे नक्षत्रे अथ राज्ञामिन्द्रमहस्येति व्याख्यातः । अथ पौर्णमास्यामपराह्णे पूर्णमासिकं कर्म्म । अथापामार्गत्रयोदश्यां श्वेते मुहूर्त्ते स्नानं कृत्वा अपामार्गं त्रिः परिभ्रामयेद्राज्ञ उपरि मन्त्रेण, "ईशानां त्वा भेषजानाम्" इति त्रिभिः सूक्तैः "प्रतीचीनफल" इति सूक्तेन वा पुनः स्नानम् । तत आरात्रिकं परिभक्तेतिद्वाभ्यामितिसमानम् । अथ दीपोत्सवं प्रतिपदि हस्त्यश्वादिदीक्षादिसमानमभ्यातानान्तं कृत्वा "येस्यां प्राची दिक्" इति "मानो देवा" "यस्ते सर्प" इत्येतैः सूक्तैः तृणानि युगतशाना सम्पातवन्ते गणं च प्रातितामिमधानाशने हस्त्यश्वादियुगपत्तन्त्रं समानं धेनुर्दक्षिणा । अथाक्षयनवम्यां रात्रौ हस्त्यश्वादीनामनीकानां रथस्य परहोमश्च । अथ विष्णुद्वाश्यां पुरोहितः पश्चिमां सन्ध्यामुपास्य गृहीतदर्भो यत्र राजानमभिगम्य पौष्टिकहोमश्च रात्रौ नीराजनं कृत्वा हस्त्यश्वेभ्यश्च । अथ कार्त्तिक्यां पौर्णमास्यां रेवत्यामाश्वयुज्यां वृषोत्सर्गः । अथाग्रहायणीपौर्णमास्यां तन्त्रं कृत्वा पादायेतिद्वाभ्यां रसं सम्पात्याभिमन्त्र्य राजानं प्राशयेत् । अथ पौष्यां पौर्णमास्यामुक्तः पुष्याभिषेकः । अथ फाल्गुन्यां पौर्णमास्यां रात्रौ होलिका । महानवम्यामुक्तप्रज्वलनं नीराजनं वा । अथ ग्रीष्मप्रतिपद्यायुष्मते स्नानं कृत्वाऽपां सूक्तैराप्लुत्य प्रदक्षिणमावृत्याऽप उपस्पृशेदित्युक्तम् । अथ चैत्र्यां पौर्णमास्यां तेजोव्रतं त्रिरात्रमश्नातीत्युक्तम् । अथ मदनत्रयोदश्यां वैशाख्यां पौर्णमास्यां मध्याह्ने गर्त्ते वाप्यां पुष्करिण्यां घटे वा सर्वगन्धान् प्रक्षिप्य प्राक्तन्त्रमभ्यातानान्तं कृत्वा "सिंहे व्याघ्रे" "यशोहविः"

"प्रातरग्निं""गिरावरगराटेषु""दिवस्पृथिव्या"इत्येतैः सूक्तैरुदकं सम्पात्याभिमन्त्र्य राजानं स्नापयेत् प्रविश्य प्रोक्षति च तन्त्रं संस्थापयेद्धेनुर्दक्षिणा। अथ श्रावण्यां पौर्णमास्यां विजयमुहूर्त्ते "रक्षन्तु त्वाग्नय"इति रक्षाबन्धनं कृत्वा नीराजनं च वाह्येनोपनिष्क्रम्येतिपैठीनासिः। अथ आदित्यदिने आदित्यमण्डको व्याख्यातः। अथ जन्मनक्षत्रे जन्मनक्षत्रयागहोमो व्याख्यातः। अथ राजकर्माणि प्रतिनक्षत्रं कर्तव्यानीत्यायुधायाश्वप्रभृत्यादीनि विभृयादिति। कृत्तिकारोहिण्यादीनि व्याख्यातानि। इन्द्रोत्सवे इन्द्रोत्सवो व्याख्यातः। प्रतिदिनं ग्रहयागः। प्रतिदिनं नक्षत्रयागः। प्रतिदिनं दशगुणी महाशान्तिः। प्रतिस्थानं कृत्तिकारोहिण्यौ व्याख्याते। नक्षत्रस्नानानि नक्षत्रदक्षिणाश्च। राजकर्म्म सांवत्सरीयं हस्त्यश्वादिदीक्षा।

इति राज्ञो वर्षकृत्यम्।

अथ सहायाः।

अभिषेकानन्तरं राज्ञा किं कर्त्तव्यमित्यपेक्षायाम्—

मत्स्यपुराणे,

मनुरुवाच।

राज्ञोऽभिषिक्तमात्रस्य किन्नु कृत्यतमं भवेत्।
एतन्मे सर्वमाचक्ष्व सम्यग्वेत्ति यतो भवान्॥

मत्स्य उवाच।

अभिषेकार्द्रशिरसा राज्ञा राजीवलोचन।
सहायवरणं कार्यं तत्र राज्यं प्रतिष्ठितम्॥
यदप्यल्पतरं कर्म तदप्येकेन दुष्करम्।
पुरुषेणासहायेन किमु राज्यं महोदयम्॥
तस्मात्सहायान् वरयेत्कुलीनान्नृपतिः स्वयम्।

शूरान् कुलीनजातीयान् बलयुक्तान् श्रियान्वितान् ॥
रूपसत्त्वगुणोपेतान् संयतान् क्षमयाऽन्वितान् ।
क्लेशक्षमान् महोत्साहान् धर्मज्ञांश्च प्रियंवदान् ॥
हितोपदेशकान्राज्ञः स्वामिभक्तान श्रियान्वितान् । इति ।

विष्णुधर्मोत्तरे,

साधवः कुलजाः शूरा ज्ञानवन्तोऽनसूयकाः ।
अक्षुद्राः शुचयो दक्षाः स्युर्नराः पारिपार्श्वकाः ॥

पारिपार्श्वकाः निकटवर्त्तिनः । तांश्च नित्यं परीक्षेदित्युक्तम्—

तत्रैव,

परीक्षेत्प्रत्यहं भृत्यानाप्तैश्चारैर्नराधिपः ।
समानशीलैर्विश्रब्धैर्विवृणोति मनोगतम् ॥ इति ।

बालिशादीनपरीक्षितांश्च न कुर्यादित्युक्तम्—

तत्रैव,

न बालिशा न च क्षुद्रा नाप्रज्ञा नाजितेन्द्रियाः ।
नाकुलीना नराः पार्श्वे स्थाप्या राज्ञा हितैषिणा ॥

तथा,

नापरीक्ष्य महीपालः प्रकर्त्तुं भृत्यमर्हति । इति ।

एवंविधांस्तत्तत्कर्मसु योजयेदित्युक्तम्—

मात्स्ये,

एवंविधान् सहायांस्तु शुभकर्मसु योजयेत् । इति ।

महाभारतेऽपि,

भृत्या ये यत्र योग्याः स्युः सम्यक् स्थाप्याः परीक्षिताः । इति ।

ये उत्तमाधममध्यमाः । यत्र उत्तमाधममध्यमकर्मसु । तथा चोक्तम्—

गरुडपुराणे,

भृत्याश्च त्रिविधा ज्ञेया उत्तमाधममध्यमाः ।
नियोक्तव्या यथार्हेषु त्रिविधेषु च कर्मसु ॥ इति ।

मत्स्यपुराणेऽपि,

गुणहीनानपि तथा विज्ञाय नृपतिः स्वयम् ।
कर्मस्वेव नियुञ्जीत यथायोग्येषु भागशः ॥

अत्रायं वाक्यार्थः । यदि मौलाः कुलीना अपि तथा पितृपैतामहपदयोग्यगुणहीनास्तांस्तथाविधगुणहीनानपि विज्ञाय यथायोग्येष्वेव कर्मसु स्वयं भागशः कर्मविभागेन नियुञ्जीत, न तु तत्तत्पितृपैतामहपदेषु, तत्र तत्र तेषामयोग्यत्वात् । यथायोग्येषु कर्मसु नियुञ्जीतैवेति वा वाक्यार्थः । तेषामवश्यभरणीयानामभरणे तेषां च राजान्तराश्रयणे महादोषः स्यात् । भृत्यानामवश्यं परीक्षा कार्येत्युक्तम्—

गरुडपुराणेऽपि,

यथा चतुर्भिः कनकं परीक्ष्यते तुलाकषच्छेदनतापनेन ।
तथा चतुर्भिर्भृतकः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा॥

इत्यादिवचनैः परीक्षितास्तत्तत्कर्मसु नियोज्याः । एते एव च सहाया इति व्यपदिश्यन्ते । ते च द्विविधा राज्याङ्गोपकारका राजाङ्गोपकारकाश्च । ते च प्रत्येकं द्विविधा दृष्टार्था अदृष्टार्थाश्च । दृष्टद्वारकोपकारकारित्वेन दृष्टार्थत्वम्, अदृष्टद्वारकोपकारित्वेन चादृष्टार्थत्वं द्रष्टव्यम् । यद्यप्युभयाङ्गोपकारित्वेन चोभयत्रापि त्रैविध्यं वक्तुमुचितं तथापि भूयस्त्वात्तद्व्यपदेश इति न्यायेन द्वैविध्यमेव न्याय्यम् । अन्यथा वक्ष्यमाणानाममात्यादीनां राजाङ्गोपकारित्वेन द्वैविध्यमपि न स्यात् । न चेष्टापत्तिः,

उपधेयसङ्करेऽप्युपाधेरसङ्करात् । तत्र राज्याङ्गोपकारका दृष्टार्था अमात्यसेनापतिप्रभृतयः, अदृष्टार्थाश्च वक्ष्यमाणब्राह्मणामात्यप्रभृतयः । राजाङ्गोपकारकाश्च दृष्टार्थाः प्रतीहारसूदप्रभृतयः, अदृष्टार्थाश्च पुरोहितप्रभृतयः । एते च यथायथं स्वस्वबुद्ध्या परिच्छिद्य पृथक्पृथङ्निरूपणीयाः । तत्रामात्याः । तत्र—

महाभारते राजधर्मे,

कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियम् ।
धर्मनित्यं स्थितं नीत्यां मन्त्रिणं पूजयेन्नृपः ॥ इति ।

याज्ञवल्क्येऽपि,

स मन्त्रिणः प्रकुर्वीत प्राज्ञान् मौलान् स्थिरान् शुचीन् ।
तैः सार्द्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम् ॥ इति ।

स,उक्तलक्षणो राजा । मन्त्रिणः कार्याकार्यविदः । प्राज्ञान् ऊहापोहसमर्थान् । मौलान् स्ववंशपरम्परायातान् । स्थिरान्, स्वामिहितेष्वचञ्चलान् । शुचीन्, उपाधिरहितान् । प्रकुर्वीत, प्रयत्नादुपाददीत । राज्यं, राजकर्म्म षाड्गुण्यं, तदङ्गानि स्वाम्यादीनि च । चिन्तयेत्, हेयोपादेयतया विचारयेत् । अथ विप्रेण, विप्रामात्येन सह विचारयेत् । तदनन्तरं स्वयमेवार्थं साधकबाधकप्रमाणवत्तया निश्चिनुयात् । कल्पतरुणा नराधिप इत्यनुवृत्तौ—सन्मन्त्रिण इति पाठो लिखितः। तेषां गुणान्तराणि सङ्ख्यां चाह—

मनुः,

मौलान् शास्त्रविदः शूरान् लब्धलक्षान् कुलोद्भवान् ।
सचिवान् सप्त चाष्टौ वा कुर्वीत सुपरीक्षितान् ॥

लब्धलक्षान् परिदृष्टकर्मणः ।

अपि यत्सुकरं कर्म तदप्येकेन दुष्करम् ।

विशेषतोऽसहायेन किमु राज्यं महोदयम् ॥
तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् ।
समस्तानां च कार्येषु विदध्याद्धितमात्मनः ॥
तेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता ।
मन्त्रयेत्परमं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥
नित्यं तस्मिन् समाश्वस्तः सर्वकार्याणि निक्षिपेत् ।
तेन सार्द्धं विनिश्चित्य ततः कार्यं समाचरेत् ॥ इति ।
राजगुणानुवृत्तौ कात्यायनोऽपि,
एतैरेव गुणैर्युक्तममात्यं कार्यचिन्तकम् ।
ब्राह्मणं तु प्रकुर्वीत नृपभक्तं कुलोद्भवम् ॥
मन्त्रिणो यत्र सभ्याश्च वैद्याश्च प्रियवादिनः ।
राज्याद्धर्मात्सुखात्तत्र क्षिप्रं हीयेत पार्थिवः ॥
न तस्य वचने कोपमेतेषां तु प्रवर्तयेत् ।
यस्मादेतैः सदा वाच्यं न्याय्यं सुपरिनिष्ठितम् ॥ इति ।

प्रियवादिनः असत्यप्रियवादिनः । मन्त्रिणो यत्र, राज्यकृत्येषु, प्रियवादिनस्तत्र पार्थिवो राज्याद्धीयेत । सभ्याः प्रायश्चित्तादौ, तत्र धर्मात् । वैद्याश्चिकित्सायां, तत्र सुखात् । तस्य न्याय्यस्य ।

पाराशरे,

अमात्यान्मन्त्रिणो दूतान् यथोदितपुरोहितान् ।
प्राड्विवाकं सभास्तारान् हितानारक्षकानपि ॥

इत्यादिना सप्त पञ्च वा यथोक्तगुणविशिष्टा मौला अमात्याः कर्तव्याः । एकश्च राजगुणसमानगुणो ब्राह्मणोऽमात्यः कर्तव्यः । एते चामात्या मन्त्रिपदव्यपदेशभाजोऽपीत्युक्तम् ।

इत्यमात्याः ।

अथ सेनापतिः ।

तत्र मत्स्यपुराणे,

कुलीनः शीलसम्पन्नो धनुर्वेदविशारदः ।
हस्तिशिक्षाश्वशिक्षासु कुशलः श्लक्ष्णभाषितः ॥
निमित्ते शकुनज्ञाने वेत्ता चैव चिकित्सते ।
कृतज्ञः कर्मणां शूरस्तथा क्लेशसहो ऋजुः ॥
व्यूहतन्त्रविधानज्ञः फल्गुसारविशेषवित् ।
राज्ञा सेनापतिः कार्यो ब्राह्मणः क्षत्रियोऽथ वा ॥इति ।

व्यूहतन्त्रविधानज्ञः, व्यूहाश्चक्रदण्डगरुडाद्याकाराः सेनासन्निवेशास्तेषां तन्त्रं तत्प्रतिपादकं शास्त्रं विधानं रचनं च तज्जानाति तादृशः ।

इति सेनापतिः ।

अथ राज्याध्यक्षः ।

गरुडपुराणे,

कुलशीलगुणोपेतः सत्यधर्मपरायणः ।
रूपेण सुप्रसन्नश्च राज्याध्यक्षो विधीयते ॥ इति ।

इति राज्याध्यक्षः ।

अथ रत्नपरीक्षकः ।

गरुडपुराणे,

मूल्यरूपपरीक्षाकृद्भवेद्रत्नपरीक्षकः । इति ।

रत्नजातयस्तत्परीक्षाप्रकाराश्च लक्षणप्रकाश एव निरूपयिष्यन्त इति नेह निरूप्यन्ते ।

इति रत्नपरीक्षकः ।

---

१ अत्र उत्वमार्षम् ।

अथ प्रतीहारः ।

विष्णुधर्मोत्तरे,

प्रांशुः सुरूपो दक्षश्च प्रियवादी न चोद्धतः ।
चित्तग्राही च सर्वेषां प्रतीहारो विधीयते ॥ इति ।

गरुडपुराणेऽपि,

इङ्गिताकारतत्त्वज्ञो धनवान् प्रियदर्शनः ।
अप्रमादी प्रमाथी च प्रतीहारः स उच्यते ॥ इति ।

इति प्रतीहारः ।

अथ दूतः ।

मत्स्यपुराणे,

यथोक्तवादी दूतः स्याद्देशभाषाविशारदः ।
शक्तः क्लेशसहो वाग्मी देशकालविभागवित् ॥
विज्ञाय देशं कालं च यद्धितं स्यान्महीक्षितः ।
वक्ता तस्यापि यः काले स दूतो नृपतेर्भवेत् ॥ इति ।

गरुडपुराणेऽपि,

बुद्धिमान्मतिमांश्चैव परचित्तोपलक्षकः ।
क्रूरो यथोक्तवादी च एष दूतो विधीयते ॥ इति ।

बुद्धिः निश्चयात्मिका । मतिः, प्रज्ञा शीघ्रग्राहिणी ।

इति दूतः ।

अथ रक्षिणः ।

मत्स्यपुराणे,

प्रांशवो व्यायताः शूरा दृढभक्ता निराकुलाः ।
राज्ञा तु रक्षिणः कार्याः सदा क्लेशसहा हिताः ॥ इति ।

इति रक्षिणः ।

---

१ नयस्य इति मुद्रितमत्स्यपुराणे पाठः ।

अथ ताम्बूलधारिप्रभृतीनां लक्षणानि ।

मात्स्ये,

अनाहार्यो ऽनृशंसश्च दृढभक्तिश्च पार्थिवे ।
ताम्बूलधारी भवति नारी वाप्यथ तद्गुणा ॥

अनाहार्यः, द्रव्यादिदानद्वारा परैरभेद्यः ।

तथा,

पुरुषस्तरुणः प्रांशुर्दृढभक्तिः कुलोचितः ।
शूरः क्लेशसहश्चैव खड्गधारी प्रकीर्तितः ॥
शूरश्च बलयुक्तश्च गजाश्वरथकोविदः ।
धनुर्द्धारी भवेद्राज्ञः सर्वक्लेशसहः शुचिः ॥

तथा,

षाड्गुण्यविधितत्त्वज्ञो देशकालविशारदः ।
सान्धिविग्रहिकः कार्यो राज्ञा नयविशारदः ॥

सन्धिविग्रहयानासनद्वैधीभावसंश्रयाः षाड्गुण्यं, तस्य विधेः प्रकारस्य तत्त्वं जानाति सः ।

तथा,

निमित्तशकुनज्ञानी हयशिक्षाविशारदः ।
हयायुर्वेदतत्त्वज्ञो भूमिभागविशेषवित् ॥
बलाबलज्ञो रथिनः स्थिरदृष्टिः प्रियंवदः ।
शूरश्च कृतविद्यश्च सारथिः परिकीर्त्तितः ॥
अनाहार्यः शुचिर्दक्षश्चिकित्सितविदां वरः ।
सूदशास्त्रविशेषज्ञः सूदाध्यक्षः प्रशस्यते ॥ इति ।

अनाहार्यः परैरभेद्यः ।

सूपकारलक्षणम्—

गरुडपुराणे,

पितृपैतामहो दक्षः शास्त्रज्ञः सत्यपाचकः ।
शौचयुक्तः सदाचारः सूपकारः स उच्यते ॥ इति ।

शास्त्रज्ञः, नलभीमसुषेणादिकृतसूपशास्त्रज्ञः । "आर्द्रकं गुडसंयुक्तं" "ताम्रपात्रे स्थितं गव्यम्" इत्यादिनिषिद्धज्ञानाय धर्मशास्त्रज्ञश्च ।

मत्स्यपुराणे,

सूदशास्त्रविधानज्ञाः पराभेद्याः कुलोद्गताः ।
सर्वे महानसे धार्या नीचकेशनखा नराः ॥ इति ।

धर्माध्यक्षलक्षणम्—

गारुडे,

समस्तकृतशास्त्रज्ञः पण्डितोऽथ जितेन्द्रियः ।
शौर्यवीर्यगुणोपेतो धर्माध्यक्षो विधीयते ॥ इति ।

मात्स्ये,

समः शत्रौ च मित्रे च धर्मशास्त्रविशारदः ।
विप्रमुख्यः कुलीनश्च धर्माधिकरणो भवेत् ॥
कार्यास्तथाविधास्तत्र द्विजमुख्याः सभासदः ।
सर्वदेशाक्षराभिज्ञः सर्वशास्त्रविशारदः ॥
लेखकः कथितो राज्ञः सर्वाधिकरणेषु वै । इति ।

गरुडपुराणे,

मेधावी वाक्पटुः प्राज्ञः सत्यवादी जितेन्द्रियः ।
सर्वशास्त्रसमालोकी ह्येष साधुः स लेखकः ॥ इति ।

मत्स्यपुराणे,

शीर्षोपेतान् सुसम्पूर्णान् शुभश्रेणिगतान् समान् ।
अक्षरान् वै लिखेद्यस्तु लेखकः स वरः स्मृतः ॥

उपायवाक्यकुशलः सर्वशास्त्रविशारदः ।
उपायाः, सामदानभेददण्डाः, तेषु वाक्येषु च निपुणः ।
बह्वर्थवक्ता चाल्पेन लेखकः स्यान्नृपोत्तम ॥
राजाभिप्रायतत्त्वज्ञो देशकालविभागवित् ।
अनाहार्यो नृपे भक्तो लेखकः स्यान्नृपोत्तम ॥
पुरुषान्तरतत्त्वज्ञाः प्रांशवश्चाप्यलोलुपाः ॥
धर्माधिकरणे कार्या जनाह्वानकरा नराः ।
एवंविधास्तथा कार्या राज्ञा दौवारिका जनाः ॥
तथा,
आयव्ययज्ञो लोकज्ञो देशोत्पत्तिविशारदः ।
कृताकृतज्ञो भृत्यानां ज्ञेयः स्यादक्षरक्षिता ॥
अक्षरक्षिता, अक्षाणां पाशानां क्रीडासाधनीभूतानां रक्षिता पालकः ।
तथा,
लोहवस्त्राजिनादीनां रत्नानां च विधानवित् ।
विज्ञाता फल्गुसाराणामनाहार्यः शुचिः सदा ।
निपुणश्चाप्रमत्तश्च धनाध्यक्षः प्रकीर्त्तितः ॥
आयद्वारेषु सर्वेषु धनाध्यक्षसमा नराः ।
व्ययद्वारेषु च तथा कर्त्तव्याः पृथिवीक्षिता ॥
परम्परागतो यः स्यादष्टाङ्गेन चिकित्सते ।
अष्टावङ्गानि, शल्य–शालाक्य–कायचिकित्सा–भूततन्त्र–विषविद्या–रसायन–वाजीकरण–कुमारभृत्याः ।
अनाहार्यः स वैद्यः स्यात् धर्मात्मा च कुलोद्गतः ॥
प्राणाचार्यः स विज्ञेयो वचनं तस्य भूभुजा ।

---

१ अयं श्लोको मुद्रितमत्स्यपुराणे नोपलभ्यते ।

अविचार्यं सदा कार्यं यथा कार्यं पृथग्जनैः ॥
हस्तिशिक्षाविधानज्ञो वनजातिविशारदः ।
क्लेशक्षमस्तथा राज्ञो गजाध्यक्षः प्रशस्यते ॥
एतैरेव गुणैर्युक्तः स्वासनश्च विशेषतः ।
गजारोही नरेन्द्रस्य सर्वकर्मसु शस्यते ॥

स्वासनो, दृढासनः। दुष्टगजेनापि चालयितुमशक्यमासनमुपवेशनं यस्य स तथा ।

हयशिक्षाविधानज्ञस्तच्चिकित्सितपारगः ।
अश्वाध्यक्षो महीभर्त्तुः स्वासनश्च प्रशस्यते ॥
अनाहार्यश्च शूरश्च तथा प्राज्ञः कुलोद्गतः ।
दुर्गाध्यक्षः स्मृतो राज्ञ उद्युक्तः सर्वकर्मसु ॥
वास्तुविद्याविधानज्ञो लघुहस्तो जितश्रमः ।
दीर्घदर्शी च शूरश्च स्थपतिः परिकीर्तितः ॥
यन्त्रमुक्ते पाणिमुक्ते अमुक्ते मुक्तधारिते ।
अस्त्राचार्यो निरुद्वेगः कुशलश्च विशिष्यते ॥

यन्त्रमुक्ते शरादौ। पाणिमुक्ते शक्त्यादौ। अमुक्ते खड्गादौ। मुक्तधारिते यष्ट्यादौ ।

वृद्धः कुलोद्गतः श्लक्ष्णः पितृपैतामहः शुचिः ।
राज्ञामन्तःपुराध्यक्षो विनीतश्च तथेष्यते ॥
पञ्चाशाब्दाधिका योषाः पुरुषाः सप्ततेः परे ।
अन्तःपुरचराः कार्या राज्ञा सर्वेषु कर्मसु ॥[1]
स्थापनाजातितत्त्वज्ञः सततं प्रतिजागृतः ।
राज्ञः स्यादायुधागारे दक्षः कर्मसु चोद्यतः ॥

---

१ एवं सप्ताधिकारेषु पुरुषाः सप्त ते पुरे । परीक्ष्य चाधिकार्याः स्यू राज्ञा सर्वेषु कर्मसु ॥ इति मुद्रितमत्स्यपुराणे पाठः ।

स्थापना, आयुधयन्त्रावरणानामुचितदेशनिवेशः । जातयः, आयुधानामवान्तरभेदाः ।

कर्माण्यपरिमेयानि राज्ञो भृगुकुलोद्वह ।
उत्तमाधममध्यानि बुद्ध्वा कर्माणि पार्थिवः ॥
उत्तमाधममध्येषु पुरुषेषु नियोजयेत् ।
नरकर्मविपर्यासाद्राजा नाशमवाप्नुयात् ॥

नरकर्मविपर्यासात्, उत्तमे कर्मण्यधमस्य अधमे कर्मण्युत्तमस्य नियोजनात् ।

नियोगं पौरुषं भक्तिं श्रुतं शौर्यं कुलं नयम् ।
ज्ञात्वा वृत्तिर्विधातव्या पुरुषाणं महीक्षिता ॥ इति ।

शङ्खलिखितौ,

न गृध्नुपरिवारः स्यात्कामं गृध्नो राजा मेयान्न हंसपरिवारो न हंसो गृध्नुपरिवारः परिवाराद्धि दोषाः प्रादुर्भवन्ति तेऽलं विनाशाय तस्मात्पूर्वमेव तत्परिवारं लिखेत् श्रुतशीलान्वयोपपन्नम् । इति ।

मनुः,

अन्यानपि प्रकुर्वीत शुचीन् प्राज्ञानवस्थितान् ।
आप्तानर्थसमाहर्तॄनमात्यान् सुपरीक्षितान् ॥
निवर्तेतास्य यावद्भिरितिकर्तव्यता नृभिः ।
तावतोऽतन्द्रितान्दक्षान् प्रकुर्वीत विचक्षणान् ॥ इति ।

शङ्खलिखितौ,

सर्वेषां राजकुलरक्षणं कोशपरिपालनं गोब्राह्मणपरित्राणं साम्परायिकं क्रियासाधारणत्वादनुजीविनां विशेषेण चारप्रतिचारौ मन्त्रप्रणिधयश्च सर्वाः तत्प्रयोजनत्वात्प्रत्यक्षा वृत्तिस्तस्य

राज्ञो भवेदेकान्ततो हि दोषस्तस्माद्भृत्यपक्षाः क्रोधलोभमानभयदोषोपहताः संलापिता विमानिताभ्याख्याता दानमानस्थानव्यवरोपिता हृतसर्वस्वाः स्वदोषोपहतादयः सततं प्रत्यवेक्षितव्या, धर्मार्थहितेष्वेतेषां यतेत स्वविषयाश्रावः परविषयभेदः सामादिभिरुपायैर्मन्त्रज्ञेषु मन्त्रकर्म दण्डकर्म कर्मकरेषु वीरा महत्स्वात्मनि च धर्मनित्याः सङ्ग्रहेष्वलुब्धाः भृत्यन्तेषु मौलाः शुचयोऽर्थकृत्येषु अन्येषु यथानुरूपं नियोज्याः । इति ।

अस्यार्थः । सर्वेषाम् अमात्यानाम् । सम्परायो, युद्धं तदुपयोगि साम्परायिकम् । क्रियासाधारणत्वात्, राज्यरक्षणरूपैकक्रियत्वात् । चारो, जनपदचरितज्ञानाय प्रच्छन्नचारी । तच्चरितज्ञः प्रच्छन्नः प्रतिचारः । मन्त्रप्रणिधयः, राज्ञो मन्त्रान्वेष्टारः । एते परराजसम्बन्धिनः, सर्वाः शङ्कनीया इत्यर्थः । तत्प्रयोजनत्वात्, यतस्तदेव चरितज्ञानं चारादीनां प्रयोजनम् । प्रत्यक्षा वृत्तिः, स्वयं कार्यदर्शनम् परोक्षाचारैः परचरितज्ञानम् । एकान्ततः, अन्यतरवृत्तिमात्राश्रयेण । भृत्यपक्षाः, भृत्यैः पूर्वं सम्मानिताः । अभ्याख्यातम्, आभिमुख्येन गुणाख्यानम् । दानमानस्थानव्यवरोपिता, दानेन व्यवरोपिता, मानेन व्यवरोपिताः, स्थानेन व्यवरोपिताः । स्वदोषोपहता आत्मदोषदूषिताः । एवमादयः सततं प्रत्यवेक्षितव्याः । तेन कारणेन एतेषां सम्बधिषु धर्मादिषु यतेत प्रयत्नं कुर्यात् । स्वविषयाश्रावः, स्वविषयस्य मन्त्रस्याश्रावणं अप्रकाशनं कार्यम् । परविषयभेदः, परविषयाणां शत्रुसम्बन्धिनाममात्यादीनां भेदः। सामादिभिरुपायैः,कार्य इति शेषः। कर्मकरेषु कर्मकरणाधिकृतेषु । दण्डकर्म, अपराधनिश्चये कार्यमिति शेषः । महत्सु कार्येषु स्वात्मनि च रक्षितव्याः । धर्मनित्या धार्मिकाः ।

सङ्कटेषु, अर्थस्येति शेषः । प्रत्यन्तेषु स्वमण्डलप्रत्यन्तदेशेषु । मौलाः, तत्तद्देशजाताः ।

विष्णुः, आकरलवणशुल्कतरनागवरेष्वाप्तान्नियुञ्जीत धर्मिष्ठान् धर्मकार्येषु निपुणानर्थकार्येषु शूरान् सङ्ग्रामकर्मसु उग्रानुग्रेषु पण्डांस्त्रीषु । इति ।

आकराः, सुवर्णरजताद्युत्पत्तिस्थानानि । लवणपदेनापि तदाकरा ग्राह्याः । शुल्कं, पण्यविंशतिभागादिस्थलशुल्कम् । तरशब्देन तरशुल्कमुच्यते । तरः, नौकादिभिः सरित्तरणम् । नागवरेषु, अत्युत्कृष्टगजेषु । नागवनेष्विति पाठे गजबन्धनयोग्येषु वनेषु इति व्याख्येयम् ।

मनुः,

तेषामर्थे नियुञ्जीत शूरान्दक्षान् कुलोद्गतान् ।
शुचीनाकरकर्मान्ते भीरूनन्तर्निवेशने ॥
समाहर्तॄन् प्रकुर्वीत धर्मशास्त्रार्थनिश्चितान् ।
कुलीनान् वित्तसम्पन्नान् समर्थान् कोशवृद्धये ॥

तथा,

सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम् ।
स्यादाश्रयपरो लोके वर्तेत पितृवन्नृषु ॥
अध्यक्षान् विविधान् कुर्यात्तत्र तत्र विपश्चितः ।
तेऽस्य सर्वाण्यवेक्षेरन् नृणां कार्याणि कुर्वताम् ॥

तेषां,पूर्वोक्तानां सहायानां मध्ये । अर्थे, अर्थनिमित्तम्,अर्थार्जनोपायेष्वित्यर्थः । तस्यैव विवरणमाकरकर्मान्त इति । भीरून्, इहलोकपरलोकभीतान् । सांवत्सरिकं बलिं, संवत्सरग्राह्यं करम् । लोके लोकमध्ये । दीनानाथादीनाम् आश्रयपरो वृत्तिकर्ता स्यात् ।

तथा,

दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् ।
इङ्गिताकारचेष्टाज्ञं शुचिं दक्षं कुलोद्गतम् ॥
अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् ।
वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥
अमात्ये दण्ड आयत्तो दण्डे वैनयिकी क्रिया ।
नृपतौ कोषराष्ट्रे तु दूते सन्धिविपर्ययौ ॥
दूत एव हि सन्धत्ते भिनत्त्येव च संहतान् ।
दूतस्तत्कुरुते कर्म येन भिद्येत बान्धवः ॥
स विद्यादस्य कृत्येषु निगूढेङ्गितचेष्टितैः ।
आकारमिङ्गितं चेष्टां भृत्येषु च चिकीर्षितम् ॥
बुद्ध्वा च सर्वं तत्त्वेन परराजचिकीर्षितम् ।
तथा प्रयत्नमातिष्ठेद्यथात्मानं न पीडयेत् ॥ इति ।

सर्वशास्त्रविशारदं, दृष्टादृष्टार्थबहुशास्त्रार्थकुशलम् । इङ्गितम्, अभिप्रायसूचकं वचनस्वरादि । आकारो, देहधर्मो मुखप्रसादवैवर्ण्यादिरूपः प्रीत्यप्रीतिसूचकः । चेष्टा, करास्फालनादिक्रिया कोपादिसूचिका तां जानाति तादृशम् । अनुरक्तः, जनेष्वनुरागवान् । तेन प्रतिराजादेरप्यद्वेषविषयः । शुचिः, स्त्रीधनविषयकशौचयुक्तः । दक्षः, कार्यकालं यो नातिक्रामति । स्मृतिमान्, राजाऽऽज्ञप्तार्थपरसन्देशयोरविस्मरणशीलः । देशकालवित्, देशकालाद्यनुरोधेन राजाज्ञप्तार्थं परसन्दिष्टमर्थं च योऽन्यथा वदति करोति च तादृशः । वपुष्मान्, प्रशस्तशरीरावयवरूपवान् । वीतभीः, राज्ञो हितार्थमप्रियस्यापि सन्देशादेर्वक्ता । अयं च दूतः परराज्ये सन्धिविग्रहप्रसक्तौ तत्र प्रेषणाय । मत्स्यपुराणे पूर्वमुक्तस्तु राजनिकट-

स्थित एव सर्वेषां कार्यकारकः । अत एवैतद्विषये—

महाभारते,

न तु हन्यान्महीपालो दूतं कस्यां चिदापदि ।
दूतहन्ता तु नरकमाविशेत्सचिवैः सह ॥
यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः ।
यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥ इति ।

श्रीरामायणेऽपि,

दूतानवध्यान् प्रवदन्ति सन्तो दूतस्य दण्डा बहवः प्रदिष्टाः ।
वैरूप्यमङ्गेषु कशाभिघातो मौण्ड्यं तथा लक्षणसन्निपातः ॥
एतान् हि दूते प्रवदन्ति दण्डान् दूतस्य दण्डो हि वधो न दृष्टः। इति।

इति परराष्ट्रदूतः ।

अथानुजीविवृत्तम् ।

मत्स्यपुराणे,

मत्स्य उवाच ।

यथानुवर्त्तितव्यं स्यान्मनो राज्ञोऽनुवर्तिभिः ।
तथा ते कथयिष्यामि निबोध गदतो मम ॥
ज्ञात्वा सर्वात्मना कार्यं स्वशक्त्या रविनन्दन ।
अक्षिप्य वचनं तस्य न वक्तव्यं कदाचन ॥
अनुकूलं प्रियं त्वस्य वक्तव्यं जनसंसदि ।
रहोगतस्य वक्तव्यमप्रियं तद्धितं भवेत् ॥
परार्थमस्य वक्तव्यं स्वस्थे चेतसि पार्थिव ।
स्वार्थः सुहृद्भिर्वक्तव्यो न स्वयं हि कदाचन ॥
कार्यातिपातः सर्वेषु रक्षितव्यः प्रयत्नतः ।
न च हिंस्याद्धनं किञ्चिन्नियुक्तेन च कर्मणि ॥

१ अत्र मुद्रितमात्स्ये 'राजा यत्तु वदेद्वाक्यं श्रोतव्यं तत्प्रयत्नतः' इति पाठो लभ्यते ।

राज्ञश्च न तथा कार्यं वेषभाषितचेष्टितम् ॥
राजलीला न कर्त्तव्या तद्विष्टं च विवर्जयेत् ।
अन्तःपुरधनाध्यक्षैर्वैरिदूतैर्निराकृतैः ॥
संसर्गं न व्रजेद्राजन् विना पार्थिवशासनम् ।
निःस्नेहतां चावमानं प्रयत्नेन तु गोपयेत् ॥
यच्च गुह्यं भवेद्राज्ञो न तल्लोके प्रकाशयेत् ।
नृपेण श्रावितं यत्स्याद्गुह्याद्गुह्यं नृपोत्तम ॥
न तत्संश्रावयेल्लोके तथा राज्ञः प्रियो भवेत् ।
आज्ञाप्यमाने चान्यस्मिन् समुत्थाय त्वरान्वितः ॥
अहं किं करवाणीति वाच्यो राजा विजानता ।
कार्यावस्थां च विज्ञाय कार्यमेतत्तथा भवेत् ॥
सततं क्रियमाणेऽस्मिंल्लाघवं तु व्रजेद् ध्रुवम् ।
राज्ञः प्रियाणि वाच्यानि न चात्यर्थं पुनः पुनः ॥
न हास्यशीलस्तु भवेन्न वापि भ्रुकुटीमुखः ।
नातिवक्ता न निर्वक्ता न च मत्सरिकस्तथा ॥
आत्मसम्भावितश्चैव न भवेत्तु कथञ्चन ।
दुष्कृतानि नरेन्द्रस्य न तु सङ्कीर्तयेत्क्वचित् ॥
वस्त्रमस्त्रमलङ्कारं राज्ञा दत्तं तु धारयेत् ।
औदार्येण न तद्देयमन्यस्मै भूतिमिच्छता ॥
न चैवात्यशनं कार्यं दिवास्वप्नं न कारयेत् ।
नानिर्दिष्टे तथा द्वारे प्रविशेत्तु कथञ्चन ॥
न च पश्येत्तु राजानमयोग्यासु च भूमिषु ।
राज्ञस्तु दक्षिणे पार्श्वे वामे वोपविशेत्सदा ॥
पुरस्ताच्च तथा पश्चादासनं तु विगर्हितम् ।

१ अत्र मुद्रितमात्स्ये 'राजा यत्तु वदेद्वाक्यं श्रोतव्यं तत्प्रयत्नतः' इति पाठो लभ्यते ।

जृम्भां निष्ठीवनं कासं कोपं पर्यस्तिकाश्रयम् ॥
भ्रुकुटिं वातमुद्गारं तत्समीपे विवर्जयेत् ।
स्वयं तत्र न कुर्वीत स्वगुणाख्यापनं बुधः ॥
स्वगुणाख्यापने युक्त्या परमेव प्रयोजयेत् ।
हृदयं निर्मलं कृत्वा परां भक्तिमुपाश्रितैः ।
अनुजीविगणैर्भाव्यं नित्यं राज्ञामतन्द्रितैः ॥
शाठ्यं लौल्यं च पैशुन्यं नास्तिक्यं क्षुद्रतां तथा ।
चापल्यं च परित्याज्यं नित्यं राजानुजीविभिः ॥
श्रुतेन विद्याशिल्पैश्च संयोज्यात्मानमात्मना ।
राजसेवां ततः कुर्याद्भूतये भूतिवर्द्धनीम् ॥
नमस्कार्याः सदा चास्य पुत्रवल्लभमन्त्रिणः ।
सचिवैश्चास्य विश्वासो न तु कार्यः कथञ्चन ॥
अपृष्टश्चास्य न ब्रूयात्कामं ब्रूयात्तथाऽऽपदि ।
हितं पथ्यं च वचनं हितैः सह सुनिश्चितम् ॥
चित्तं चैवास्य विज्ञेयं नित्यमेवानुजीविना ।
भर्त्तुराराधनं कुर्याच्चित्तज्ञो मानवः सुखम् ।
रागापरागौ चैवास्य विज्ञेयौ भूतिमिच्छता ।
त्यजेद्विरक्तं नृपतिं रक्ताद्वृत्तिं तु कारयेत् ॥
विरक्तः कारयेन्नाशं विपक्षाभ्युदयं तथा ।
आशावर्द्धनकं कृत्वा फलनाशं करोति च ॥
अकोपोऽपि सकोपाभः प्रसन्नोऽपि च निष्फलः ।
वाक्यं स मन्दं वदति वृत्तिच्छेदं करोति च ॥
प्रदेशवाक्यैर्मुदितो न सम्भावयतेऽन्यथा ।
आराधनासु सर्वासु सुप्तवच्च विचेष्टते ॥
कथासु दोषं क्षिपति वाक्यभङ्गं करोति च ।

लक्ष्यते विमुखश्चैव गुणसङ्कीर्त्तनेऽपि च ॥
दृष्टिं क्षिपत्यथान्यत्र क्रियमाणे च कर्मणि ।
विरक्तलक्षणं ह्येतच्छृणु रक्तस्य लक्षणम् ॥
दृष्ट्वा प्रसन्नो भवति वाक्यं गृह्णाति चादरात् ।
कुशलादिपरिप्रश्नी सम्प्रयच्छति चासनम् ।
विविक्तदर्शने चास्य रहस्येन न शङ्कते ।
जायते हृष्टवदनः श्रुत्वा तस्य तु सङ्कथाम् ॥
अप्रियाण्यपि वाक्यानि तदुक्तान्यभिनन्दते ।
उपायनं च गृह्णाति स्तोकमप्यादरात्तथा ॥
कथान्तरेषु स्मरति प्रहृष्टवदनस्तथा ।
इति रक्तस्य कर्त्तव्या सेवा रविकुलोद्वह ॥
आपत्सु न त्यजेत्पूर्वं विरक्तमपि सेवितम् ।
मित्रं न चापत्सु तथा च भृत्यायजन्ति ये निर्गुणमप्रमेयम् ।
प्रभुं विशेषेण च ते व्रजन्ति सुरेन्द्रधामामरवृन्दजुष्टम् ॥ इति ।
महाभारते धौम्यवचनम्—
दिष्टद्वारो लभेद्द्रष्टुं राजस्वेषु न विश्वसेत् ।
तदेवासनमन्विच्छेद्यत्र नातिपतेत्परान् ॥

दिष्टद्वारः, निवेदनानन्तरमादिष्टप्रवेशः । सामान्यतो वा निवारितद्वारप्रवेशः ।

यो न यानं न पर्यङ्कं न पीठं न गजं रथम् ।
अरोहेत्सम्मतोऽस्मीति स राजवसतिं वसेत् ॥
यत्र यत्रैनमासीनं शङ्केरन्दुष्टचारिणः ।
न तत्रोपविशेद्यो वै स राजवसतिं वसेत् ॥
न चानुशिष्याद्राजानमपृच्छन्तं कदाचन ।
तूष्णीं त्वेनमुपासीत काले समभिपूजयन् ॥

असूयन्ति हि राजानो जनाननृतवादिनः ।
तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा ॥
नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कदाचन ।
अन्तःपुरचरा ये च द्वेष्टि यानहिताश्च ये ॥

यान् राजा द्वेष्टि, ये च राज्ञोऽहिताः, तेषु मैत्रीं न कुर्वीतेत्यनुषङ्गः ।

विदिते चास्य कुर्वीत कार्याणि सुबहून्यपि ।
एवं विचरतो राज्ञि न क्षतिर्जायते क्वचित् ॥
गच्छन्नपि परां भूमिमपृष्टो ह्यनियोजितः ।
जात्यन्ध इव मन्येत मर्यादामनुचिन्तयन् ॥
समतिक्रान्तमर्यादं पूजयन्ति नराधिपाः ।
यत्नाच्चोपचरेदेनमग्निवद्देववच्चिह ॥
अनृतेनोपचीर्णो हि हन्यादेव न संशयः ।
यद्यद्भर्त्तानुयुञ्जीत तत्तदेवानुवर्त्तयेत् ॥
प्रमादमवलेपं च कोपं च परिवर्जयेत् ।
समर्थनासु सर्वासु हितं च प्रियमेव च ॥
संवर्णयेत्तदेवास्य प्रियादपि हितं भवेत् ।
अनुकूलो भवेच्चास्य सर्वार्थेषु कथासु च ॥
अप्रियं चाहितं यत्स्यात्तदस्मै नानुवर्णयेत् ।
नाहमस्य प्रियोऽस्मीति मत्वा सेवेत पण्डितः ॥
अप्रमत्तश्च सततं हितं कुर्यात्प्रियं च यत् ।
नास्यानिष्टानि सेवेत नाहितैः सह संवदेत् ॥
स्वस्थानान्न विकम्पेत स राजवसतिं वसेत् ।
दक्षिणं वाथ वामं वा पार्श्वमासीत पण्डितः ॥
रक्षिणां ह्यात्तशस्त्राणां स्थानं पश्चाद्विधीयते ।

नित्यं हि प्रतिषिद्धं तु पुरस्तादासनं महत् ॥
न च सन्दर्शने किञ्चिदवद्धमपि सञ्जपेत् ।
अपि ह्येतदरिद्राणां व्यलीकस्थानमुत्तमम् ॥
न मृषाभिहितं राज्ञा मनुष्येषु प्रकाशयेत् ।
असूयन्ति हि राजानो नरानवृतवादिनः ॥
तथैव चावमन्यन्ते नरान् पण्डितमानिनः ।
शूरोऽस्मीति न दृप्तः स्याद्बुद्धिमानिति वा पुनः ॥
प्रियमेवाचरन् राज्ञः प्रियो भवति भोगवान् ।
ऐश्वर्यं प्राप्य दुष्प्रापं प्रियं प्राप्य च राजतः ॥
अप्रमत्तो भवेद्राज्ञः प्रियेषु च हितेषु च ।
यस्य कोपो महाबाधः प्रसादश्च महाफलः ॥
कस्तस्य मनसापीच्छेदनर्थं प्राज्ञसम्मतः ।
न चोष्ठौ न भुजौ जातु न च वाक्यं समाक्षिपेत् ॥
सदा वातं च वाचं च ष्ठीवनं वाऽऽचरेच्छनैः ।
हास्यवस्तुषु चान्येषु वर्त्तमानेषु केषु चित् ॥
नातिगाढं प्रहृष्येत न चाप्युन्मत्तवद्धसेत् ।
न चातिधैर्येण चरेद्गुरुतां हि व्रजेत्ततः ॥
स्मितं तु मृदुपूर्वेण दर्शयेत प्रसादजम् ।
लाभेन हर्षयेद्यस्तु न व्यथेद्योऽवमानितः ॥
असम्मूढश्च यो नित्यं स राजवसतिं वसेत् ।
राजानं राजपुत्रं वा संवर्णयति यः सदा ॥
अमात्यः पण्डितो भूत्वा स चिरं तिष्ठते प्रियः ।
प्रगृहीतश्च योऽमात्यो निगृहीतस्त्वकारणैः ॥
न निर्वदति राजानं लभते सम्पदं पुनः ।
प्रत्यक्षं च परोक्षं च गुणवादी विचक्षणः ॥

उपजीवी भवेद्राज्ञो विषये वापि यो वसेत् ।
अमात्यो हि बलाद्भोक्तुं राजानं प्रार्थयेत यः ॥
न स तिष्ठेच्चिरं स्थानं गच्छेच्च प्राणसंशयम् ।
श्रेयः सदात्मनो दृष्ट्वा परं राज्ञा न संवदेत् ॥
विशेषयेच्च राजानं योग्यभूमिषु सर्वदा ।
विशेषयेत्, राजानमधिकं स्वात्मानं च ततो न्यूनं कुर्यात् ।
अम्लानो बलवाञ्छूरश्छायेवानुगतः सदा ॥
सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत् ।
अन्यस्मिन् प्रेष्यमाणे तु पुरस्ताद्यः समुत्पतेत् ॥
अहं किं करवाणीति स राजवसतिं वसेत् ।
आन्तरे चैव बाह्ये च राज्ञा यश्चाथ सर्वदा ॥
आदिष्टो नैव कम्पेत स राजवसतिं वसेत् ।
यो वै गृहेभ्यः प्रवसन् प्रियाणां नानुसंस्मरेत् ॥
दुःखेन सुखमन्विच्छेत्स राजवसतिं वसेत् ।
समवेषं न कुर्वीत नोच्चैः सन्निहितो वसेत् ॥
न मन्त्रं बहुधा कुर्यादेवं राज्ञः प्रियो भवेत् ।
न कर्मणि नियुक्तः सन् धनं किञ्चिदपि स्पृशेत् ॥
प्राप्नोति हि हरन्द्रव्यं वेधनं यदि वा वधम् ।
पानं वस्त्रमलङ्कारं यच्चान्यत्सम्प्रयच्छति ॥
तदेव धारयेन्नित्यमेवं प्रियतरो भवेत् । इति ।

इत्यनुजीविवृत्तम् ।

इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमल—

श्रीमन्महाराजाधिराजप्रतापरुद्रतनूज—

श्रीमन्महाराजमधुकरसाहसूनु—

श्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकर—

श्रीवीरसिंहदेवोद्योजित—

श्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनु—

सकलविद्यापारावारपारीणधुरीण—

जगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातु—

श्रीमन्मित्रमिश्रकृते

श्रीवीरमित्रोदयाभिधानिवन्धे राजनीतिप्रकाशे राजधर्माः ।

अथ राज्ञो निवासयोग्यदेशविचारः।

तत्र मनुः,

जाङ्गलं सस्यसम्पन्नमार्यप्रायमनाविलम्।
रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत्॥ इति।

जाङ्गलदेशलक्षणमन्यत्राभिहितम्—

अल्पोदकतृणो यस्तु प्रवातः प्रचुरातपः।
स ज्ञेयो जाङ्गलो देश इति देशविदो विदुः॥ इति।

स्मृत्यन्तरेऽपि,

स्वल्पवृक्षोदकपर्वतो बहुपक्षिमृगः प्रचुरवर्षातपश्च जाङ्गलो-देश इति।

इदं च स्वल्पोदकादिविशेषणं देशस्य परैरनाक्रमणीयत्वार्थम्। राजधान्यां तु बहुजलादिमत्त्वं तत्प्रकरणे वक्ष्यते। सस्यैः, वार्षिकशारदहैमन्तिकवासन्तिकैरव्यवहितोत्पत्तिकैर्धान्यैः सम्पूर्णम्। आर्यप्रायं, प्रचुरधार्मिकजनम्। अनाविलं, सर्पव्याघ्रादिभिरनाकुलम्। रम्यं मनोरमम्। आनतसामन्तं, दानमानादिना प्रणततत्तद्भूमिपालम्। स्वाजीव्यं, सुलभकृषिवाणिज्यादिलोकजीवनोपायम्। देशमावसेदित्यत्र "उपान्वध्याङ्वस" इत्याधारे द्वितीया। तथा—

याज्ञवल्क्यः,

रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत्। इति।

पशव्यं, पशुभ्यो हितम्। आजीव्यं, समन्तादुपजीव्यौषधितृणकाष्ठादियुक्तम्।

मत्स्यपुराणेऽपि,

मत्स्य उवाच।

राजा सहायसंयुक्तः प्रभूतयवसेन्धनम्।
रम्यमानतसामन्तं मध्यमं देशमावसेत्॥ इति।

प्रभूतं प्रचुरं यवसं तृणम् इन्धनं च यस्मिंस्तादृशम्। मध्यमं स्वपालनीयदेशमध्यस्थम्।

वैश्यशूद्रजनप्रायमनाहार्यं तथा परैः।
किञ्चिद्ब्राह्मणसंयुक्तं बहुकर्मकरं तथा॥

अनाहार्यं, परैर्ग्रहीतुमशक्यम्। ब्राह्मणबाहुल्ये सहवासादिना राजकीयेभ्यस्तेषां पीडा स्यादित्यतः किञ्चिद्ब्राह्मणसंयुक्तमिति।

अदेवमातृकं रम्यमनुरक्तजनावृतम्।
करैरपीडितं चापि बहुपुष्पफलं तथा॥

अदेवमातृकं,नदीमातृकम्।नद्यम्बुसम्पन्नव्रीहिपालितमित्यर्थः।

अगम्यं परचक्राणां तद्वासगृहमापदि।
समदुःखसुखं राज्ञः सततं प्रियमास्थितम्॥
सरीसृपविहीनं च व्यालतस्करवर्जितम्।
एवंविधं यथालाभं राजा विषयमावसेत्॥ इति।

विषयो देशः। आपदि, शत्रोर्विपत्काले। तेषां परचक्राणां वासगृहाणि यत्र तत्तथा। सरीसृपाः सर्पाः। व्याला व्याघ्राः। "यथालाभम्" "एवंविधम्" इत्यनेनैतत्प्रकरणोक्तकतिपयदेशविशेषणराहित्येऽपि न क्षतिरिति दर्शितम्।

विष्णुधर्मोत्तरेऽपि,

राजा सहायसम्पन्नः पशव्यं जाङ्गलं शिवम्।
वैश्यशूद्रजनप्रायमरोगं देशमावसेत्॥ इति।

इति राज्ञो निवासयोग्यदेशविचारः।

अथ दुर्गम् ।

तत्र याज्ञवल्क्यः,

तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये । इति ।

तत्र, पूर्वोक्तदेशे ।

मत्स्यपुराणे,

तत्र दुर्गं नृपः कुर्यात्षण्णामेकतमं बुधः ।

तानि च षड्विधानि—

स एवाह,

धन्वदुर्गं महीदुर्गं नरदुर्गं तथैव च ।

वार्क्षं चैवाम्बुदुर्गं च गिरिदुर्गं च पार्थिव ॥ इति ।

धन्वदुर्गं, निवासस्थानरूपाया राजधान्याः समन्तत एकद्विदिनसाध्ये मार्गे मरुभूमिरूपं दुर्गम् । तच्च द्विविधं, स्वतःसिद्धमरुभूमिरूपं, समन्ततो वापीकूपतडागादिजलस्थानानां वृक्षाणां च विनाशनेन निर्जलतां निर्वृक्षतां च सम्पाद्य कृत्रिममरुभूमिरूपं च । तत्राद्यमुक्तम्—

औशनसे धनुर्वेदे,

सलिलवर्जितमतिशर्कराचितं रूक्षं निराश्रयं विषमैर्विषकीटैश्चितं विषमप्रदेशे दुःसञ्चरं बलवद्भिः पालकैरुपेतं रोगविनिर्मुक्तं धान्वनदुर्गं श्रेयसे भवेत् । इति ।

द्वितीयं तूक्तम्—

महाभारते,

यदा तु पीडितो राजा भवेद्राज्ञा बलीयसा ।

तदाभिसंश्रयेत् दुर्गं बुद्धिमान् पृथिवीपतिः ॥

इत्युपक्रम्य—

सस्याभिहारं कुर्याच्च स्वयमेव नराधिपः ।

असम्भवेऽभिहारस्य दाहयेदग्निना भृशम् ॥
क्षेत्रस्थेषु च सस्येषु शत्रोरुपचयो भवेत् ।
विनाशयेद्धि तत्सर्वं बलेनाथ स्वकेन वै ॥
नदीषु दुर्गेषु सदा सङ्क्रमानवसादयेत् ।
जलं विस्रावयेत् सर्वमनिस्राव्यं च दूषयेत् ॥
दूषयेत्, विषादिनेति शेषः ।
दुर्गाणां चाभितो राजा मूलच्छेदं तु कारयेत् ।
सर्वेषां क्षुद्रवृक्षाणां चैत्यवृक्षं विवर्जयेत् ॥
प्रवृद्धानां च वृक्षाणां शाखाः प्रच्छेदयेत्तथा । इति ।

चैत्यवृक्षं, देवतायतनवृक्षम् । चितासम्बन्धिवृक्षमिति वा । केचित्तु समन्ततोऽवस्थितधन्विरूपं दुर्गं धन्वदुर्गम् । वक्ष्यमाणनरदुर्गं तु धन्व्यतिरिक्तमनुष्यैरविरललग्नतयाऽवस्थितैरुपकल्पितमिति ततो भेद इत्याहुः । महामिष्टकापाषाणादिनिर्मितं दुर्गं महीदुर्गम् । तच्च द्विविधम् । अतिनिम्नोन्नतभूमिरूपमेकं,अपरं च पाषाणैरिष्टकाभिर्मृदा वा निर्मितेन युद्धार्थमुपरियोधावस्थानयोग्येन प्राकारेणोपकल्पितम् । तत्राद्यमुक्तम्—

औशनसे धनुर्वेदे,

सर्वोपकरणोपेतं गुप्तं चोपायसंयुतम् ।
अत्युत्सेधातिनिम्नं च महीदुर्गं तदिष्यते ॥ इति ।

सर्वोपकरणोपेतं, अपेक्षितसकलपदार्थसमन्वितम् । गुप्तं,योधवरैः संरक्षितम् । शत्रुभिरविज्ञातप्रवेशनिर्गममार्गमिति वा । उपायसंयुतम्,उपायैः शत्रुनिबर्हणोपायैराग्नेयास्त्रादिभिर्युक्तम् । अत्युत्सेधातिनिम्नं, मध्ये अत्युत्सेधमत्युच्चम्, अतिनिम्नं समन्ततोऽतिनिम्नम् । वैपरीत्येन वोच्चत्वनिम्नत्वयुक्तम् । द्वितीयं तु विशान्तरानन्तर्भूतत्वान्महीदुर्गान्तर्भूतमेव, लोकप्रसिद्धेश्च । नरदुर्गं,

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसाहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्तः ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च साहितम् ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्योः व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वराविश्वम्भरत्रिपाठिसंकलितः ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः-प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणीता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपाद । ३

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचितकुञ्चिकाकलाख्यटीकाद्वयसंवलिता । ६

(४७) व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय विश्वेश्वरसूरिविरचितः । ३

(४८) वीरमित्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(४९) बृहदारण्यकवार्त्तिकसारः श्रीमद्विद्यारण्यस्वामिविरचितः । महेश्वरतीर्थकृतया लघुसंग्रहाख्यया टीकया समलंकृतः । ४

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । २

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः,
चौखम्बा बनारस सिटी

नराणामुपलक्षणत्वेन यथासम्भवं चतुरङ्गसेनासन्निवेशविशेषरूपं दुर्गम् । इदमेव च बलदुर्गम् । तदुक्तम्—

औशनसे धनुर्वेदे,

मौलं वश्यसुसन्तुष्टं शिक्षायुक्तं सनायकम् ।
भीमं चैवाप्रमत्तं च बलदुर्गं प्रशस्यते ॥ इति ।

मौलं परम्परागतयोधरूपम् । प्रशंसितमेतत्—

महाभारते,

दुर्गेषु च महाराज षट्सु ये शास्त्रनिश्चिताः ।
सर्वे दुर्गेषु शस्यन्ते नरदुर्गं सुदुस्तरम् ॥ इति ।

वार्क्ष, समन्ततो घनतरवृक्षरूपं दुर्गम् । तदुक्तम्—

औशनसे धनुर्वेदे,

अज्ञातमार्गं गहनं वृक्षगुल्मलतादिभिः ।
सकण्टकैर्वनं दुर्गं भूतये स्यात्सुविस्तृतम् ॥ इति ।

अम्बुदुर्गम्, समन्ततोऽगाधजलनद्यादिरूपं दुर्गम् । इदमधिकृत्योक्तम्—

औशनसे धनुर्वेदे,

सङ्क्षिप्तैनैकमार्गेण सविषैस्तु जलेचरैः ।
सलिलैर्विषमं स्पर्शनखादनवधप्रियैः ॥ इति ।

स्पर्शनं खादनं वधश्च तत्प्रियैः । गिरिदुर्गं च द्विविधम् । समन्ततो दुर्गमपर्वतवेष्टितभूभागरूपं, दुर्गमसजलगिरिशिखररूपं च । तदुक्तम्—

औशनसे धनुर्वेदे,

दुरारोहं परैर्दूरं शरपातस्य गोचरात् ।
सर्वसम्पूर्णमायुक्तं दुर्गं स्यात्पर्वतं श्रिये ॥ इति ।

सर्वेषां धान्यजलादीनां सम्पत् आधिक्यं तेन समायुक्तं यत्तादृशम् । एतान्येव षड्विधानि दुर्गाण्याह–

**मनुरपि,**

धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव च ।
नृदुर्गं गिरिदुर्गं च समाश्रित्य वसेत्पुरम् ॥ इति ।

तिर्यक्प्रभृतयोऽपि दुर्गमाश्रिता इत्यतो राज्ञा तदवश्यमाश्रयणीयमित्यभिप्रेत्य–

**स एवाह,**

त्रीण्याद्यान्याश्रितास्त्वेषां मृगगर्ताश्रया झषाः ।
त्रीण्युत्तराणि क्रमशः प्लवङ्गमनरामराः ॥

त्रीण्याद्यानि, आद्यानि त्रीणि दुर्गाणि । तत्र मरुभूमिरूपं मृगा आश्रिताः, गर्ताश्रया मूषकादयः दुर्गममहीरूपम्, झषा मत्स्या अगाधजलरूपम्, प्लवङ्गमा वानरा वृक्षसमुदायरूपम्, नरा मनुष्या नरसमुदायरूपम् । एकाकिनो हि परैरभिभाव्यत्वं स्पष्टमेव । अमरा देवाः कैलासादिदुर्गमाश्रिता इत्यतो राज्ञाप्येषामन्यतमदुर्गमाश्रयणीयमित्यर्थः ।

यथा दुर्गाश्रितानेतान्नोपहिंसन्ति शत्रवः ।
तथारयो न हिंसन्ति नृपं दुर्गसमाश्रितम् ॥ इति ।

दुर्गस्यावश्यविधेयत्वं तत्प्रकारविशेषं च–

**बृहस्पतिराह,**

आत्मदारार्थलोकानां सञ्चितानां तु गुप्तये ।
नृपतिः कारयेद्दुर्गं प्राकारद्वारसंयुतम् ॥ इति ।

**मनुरपि,**

एकः शतं योधयति प्राकारस्थो धनुर्द्धरः ।
शतं दशसहस्राणि तस्माद्दुर्गं विधीयते ॥ इति ।

तेषां षण्णामपि दुर्गाणां मध्ये गिरिदुर्गस्य प्राशस्त्यमुक्तम्—

मत्स्यपुराणे,

सर्वेषामेव दुर्गाणां गिरिदुर्गं प्रशस्यते । इति ।

मनावपि,

सर्वेषां तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् ।
एषां हि बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥ इति ।

बाहुगुण्येन बहुतरगुणवत्त्वेन । ते च गुणा दुरारोहत्वादयः प्रत्यक्षसिद्धा एव । तेषु च यथासम्भवं परिखादि कार्यमित्युक्तम्—

मत्स्यपुराणे,

दुर्गं च परिखोपेतं प्राकाराट्टालसंयुतम् ।
शतघ्नीयन्त्रमुख्यैश्च शतशश्च समावृतम् ॥ इति ।

इति दुर्गम् ।

## अथ पुरनिर्माणम् ।

तत्र मत्स्यपुराणे,

गोपुरं सकपाटं तु तत्र स्यात्सुमनोहरम् ।

तत्र, दुर्गे । गोपुरं, पुरद्वारम् । तत्प्रमाणं तु—

तत्रैव,

सपताकगजारूढो येन राजा विशेत्पुरम् । इति ।

विशेषान्तरमप्युक्तम्—

तत्रैव,

चतस्रश्च तथा तत्र कार्यास्त्वायतवीथयः ।
एकस्मिंस्तत्र वीथ्यग्रे देववेश्म भवेद्दृढम् ॥
वीथ्यग्रे च द्वितीये च राजवेश्म विधीयते ।

धर्माधिकरणं कार्यं वीथ्यग्रे च तृतीयके ॥
चतुर्थे चैव वीथ्यग्रे गोपुरं तु विधीयते ।
आयतं चतुरस्रं वा वृत्तं वा कारयेत्पुरम् ॥
आयतं दीर्घचतुरस्रम् ।
स्रक्तिहीनं त्रिकोणं च यवमध्यं तथैव च ।
स्रक्तिहीनं कोणरहितम् ।
अर्द्धचन्द्रप्रकारं च वज्राकारं च कारयेत् ॥
अर्द्धचन्द्रं प्रशसन्ति नदीतीरेषु तद्वशात् ।
अन्यत्र तन्न कर्तव्यं प्रयत्नेन विजानता ॥ इति ।
तत्र विशेषमाह—
**मनुः,**
तस्यादायुधसम्पन्नं धनधान्येन वाहनैः ।
ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन्धनैः ॥ इति ।
पुरमित्युपक्रमे—
बृहस्पतिरपि,
भूपानामिन्धनरसैर्वेत्रशष्पान्नवाहनैः ।
यन्त्रायुधैश्च विविधैः स्निग्धैः शूरैर्नरैर्युतम् ॥
स्निग्धैः अनुरक्तैः ।
वेदविद्याविदो विप्रान् क्षत्रियानग्निहोत्रिणः ।
आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥
अनाच्छेद्याः करास्तेभ्यः प्रदद्याद्गृहभूमयः ।
अनाच्छेद्या अग्राह्याः । भूमय इति च्छान्दसो भूमीरित्यर्थे प्रयोगः ।
मुक्ता भाव्याश्च नृपतिर्लेखयित्वा स्वशासने ॥

---

१ तद्वसन् इति मुद्रितमात्स्ये पाठः ।

मुक्ताः, करादिनिर्मुक्ताः। नृपतिः, विभक्तिव्यत्ययेन नृपतिना। स्वशासने, स्वकरादानकरणे। लेखयित्वा, एवं दत्ता गृहाः करनिर्मुक्ता इति लेखयित्वा। भाव्याः परिपालनीयाः।

नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकं सदा।
पौराणां कर्म कुर्युस्ते सन्दिग्धे विनयं तथा॥ इति।

सन्दिग्धे, कार्ये। विनयं, शिक्षाम्। पुरं कुर्यादित्युपक्रम्य–

विष्णुधर्मोत्तरे,

एषामन्यतमे दुर्गे धनधान्यसमायुते।
हस्त्यश्वरथसम्पन्ने मणिभिरुपशोभिते॥
यन्त्राढ्ये वेदबहुले युद्धोपकरणैर्युते।
सुसञ्चिते धनाढ्ये च बहुपेये बहूदके॥
हस्त्यश्वरथगोवैद्यसांवत्सरयुते शुभे।
घृततैलौषधियुते सर्वोपकरणैस्तथा॥
प्राकारपरिखावप्रगोपुराट्टलकैर्युते।
चाटतस्करदुर्वृत्तकुद्धलुब्धादिवर्जिते॥ इति।

वेदबहुले, वैदिकब्राह्मणबहुले। सुसञ्चिते, वक्ष्यमाणसकलपदार्थसञ्चययुक्ते। चाटाः, बहुभाषिणः। परिखादिकरणे विशेषमाह–

बृहस्पतिः,

समा निम्नोन्नता वापि यत्र भूमिर्यथाविधा।
शालाट्टपरिखाद्याश्च कर्त्तव्याश्च तथाविधाः॥

तथाविधाः, भूमेर्निम्नोन्नततानुसारेण निम्ना उन्नताश्च कार्या इत्यर्थः।

समन्तात्तत्र वेश्मानि कुर्युः प्रकृतयस्ततः।
द्विजवैश्यवणिक्शिल्पिकारुका रक्षकास्तथा॥

स्थलावस्थाननिष्काशभ्रमश्वभ्रचतुष्पथान् ।
समाजविक्रयस्थानगोव्रजांश्चैव कल्पयेत् ॥

एवमन्येषां गृहादौ निर्मिते राज्ञो निवासयोग्यगृहनिर्माणे प्रकारमाह—

स एव,

दुर्गमध्ये गृहं कुर्याज्जलवृक्षान्वितं पृथक् ।
प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम् ॥
माल्यधूपासनोपेतां वीररत्नसमन्विताम् ।
प्रतिमालेख्यदेवैस्तु युक्तामग्न्यम्बुना तथा ॥ इति ।

विष्णुधर्मोत्तरेऽप्युक्तम्—

दैवज्ञस्थपतिभ्यां तु सम्मन्त्र्य शुभलक्षणम् ।
तत्र वासेद्गृहं राजा सर्वोपकरणैर्युतम् ॥ इति ।

तत्र, दुर्गमध्ये । वासेत्, रचयेत् । राज्ञो मुख्यगृहस्य चतुर्दिक्षु कोशादिगृहाण्युक्तानि—

मत्स्यपुराणे,

राज्ञा कोशगृहं कार्यं दक्षिणे राजवेश्मनः ।
तस्यापि दक्षिणे भागे गजस्थानं विधीयते ॥
गजानां प्राङ्मुखी शाला कर्त्तव्या वाप्युदङ्मुखी ।
आग्नेये च तथा भागे आयुधागारमिष्यते ॥
महानसं च धर्मज्ञ कर्मशाला तथाऽपरा ।
गृहं पुरोधसः कार्यं वामतो राजवेश्मनः ॥
मन्त्रिवेदविदां चैव चिकित्साकर्तुरेव च ।
तत्रैव च तथा भागे कोष्ठागारं विधीयते ॥
गवां स्थानं तथैवात्र तुरगाणां तथैव च ।
उत्तराभिमुखी श्रेणी तुरगाणां विधीयते ॥

दक्षिणाभिमुखा वाथ परिशिष्टास्तु गर्हिताः ।
तुरगास्ते तथा धार्याः प्रदीपैः सार्वरात्रिकैः ॥ इति ।

मन्दुरास्थाश्वानां दृष्टिदोषनिरासाय कुक्कुटादिस्थापनमुक्तम्-
तत्रैव,

कुक्कुटान् वानरांश्चैव मर्कटांश्च विशेषतः ।

श्याममुखताम्रमुखाभ्यां ह्रस्वलाङ्गूलदीर्घलाङ्गूलाभ्यां
वा वानरमर्कटयोर्भेदः ।

धारयेदश्वशालासु सवत्सां धेनुमेव च ॥
अजाश्च धार्या यत्नेन तुरगाणां हितैषिणा ।
गोगजाश्वादिशालासु तत्पुरीषस्य निर्गमः ॥
अस्तङ्गते न कर्त्तव्यो देवदेवे दिवाकरे ।
ततस्तत्र यथास्थानं राजा विज्ञाय सारथिम् ॥
दद्यादावसथस्थानं सर्वेषामनुपूर्वशः ।
योधानां शिल्पिनां चैव सर्व्वेषामविशेषतः ॥
दद्यादावसथान् दुर्गे मन्त्रकालविदां शुभान् ।
गोवैद्यानश्ववैद्यांश्च गजवैद्यांस्तथैव च ॥
आहरेत भृशं राजा दुर्गे हि प्रबला रुजः ।
कुशीलवानां विप्राणां दुर्गे स्थानं विधीयते ॥
न बहूनामतो दुर्गे विना कार्यं तथा भवेत् ।
दुर्गे च यन्त्राः कर्त्तव्या नानाप्रहरणान्विताः ॥
सहस्रघातिनो राज्ञा तैस्तु रक्षा विधीयते ।
दुर्गे द्वाराणि गुप्तानि कार्याण्यपि च भूभुजा ॥
सञ्चयश्चात्र सर्वेषामायुधानां प्रशस्यते ।
धनुषां क्षेपणीयानां तोमराणां च पार्थिव ॥

क्षेपणीयानां, क्षेप्तुं योग्यानां पाषाणानाम्, लोहसीसगु-

लिकानां च ।

शराणामथ खड्गानां कवचानां तथैव च ।
लगुडानां गुडानां च हुडानां परिघैः सह ॥
अश्मनां च प्रभूतानां मुद्गराणां तथैव च ।
त्रिशूलानां पट्टिशानां कणपानां च पार्थिव ॥
प्रासानां च सशूलानां शक्तीनां च नरोत्तम ।
परस्वधानां चक्राणां वर्मणां चर्मभिः सह ॥
कुद्दालरज्जुवेत्राणां पीठकानां तथैव च ।
हिंसकानां च दात्राणामङ्गाराणां च सञ्चयः ॥
सर्वेषां शिल्पिभाण्डानां सञ्चयश्चात्र शिष्यते ।
वादित्राणां च सर्वेषामौषधीनां तथैव च ॥
यवसानां प्रभूतानामिन्धनस्य च सञ्चयः ।
गुडस्य सर्वतैलानां गोरसानां तथैव च ॥
वसानामथ मज्जानां स्नायूनामस्थिभिः सह ।
गोचर्मपटहानां च धान्यानां सर्वतस्तथा ॥
सर्वतः, सर्वेषाम् ।
तथैवाभ्रपटानां च यवगोधूमयोरपि ।
शणसर्जरसं भूर्जं जतु लाक्षा च टङ्कणम् ॥
अभ्रम्, अभ्रकसंज्ञको धातुविशेषः ।
राजा सञ्चिनुयाद्दुर्गे यच्चान्यदपि किञ्चन ॥
कुम्भेष्वाशीविषाः कार्या व्यालसिंहादयस्तथा ।
मृगाश्च पक्षिणश्चैव रक्ष्यास्ते च परस्परम् ॥
स्थानानि च विरुद्धानां सुगुप्तानि पृथक् पृथक् ।
कर्त्तव्यानि महाभाग यत्नेन पृथिवीक्षिता ॥

१ नृपाणां चैव इति मुद्रितमात्स्ये पाठः ।

तथा,

मनुरुवाच ।

राजा रक्षारहस्यानि यानि दुर्गे निधापयेत् ।
कारयेद्वा महीभर्त्ता ब्रूहि तत्त्वानि तानि च ॥

मत्स्य उवाचेत्युपक्रम्य सन्नाह्यान्तरमप्युक्तम्—

शिरीषोदुम्बरशमीवीजपूरं घृतप्लुतम् ।
क्षुद्योगः कथितो राजन्मासार्द्धस्य पुरातनैः ॥

शिरीषादिकं घृतप्लुतं भुक्तं सत् मार्द्धस्य पञ्चदशादिनात्मकपक्षरूपस्य क्षुद्योगः क्षुत्प्रशमनोपायः ।

नरं शस्त्रहतं प्राप्य तस्यास्थि अरणिर्भवेत् ।
कुल्माषवेणुना तत्र जनयेत्तु विभावसुम् ॥
गृहं त्रिरपसव्यं तु क्रियते यत्र पार्थिव ।
नान्योऽग्निर्ज्वलते तत्र नात्र कार्या विचारणा ॥
कार्पासास्थि भुजङ्गस्य तथा निर्मोचनं भवेत् ।
सर्पनिर्वासने धूपः प्रशस्तः सततं गृहे ॥
सामुद्रसैन्धवयवा विद्युद्दग्धा च मृत्तिका ।
तयानुलिप्तं यद्वेश्म नाग्निना दह्यते नृप ॥
दिवा च दुर्गे रक्ष्योऽग्निर्वाति वाते विशेषतः ।

तथा,

उक्तानि वाप्यनुक्तानि राजा द्रव्याण्यशेषतः ।
सुगुप्तानि पुरे कुर्याज्जनानां हितकाम्यया ॥
जीवकर्षभकाकोलमामलक्याटरूपकम् ।

---

१ अत्र 'कशेरुफलमूलानि इक्षुमूलं तथा विषम्' । दूर्वा क्षीरघृतैर्मण्डः सिद्धोऽयं मासिकः परः' ॥ इति मुद्रितमात्स्येऽधिकं वर्त्तते ।

शालपर्णी पृश्निपर्णी मुद्गपर्णी तथैव च ॥
माषपर्णी च मेदे द्वे सारिवे द्वे बलात्रयम् ।
वीराश्वसन्ती वृष्णीया बृहती कण्टकारिका ॥
शृङ्गी शृङ्गाटकी द्रोणी वर्षाभूर्भद्ररेणुका ।
मधुपर्णी विदार्यौ द्वे महाक्षुद्रा महातपाः ॥
धन्वना सहदेवाह्वा कटुकैरण्डकं विषः ।
पर्णासनाह्वा मृद्वीका फल्गुखर्जूरयष्टिकाः ॥
शुक्रातिशुक्रकाश्मर्यश्छत्रातिच्छत्रवीरणाः ।
इक्षुरिक्षुविकाराश्च फाणिताद्याश्च सत्तम ॥
सिंही च सहदेवी च विश्वेदेवाटरूषकम् ।
मधुकं पुष्पहंसाख्या शतपुष्पा मधूलिका ॥
शतावरीमधूके च पिप्पलं तालमवे च ।
आत्मगुप्ता कट्फलाख्या दार्विका राजशीर्षिका ॥
राजसर्षपधान्याकमृष्यप्रोक्ता तथोत्कटा ।
कालशाकं पद्मबीजं गोवल्ली मधुवल्लिका ॥
शीतपाकी कुलिङ्गाक्षी काकजिह्वोरुपुष्पिका ।
एर्वारुत्रपुसौ चोभौ गुञ्जातकपुनर्नवे ॥
कशेरुका तु काश्मीरी बिल्वशालूककेसरम् ।
शूकधान्यानि सर्वाणि शिम्बीधान्यानि चैव हि ॥
क्षीरं क्षौद्रं तथा चुक्रं तैलं मज्जा वसा घृतम् ।
निकोचारिष्टकाक्षोडा वाताममोरुशाणकम् ॥
एवमादीनि चान्यानि विज्ञेयो मधुरो गणः ।

---

१ वृष्या चेति मात्स्ये पाठः ।
२ पर्णी शताह्वा इति मात्स्ये पाठः ।
३ 'नीपश्चारिष्टकाक्षोडवातामसोमवाणकम्' इति मात्स्ये पाठः ।

राजा सञ्चिनुयात्सर्वं पुरे निरवशेषतः ॥
दाडिमाम्रातकाम्रं च तिन्तिडीकाम्लवेतम्।
भव्यर्कन्धुलकुचकरमर्दकरुषकम् ॥
बीजपूरककण्डूरे मालती राजवन्धुकम्।
कोलकद्वयपर्णानि द्वयोराम्लकयोरपि ॥
आम्रेयतं नागरकं प्राचीनारुकमेव च।
कपिलामलकं चुक्रा फलं दन्तशठस्य च ॥
जाम्बवं नवनीतं च सौवीरकतुषोदके।
सुराऽऽसवं च मद्यानि मण्डतक्रदधीनि च ॥
शुक्तानि चैव सर्वाणि ज्ञेयान्यम्लगणानि च।
एवमादीनि चान्यानि राजा सञ्चिनुयात्पुरे ॥
पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम्।
कुबेरकं समरिचं शिग्रुभल्लातसर्षपाः ॥
कुष्ठाजमोदा किणिही हिङ्गुमूलकधान्यकम्।
कारवी कुञ्चिका याज्या सुमुखा कालमालिका ॥
फणिज्जकोऽथ लशुनं भूस्तृणं सुरसं तथा।
कायस्था च वयःस्था च हरितालं मनःशिला ॥
अमृता च रुदन्ती च रोहितं कुङ्कुमं तथा।
यत्रासैरण्डकाण्डीरं शल्लकी हञ्जिका तथा ॥
सर्वपित्तानि मूत्राणि प्रायो हरितकानि च।
फलानि चैव च तथा सूक्ष्मैला हिङ्गुपत्रिका ॥

---

१ अत्र मात्स्ये— 'सैन्धवोद्भिदपाठेयपाक्यसामुद्रलोमकम्। कुप्य-सौवर्चलविडं वालकेयं यवाह्वकम् ॥ और्वं क्षारं कालभस्म विज्ञे-यो लावणो गणः। एवमादीनि चान्यानि राजा सञ्चिनुयात्पुरे' ॥ इत्यधिकं वर्तते।

एवमादीनि चान्यानि गणः कटुकसंज्ञितः ।
राजा सञ्चिनुयाद्दुर्गे प्रयत्नेन नृपोत्तम ॥
मुस्तचन्दनह्रीवेरकृतमालकदारवः ।
हरिद्रानलदोशीरनक्तमालकदम्बकम् ॥
दूर्वा पटोलकटुका दीर्घत्वक् चूतकं वचा ।
किराततिक्तकं निम्बं विषा चातिविषा तथा ॥
तालीसपत्रं तगरं सप्तपर्णविकङ्कताः ।
काकोदुम्बरिकोदीच्यसुपवीकृमिहिंसकाः ॥
षड्ग्रन्थी रोहिणी मांसी पर्पटश्चाथ दन्तिका ।
रसाञ्जनं भृङ्गराजं पैर्णासं परिपेलवम् ॥
दुःस्पर्शा गुरुणी कामा श्यामाकं कंङ्गुनाकुली ।
तुषपर्णी व्याघ्रनखमम्बष्ठा चतुरङ्गुला ॥
रम्भा चैत्राङ्कुरास्फोता तालास्फोता हरेणुका ।
वेत्राग्रवेतसस्तुम्बी विषाणी लोहपँञ्जरा ॥
मालती करतिक्ताख्या धूपाङ्गी जिङ्गिका तथा ।
पर्पटं च गुडूची च स गणस्तिक्तसंज्ञकः ॥
एवमादीनि चान्यानि राजा सञ्चिनुयात्पुरे ।
अभयामलकौ चोभौ तथैव च विभीतकम् ॥
प्रियङ्गुधातकीपुष्पं मोचालोध्रार्जुनासनाः ।
अनन्ता स्त्री तुर्रोनङ्गा स्योनाकं कट्फलं तथा ॥
भूर्जपत्रशिलोद्भेदपाटला पद्धलाष्टकम् ।

---

१ पतङ्गी इति मात्स्ये पाठः ।
२ गन्धनाकुली इति मात्स्ये पाठः ।
३ लोध्रपुष्पिणी इति मा० पा० ।
४ तुवरिका इति मा० पा० ।

समङ्गात्रिवृतामूलकार्पासगैरिकाञ्जनम् ॥
विद्रुमं समधूच्छिष्टं कुम्भिका कुमुदोत्पलम् ।
न्यग्रोधोदुम्बराश्वत्थकिंशुकाः शिंशपा शमी ॥
प्रियालपीलुकासारशिरीषाः पद्मकं तथा ।
बिल्वोऽग्निमन्थः प्लक्षश्च श्यामाकं कवको घनम् ॥
राजादनं करीरं च चम्पकप्रियकौ तथा ।
कङ्कोलाशोकवदराः कदम्बखदिरद्वयम् ॥
एषां पत्राणि साराणि मूलानि कुसुमानि च ।
एवमादीनि चान्यानि कषायाख्यो गणो मतः ॥
प्रयत्नेन नृपश्रेष्ठ राजा सञ्चिनुयात्पुरे ।
कीटाम्बुमारणे योग्या व्यङ्गतायां तथैव च ॥
वातधूमाश्च मार्गाणां दूषणानि तथैव च ।
धार्याणि पार्थिवैर्दुर्गे तानि वक्ष्यामि पार्थिव ॥
विषाणां धारणं कार्यं प्रयत्नेन महीभुजा ।
विचित्राश्चागदा धार्या विषस्य शमनास्तथा ॥
रक्षोभूतपिशाचघ्नाः पापघ्नाः पुष्टिवर्द्धनाः ।
कलाविदश्च पुरुषाः पुरे धार्याः प्रयत्नतः ॥
भीतान् प्रमत्तान् कुपितांस्तथैव च विमानितान् ।
कुभृत्यान् पापशीलांश्च न राजा वासयेत्पुरे ॥
यन्त्रायुधाट्टालचयोपपन्नं समग्रधान्यौषधिसम्प्रयुक्तम् ।
वणिग्जनैश्चावृतमावसेत दुर्गं सुगुप्तं नृपतिः सदैव ॥

इत्यादिप्रबन्धेनावश्यापेक्षितवस्तुसञ्चयं विधाय दुर्गमध्ये पुरं सुरक्षितं कृत्वा तत्र वसेत् । तत्र पुरनिर्माणं कथं कार्यमित्यपेक्षायाम्—

देवीपुराणे,

इन्द्र उवाच।

कीदृशं तु पुरं कार्यं नगरं कीदृशं शुभम्।
कस्मिन् स्थाने सुरश्रेष्ठ एतदिच्छामि वेदितुम्॥

ब्रह्मोवाच।

सर्वौषधिभवे देशे सर्वलोकसुखावहे।
पूर्वोत्तरप्लवे स्थाने कार्यं शक्र पुरादिकम्॥

सर्वौषधिभवे, सर्वा या ओषध्यः फलपाकान्तास्तासां भव उत्पत्तिर्यस्मिन्। पूर्वोत्तरप्लवे, प्राक्प्रवणे, उदक्प्रवणे, ईशानप्रवणे च। पुरनगरयोर्भेदस्तु—

अनेकजातिसंयुक्तं तन्तुवाययुतं पुरम्।
शर्कराभश्मरहिते कटुकण्टकवर्जिते॥
सहले पांसुरहिते कुशादिभिरनावृते।
चलगन्धसमायुक्ता मही खातोप लक्षिता॥
चण्डालपतितत्यक्तशरावशकलैर्विना।
देवावासपरित्यक्ता निरावाधा मनोरमा॥
उदगादिप्लवागाधा वैषम्यादिविवर्जिता।
शुद्धा सा दहनाद्यैश्च अथ चण्डेश्वरान्विता॥
सर्वेश्वरयुता वापि अन्यथा भयदा मही।
पूर्णवर्णविपर्यस्ता स्थानकालविसूत्रगा॥
स्वामिश्रेष्ठिपुरादीनां भयदा ज्ञायते मही।
कश्मलाद्यैः परिक्लिष्टा पूतनादिसमाकुला॥
पताकावर्जनीया तु सर्वदोषकरी मही।
वत्सरं या परित्यक्ता कृष्टा धान्यरुहा च या॥
सा मही शुभदा ज्ञेया या च तृप्तिकरी भवेत्।

---

१ इतः पूर्वं किञ्चित् त्रुटितं भाति।

रक्ष्या देव्यस्सदैवात्र पूजनीयास्स्वभागगाः ॥
स्थानानि कल्पयेत्तासामधिवासं तु कारयेत् ।
चण्डेश्वरो, महादेवस्य गणविशेषः । अधिवासं, स्थापनम् ।
इति पुरभूशुद्धिः ।
तथा तत्रैव,
नगरं दैवतावीतं समस्तप्रकृतीयुतम् ।
सप्तपञ्चपुरैः कार्यं मण्डपैरुपशोभितम् ॥
कोष्ठकाः सश्रियः कार्या मण्डपादग्रतः शुभाः ।
एवं देवालयोपेतं सर्ववर्णसमान्वितम् ॥
नवदुर्गासमायुक्तं नगरं परिकीर्त्तितम् ।
पुरं हट्टसमायुक्तं देवतादिसमाकुलम् ॥
हट्टं हेममणीवस्त्रपत्रोर्णाचर्मविक्रयम् ।
सुरापेयादिकं यस्मिंस्तत्पुरं पत्तनं शृणु ॥
असंहतं समं कार्यं वणिक्‌हट्टं सुशोभनम् ।
सुरनामं स्वनामं वा पत्तनं सर्वकामदम् ॥
अवेधं कारयेत्पङ्कगर्त्तादिभिः सुरोत्तम ।
उभयोरन्तरे कार्यं देवतायतनादिकम् ॥
देवलक्ष्मविहीनं तु समदृष्टिगतं शुभम् ।
चिह्नदृष्टिगते देवे न दृष्टेः सुनिरूपणम् ॥
समे मानसमायुक्ते कार्या दृष्टिः शुभा समा ।
द्रुमाधिका न कर्तव्या व्यालसिंहादिनावृता ॥
एवं कुर्यात्पुरे हट्टं प्राकारान्तर्गतं शुभम् ।
चतुर्हट्टं समं कार्यं समसूत्रं सुशोभनम् ॥
पथस्समं पुरं कार्यं सममार्गविनिर्गमम् ।
चतुष्पथानि शुद्धानि नित्यं पूजायुतानि च ॥

देवान्तराणि कार्याणि स्वाधिकार्याद्वृतानि च ।
देवान्तरेषु मन्त्रज्ञाः स्वे स्वे देशाः शुभावहाः ॥
भिन्ना बहुप्रदा लोके यथाशास्त्रपरिग्रहः ।
न शुभा मन्त्रहीनास्तु द्विजाद्या नैष्ठिकास्तथा ॥
चर्चिकायास्तथा शक्र मन्त्रहीना भयावहाः ।
अग्रतः पृष्ठतो देवा उभयोः पार्श्वयोर्द्विजाः ॥
हस्तानां तु शतं त्याज्यं नृप राष्ट्रसुखार्थिभिः ।
दृष्टिभङ्गो न कर्त्तव्यो रक्षेद्देवीषु यत्नतः ॥
दण्डाष्टकसुविस्तीर्णे कृते राजा विनश्यति ।
तस्माद्दृष्टिः सदा देया तोरणान्तर्गता शुभा ॥
अष्टहस्तं सुशोभाढ्यं शैलवृक्षमयं च वा ।
तोरणं शस्यते देव्या वापी कूपजलं वनम् ॥
पूर्वोत्तरे तथैशान्यामारामः शुभदः कृतः ।
देवीनां मातृकाणां च स भवेत्सर्वकामदः ॥
यथाशुभग्रहाद्दैवाद्यच्च कालकृतं भवेत् ।
तत्सर्वं देवतागारे कृतं भवति शोभनम् ॥
बलिजाप्यक्रिया नित्यं मातृकाणां शुभा भवेत् ।
पुरपत्तनग्रामाणां ब्रह्मपुर्यः सकामदाः ॥
ब्रह्मविद्या कलोपेता यत्र वेदविदोऽवसन् ।
सा पुरी कमला नाम सर्वलोकसुखावहा ॥
विद्या ह्येका तथा द्वित्राश्चतस्रो यत्र संस्थिताः ।
रुद्रो देवी च विजया गायत्री च क्रमात्मना ॥
गृहपङ्क्तिगताः कार्याः शुभवर्त्म ऋजुस्थिताः ।
पूर्वोत्तरसुमार्गस्थाः सजला देवतान्विताः ॥
ब्रह्मत्रिदशपूजार्थं मठादिमुपकल्पयेत् ।

पाठस्थानानि कुर्वीत शिवायतनवेधसोः ॥
पुरे वा नगरे वत्स राजधान्यां च पत्तने ।
दुर्गहट्टे शुभे दृष्टिर्महालक्ष्म्याः सुमङ्गला ॥
शिवलिङ्गगणेशानां धनदस्य विशेषतः ।
श्रियश्च सौम्यरूपायाः स्वामीशस्य शुभस्य च ॥
रक्षोदेवीषु चोग्रासु दृष्टिर्देया न चान्यथा ।
वाह्ये वनोपकण्ठे च नदीनदतटेऽथ वा ॥
प्रासादे चोत्तमा कार्या तीर्थे हट्टानुगाथ वा ।
वाराही भैरवी चोग्रा नारसिंही त्रिविक्रमी ॥
पुरपत्तनगेहेषु दृष्टिर्वर्ज्या प्रयत्नतः ।
उग्रा दृष्टिर्हरेद्राष्ट्रं दारुणा नगरादिकम् ॥
नरसिंहवराहाणां दृष्टिर्हन्याच्छ्रियं जनम् ।
तस्माद्दृष्टिः शुभा कार्या समा सर्वगता ततः ॥
विवाहेऽपि शुभा दृष्टिः समा भवति नान्यथा ।
अतो यत्नेन देवानां दृष्टिः सौम्या प्रशस्यते ॥
ग्रहाणां सौम्यरूपाणां लग्ने दृष्टिः शुभावहा ।
पुरपत्तनदुर्गेषु तथा सौम्या शुभावहा ॥
एवं हट्टे पुरे दुर्गे देया दृष्टिः शुभा नृप ।
शुभार्थे सौम्यरूपाणामुग्राणां परिवर्जयेत् ॥
आवाहने जले वाथ उग्रा दृष्टिः शुभावहा । इति ।
तथा,

चतुर्दण्डः प्रकर्त्तव्यो भूमावादौ परिग्रहः ।
गां सवत्सां समादाय कुम्भं धान्यमयं तथा ॥
सवस्त्रं हेमगर्भं तु सहकारदलान्वितम् ।
पृथ्वीं सङ्कल्पयेत्तस्मिन् मेरुकर्णिकशोभिताम् ॥

वनशैलसमायुक्तां सागरैः परिवेष्टिताम् ।
एवं सम्पूजयित्वा तु देवदेवं त्रिलोचनम् ॥
कुमारादिशिवादींश्च विचार्य्यादिमहामहीम् ।
सूर्यादिलोकपालादिनागयक्षादिदेवताः ॥
पूर्वं सम्पूजयित्वा तु पश्चाद्द्यादिशां वलिम् ।
स्वप्नमाणवकं जप्त्वा शेते तत्र यथासुखम् ॥
स्वप्नमाणवकं, "यज्जाग्रत" इत्यादि ।
आचार्यः सूत्रधारश्च शुभं स्वप्नं निशाक्षये ।
निमित्तं शकुनं दृष्ट्वा सूत्रयेद्दक्षितां दिशम् ॥
चित्रास्वात्यन्तरे पूर्वा पुष्यपित्र्यसमागमे ।
उत्तरा ध्रुवमध्यस्था शेषाः सिद्धा यथागमम् ॥

चित्रास्वात्योरुदितयोर्मध्ये या, तया पुष्यमघानक्षत्राभ्यां चार्जवेन संयुता या, सा पूर्वा दिगित्यर्थः । ध्रुवो मध्यस्थो मध्ये वर्त्तमानो यस्यां तथाविधा सा उत्तरा दिक् ।

शङ्कुना तदभावे तु पूर्वाशां साधयेत् द्विजः ।
एवं दिशासु सिद्धासु सूत्रपातं समाचरेत् ॥
आचार्यं पूजयित्वा तु सूत्रधारं द्विजोत्तमान् ।
देवतायतनं पूर्वमाचार्यब्राह्मणौकसम् ॥
राजधाम तु शेषांस्तु गृहान् वर्णक्रमाद्गुरुः ।
पुरं वृत्तायतं कार्यं त्र्यस्रं वा चतुरस्त्रकम् ॥
यथास्थानविभागेन हट्टशोभासमन्वितम् ।
राजधामाग्रतः कार्यं देवधाम अथापि वा ॥
सुसूत्रं देवतायुक्तं शिवमातृगणावृतम् ।
मङ्गला धनदा कार्या सर्वान्ते सर्वसिद्धिदा ॥
न सूर्यो वह्नियामे वा नैर्ऋते वा हरिः क्वचित् ।

न विष्णुः पश्चिमे सौम्ये वायव्यां कारयेच्छिवाम् ॥
कृते विनश्यते कर्त्ता तत्स्थानं चोद्वसं भवेत् ।
देवो न पूज्यते तत्र तस्मिन् स्थाने स्वके शुभे ॥
त्रिसूत्रेषु प्रवक्ष्यामि येन शान्तिः शुभं भवेत् ।
नगराणां पुराणां च देवानां गोपुरादिषु ॥
त्रिमार्गेषु शिवः शस्तः सम्मुखः······· ।
सौम्याग्रे सर्वतो दुर्गा पुरं नन्दति रक्षितम् ॥
तस्माद्दुर्गा प्रकर्त्तव्या नगरेषु पुरादिषु ।
महालक्ष्म्यादिकाः शक्र क्षेमकारी सचण्डिका ॥
मङ्गला मङ्गलारूपा महिषघ्नी शिवा नरा ।
यथास्थानविभागस्था सर्वलोकसुखावहा ॥
महालक्ष्मीः पुरः शस्ता आग्नेये महिषापहा ।
याम्यां शिवा शुभा प्रोक्ता चर्चिका पश्चिमे पुरात् ॥
उत्तरे शुभदा क्षेमा पञ्चैताः शान्तिदाः पुरे ।
नगरे नव कर्त्तव्या दुर्गे पञ्चैव चण्डिकाः ॥ इति ।

इति दुर्गे पुरनिर्माणम् ।

अथ निर्मितेषु नगरराजगृहादिषु वास्तुशान्तेरावश्यकत्वेन वास्तुकर्मविधिर्निरूप्यते । तत्र—

मत्स्यपुराणे,

सूत उवाच ।

अथातः सम्प्रवक्ष्यामि गृहकालविनिर्णयम् ।
यथाकालं शुभं ज्ञात्वा तदा भवनमारभेत् ॥
चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः ।
वैशाखे धेनुरत्नानि ज्येष्ठे मृत्युं तथैव च ॥

आषाढे भृत्यरत्नानि पशुवर्गमवाप्नुयात् ।
श्रावणे मित्रलाभं तु हानिं भाद्रपदे तथा ॥
पत्नीनाशमाश्वयुजे कार्त्तिके धनधान्यकम् ।
मार्गशीर्षे तथा भक्तं पौषे तस्करतो भयम् ॥
लाभं च बहुशो विन्द्यादग्निं माघे विनिर्दिशेत् ।
फाल्गुने काञ्चनं पुत्रानिति कालफलं स्मृतम् ॥
अश्विनी रोहिणी मूलमुत्तरात्रयमैन्दवम् ।
ऐन्दवं मृगशिरः ।
स्वाती हस्तोऽनुराधा च गृहारम्भे प्रशस्यते ॥
आदित्यभौमवर्जं च सर्वे वाराः शुभावहाः ।
वज्रव्याघातशूलेषु व्यतीपातातिगण्डयोः ॥
विष्कुम्भगण्डपरिघवज्रयोगेषु कारयेत् ॥
श्वेते मैत्रेऽथ माहेन्द्रे गान्धर्वाभिजिति रौहिणे ।
तथा वैराजसावित्रे मुहूर्त्ते गृहमारभेत् ॥
चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम् ।
शुभनिरीक्षितं, शुभग्रहनिरीक्षितम् ।
स्तम्भोच्छ्रायादि कर्त्तव्यमन्यत्तु परिवर्जयेत् ।
प्रासादेष्वेवमेवं स्यात्कूपवापीषु चैव हि ॥
पूर्वं भूमिं परीक्षेत पश्चाद्वास्तुं प्रकल्पयेत् ।
श्वेता रक्ता तथा पीता कृष्णा चैवानुपूर्वशः ॥
विप्रादेः शस्यते भूमिरतः कार्यं परीक्षणम् ।
विप्राणां मधुरास्वादा कषाया क्षात्रियस्य तु ॥
कषायकटुका तद्वद्वैश्यशूद्रेषु शस्यते ।
रत्निमात्रे तु वै गर्त्ते स्वनुलिप्ते च सर्वशः ॥
घृतमामशरावस्थं कृत्वा वर्तिचतुष्टयम् ।

ज्वालयेद्भूपरीक्षार्थं पूर्णं तत्सर्वदिङ्मुखम् ॥
दीप्तौ पूर्वादि गृह्णीयाद्वर्णानामनुपूर्वशः ।

दीप्तौ पूर्वादीति । पूर्वां दिशमारभ्य प्रदक्षिणं वर्त्तिसम्यक्प्रदीपने ब्राह्मणादीनां वर्णानां यथासङ्ख्यं सुखावहमित्यर्थः ।

वास्तुः सामूहिको नाम दीप्यते सर्वतस्तु यः ।
शुभदः सर्ववर्णानां प्रासादेषु गृहेषु ॥
रत्निमात्रमधो गर्ते परीक्ष्यं खातपूरणे ।
अधिके श्रियमाप्नोति न्यूने हानिं समे समम् ॥
फालकृष्टेऽथवा देशे सर्वबीजानि वापयेत् ॥
त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि ।
ज्येष्ठोत्तमा कनिष्ठा भूर्वर्जनीयतरा सदा ॥
पञ्चगव्यौषधिजलैः परीक्षित्वा च सेचयेत् ।
एकाशीतिपदं कृत्वा रेखाभिः कनकेन तु ॥
पश्चोल्लेख्येन वा लिप्त्वा सूत्रेणालोड्य सर्वतः ।
दश पूर्वायता रेखा दश चैवोत्तरायताः ॥
सर्ववास्तुविभागेषु विज्ञेया नवका नव ।
एकाशीतिपदं कृत्वा वास्तुवित्सर्ववास्तुषु ॥
पदस्थान् पूजयेद्देवांस्त्रिंशत्पञ्चदशैव तु ।
द्वात्रिंशद्बाह्यतः पूज्याः पूज्याश्चान्तस्त्रयोदश ॥
नामतस्तान् प्रवक्ष्यामि स्थानानि च निबोधत ।
ईशानकोणादिषु तान् पूजयेच्च विधानतः ॥
शिखी चैवाथ पर्जन्यो जयन्तः कुलिशायुधः ।
सूर्यः सत्यो भृगुश्चैव आकाशो वायुरेव च ॥

---

१ 'पश्चात्पिष्टेन चालिप्य' इति मा० पा०

पूषाथ वितथश्चैव गृहक्षतयमावुभौ ।
गन्धर्वो भृङ्गराजश्च मृगः पितृगणस्तथा ॥
दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः ।
असुरः शोषपापौ च रोगोऽहिर्मुख्य एव च ॥
भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा ।
बाह्यद्वात्रिंशदेते तु तदन्तश्चतुरः शृणु ॥
ईशानादिचतुष्कोणे संस्थितान् पूजयेद्बुधः ।
आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च ॥
मध्ये नवपदे ब्रह्मा तस्याष्टौ च समीपगाः ।
सर्वानैकान्तरान् विद्यात्पूर्वाद्यान् नामतः शृणु ॥
अर्यमा सविता चैव विवस्वान् विबुधाधिपः ।
मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात् ॥
अष्टमस्त्वापवत्सस्तु परितो ब्रह्मणः स्मृताः ।
आपश्चैवापवत्सश्च पर्जन्योऽग्निर्दितिस्तथा ॥
पदिकानां च वर्गोऽयमेवं कोणेष्वशेषतः ।
तन्मध्ये तु वहिर्विंशद्द्विपदास्ते तु सर्वतः ॥
अर्यमा च विवस्वांश्च मित्रः पृथ्वीधरस्तथा ।
ब्रह्मणः परितो दिक्षु त्रिपदास्ते तु सर्वतः ॥
अंशानिदानीं वक्ष्यामि रज्जूनपि पृथक् पृथक् ।
वायुं यावत्तथा रोगान् पितृभ्यः शिखिनं पुनः ॥
मुख्याद्भृगुं तथा शेषाद्वितथं यावदेव तु ।
सुग्रीवाददितिं यावत् भृङ्गात्पर्जन्यमेव च ॥
एते वंशाः समाख्याताः क्वचिद्रज्जव एव तु ।
एतेषां यस्तु सम्पातः पदं मध्यं समं तथा ॥
मर्म चैतत्समाख्यातं त्रिशूलं कोणगं च यत् ।

स्तम्भन्यासेषु वर्ज्यानि तुलां दैवेषु सर्वदा ॥
कीलकुड्योपघातादि वर्जयेद्यत्नतो नरः।
सर्वस्तु वास्तुर्निर्दिष्टः पितृवंशान्तरायतः ॥

पितृवंशान्तरायत इति। पितृगणादारभ्य वह्निं यावद्यो वंशः प्रसारितस्तदान्तराऽऽयतो वास्तुर्वास्तुपुरुषः।

मूर्धन्यग्निः समाविष्टो मुखे चापः समाश्रितः।
पृथ्वीधरोऽर्यमा चैव स्तनयोस्तावधिष्ठितौ ॥
वक्षःस्थले त्वापवत्सः पूजनीयः सदा बुधैः।
नेत्रयोर्दितिपर्जन्यौ श्रोत्रे दितिजयान्तकौ ॥
सर्पेन्द्रावंससंस्थौ तु पूजनीयौ प्रयत्नतः।
सत्यरोगादयस्तद्वद्बाह्वोः पञ्च च पञ्च च ॥
रुद्रश्च राजयक्ष्मा च वामहस्ते समाश्रितौ।
सावित्रः सविता तद्वद्धस्तं दक्षिणमास्थितौ ॥
विवस्वानथ मित्रश्च जठरे संव्यवस्थितौ।
पूषा च पापयक्ष्मा च हस्तयोर्मणिबन्धने।
तथैवासुरशोषौ तु वामपार्श्वे समाश्रितौ ॥
पार्श्वे तु दक्षिणे तद्वद्वितथः सगृहक्षतः।
ऊर्व्वोर्यमाम्बुपौ ज्ञेयौ जान्वोर्गन्धर्वपुष्पकौ ॥
यमाम्बुपौ यमवरुणौ। पुष्पकः पुष्पदन्तः।
जङ्घयोर्भृगुसुग्रीवौ स्फिक्स्थौ दौवारिको मृगः ॥
जयः शक्रस्तथा मेढ्रे पादयोः पितरस्तथा।
मध्ये नवपदे ब्रह्मा हृदये स तु पूज्यते ॥
चतुःषष्टिपदो वास्तुः प्रासादे ब्रह्मणा स्मृतः।
ब्रह्मा चतुष्पदस्तद्वत्कोणेष्वेकपदास्ततः ॥

---

१ स्तम्भन्यासेषु वर्ज्यानि तुलाविधिषु सर्वदा। इति मा० पा०।

वहिःकोणेषु चाष्टौ तु सार्द्धाश्चोभयतः स्थिताः ।

तद्वत्कोणेष्वेकपदा इति । तद्वत् एकादशीतिपदवास्तुवत् । एकाशीतिपदे वास्तौ याः कोणेष्वेकपदा देवता इहापि तास्तथैव बोद्धव्याः । वहिःकोणेषु, वेद्यादिमान्तकोणेषु चतुर्षु ये उभयपार्श्वे कोष्ठकाः तेष्वष्टौ देवताः सार्द्धा भवन्ति, देवताचतुष्टयसहिता भवन्तीत्यर्थः ।

विंशतिर्द्विपदास्तेषां चतुःषष्टिपदास्तथा ॥
गृहारम्भे तु कण्डूतिः स्वस्याङ्गे यत्र जायते ।
शल्यं त्वपनयेत्तत्र प्रासादे भवनेऽपि वा ॥
सशल्यं भयदं यस्मादशल्यं भयनाशनम् ।
हीनाधिकाङ्गतां वास्तोः सर्वथा परिवर्जयेत् ॥
नगरग्रामदेशेषु सर्वत्रैवं प्रकल्पयेत् ।
चतुःशालं त्रिशालं च द्विशालं चैकशालकम् ।

सूतउ वाच ॥

चतुःशालं प्रवक्ष्यामि स्वरूपान्नामतस्तथा ।
चतुःशालं चतुर्द्वारैरलिन्दैः सर्वतोमुखम् ॥
नाम्ना तत्सर्वतोभद्रं शुभं देवनृपालये ।
पश्चिमद्वारहीनं तु नन्द्यावर्त्तं प्रचक्षते ॥
दक्षिणद्वारहीनं तु वर्धमानमुदाहृतम् ।
पूर्वद्वारविहीनं तु स्वस्तिकं नाम विश्रुतम् ॥
रुचकं चोत्तरद्वाराविहीनं तु प्रचक्षते ।
सौम्यशालाविहीनं यत्रिशालं धन्यकं च तत् ॥
क्षेमवृद्धिकरं नृणां वहुपुत्रफलप्रदम् ।
शालया पूर्वया हीनं सुक्षेत्रमिति विश्रुतम् ॥

धन्यं यशस्यमायुष्यं शोकमोहविनाशनम् ।
चुल्ली तु याम्यया हीनं त्रिशालं शालया तु यत्[1] ॥
कुलक्षयकरं नृणां सर्वव्याधिभयावहम् ।
हीनं पश्चिमया यत्तु पक्षघ्नं नाम तद्विदुः ॥
पितृबन्धुसुतान् हन्ति तथा सर्पभयावहम् ॥
याम्यापराभ्यां शालाभ्यां धनधान्यफलप्रदम् ।
क्षेमवृद्धिकरं नृणां तथा पुत्रफलप्रदम् ॥
यमसूर्यं च विज्ञेयं पश्चिमोत्तरशालकम् ।
राजाग्निभयदं नृणां कुलक्षयकरं च तत् ॥
पूर्वपश्चिमशाले द्वे दण्डाख्यं तत्र तद्भवेत् ।
अकालमृत्युभयदं परचक्रभयावहम् ॥
वार्यं[2] याम्यपूर्वाभ्यां शालाभ्यां यद्द्विशालकम् ।
विपशस्त्राग्निभयदं पराभवभयावहम् ॥
चुल्ली पूर्वापराभ्यां च सा भवेन्मृत्युसूचनी ।
विधवत्वाय च स्त्रीणामनेकभयकारिका ॥
कार्यमुत्तरयाम्याभ्यां शालाभ्यां भयदं नृणाम् ।
सिद्धार्थवर्जं वर्ज्यानि द्विशालानि सदा बुधैः ॥
अलिन्दं द्वारचतुरस्रिका । सौम्यशाला उत्तरद्वारशाला ।
सिद्धार्थवर्जं, याम्यापराभ्यां शालाभ्यां युक्तं यद्द्विशालं तद्विहाय।
अथातः सम्प्रवक्ष्यामि भवनं पृथिवीपतेः ।
पञ्चप्रकारं तत्प्रोक्तमुत्तरादिविभेदतः ॥
अष्टोत्तरं हस्तशतं विस्तारश्चोत्तमो मतः ।
चतुर्ष्वन्येषु विस्तारो हीयते चाष्टभिः करैः ॥

---

१ शालया याम्यया हीनं यद्द्विशालं तु शालया। इति मा०पा० ।
२ धनाख्यमिति मा० पा० ।

चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ।
युवराजस्य वक्ष्यामि तथा भवनपञ्चकम् ॥
षड्भिः षड्भिस्तथाशीतिर्हीयते तत्र विस्तरात् ।
त्र्यंशेन चाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ॥
सेनापतेः प्रवक्ष्यामि तथा भवनपञ्चकम् ।
चतुःषष्टिस्तु विस्तारः षड्भिः षड्भिः प्रहीयते ॥
पञ्चस्वेतेषु दैर्घ्यं च षड्भागेनाधिकं भवेत् ।
मन्त्रिणामथ वक्ष्यामि तथा भवनपञ्चकम् ॥
चतुश्चतुर्विहीना स्यात्करषष्टिः प्रविस्तरे ।
अष्टांशेनाधिकं दैर्घ्यं पञ्चस्वपि निगद्यते ॥
सामन्तामात्यलोकानां वक्ष्ये भवनपञ्चकम् ।
चत्वारिंशत्तथाष्टौ च चतुर्भिर्हीयते क्रमात् ॥
चतुर्थांशाधिकं दैर्घ्यं पञ्चस्वेतेषु शस्यते ।
शिल्पिनां कञ्चुकिनां च वेश्यानां गृहपञ्चकम् ॥
अष्टाविंशत्कराणां तद्विहीनं विस्तरात्क्रमात् ।
द्विगुणं दैर्घ्यमेवोक्तमध्यक्षेष्वेवमेव तु ॥
दूतकर्मान्तिकादीनां वक्ष्ये भवनपञ्चकम् ।
चतुर्थांशाधिकं दैर्घ्यं विस्तराद्द्वादशैव तु ॥
अर्धार्धकरहानिः स्याद्विस्तरात्पञ्चसु क्रमात् ।
दैवज्ञगुरुवैद्यानां सभास्तारपुरोधसाम् ॥
तेषामपि प्रवक्ष्यामि क्रमाद्भवनपञ्चकम् ।
चत्वारिंशत्प्रविस्ताराच्चतुर्भिर्हीयते क्रमात् ॥
पञ्चस्वेतेषु दैर्घ्यं च षड्भागेनाधिकं भवेत् ।
चातुर्वर्ण्यस्य वक्ष्यामि सामान्यं गृहपञ्चकम् ॥
द्वात्रिंशद्वै कराणां तु चतुर्भिर्हीयते क्रमात् ।

आषोडशादिति परं न्यूनमन्त्यावसायिनाम् ॥
दशांशेनाष्टभागेन त्रिभागेनाथ भौगिकम्।
अधिकं दैर्घ्यमित्याहुर्ब्राह्मणादेः प्रशस्यते ॥
सेनापतेर्नृपस्यापि सप्तत्या सहिते कृते।
चतुर्दशहृते व्यासे शालान्यासः प्रकीर्त्तितः ॥
पञ्चत्रिंशद्धृते तस्मिन्नलिन्दः समुदाहृतः।

सेनापतेरिति। सेनापतेर्नृपस्य गृहे यावान् विस्तार उक्तस्तं करसप्तत्या सहितं कृत्वा तदर्द्धं गृहीत्वा तस्यार्द्धस्य चतुर्दशविभागं कृत्वा यावदवशिष्टं भवति तावद्विस्तारां शालां कुर्यादित्यर्थः। तेनाष्टोत्तरशतहस्तविस्तारे राजवेश्मनि पञ्चहस्तप्रमाणा शाला भवति। पञ्चत्रिंशद्धृत इति। तस्मिन्नेव नवाशीतिविस्तारे राजवेश्मनि पञ्चत्रिंशता भागहारे कृते ये एकोनविंशतिहस्ता अवशिष्यन्ते तावानलिन्द्रः कर्त्तव्यः।

तथा षट्त्रिंशद्धस्तात्र सप्ताङ्गुलसमन्विता।
विप्रस्य महती शाला न दैर्घ्यं परतो भवेत् ॥
दशाङ्गुलाधिका तद्वत्क्षत्रियस्य विधीयते ॥
पञ्चत्रिंशत्करा वैश्ये अङ्गुलानि त्रयोदश।
तावत्करैव शूद्रस्य युता पञ्चदशाङ्गुलैः ॥
शालायास्तु त्रिभागेन यस्याग्रे वीथिका भवेत्।

---

१ पादिकम् इति मा० पा०।

२ अत्र–'सेनापतेर्नृपस्यापि गृहयोरन्तरेण तु। नृपवासगृहं कार्यं भाण्डागारं तथैव च ॥ सेनापतेर्गृहस्यापि चातुर्वर्ण्यस्य चान्तरे वासाय च गृहं कार्यं राजपूज्येषु सर्वदा ॥ अन्तरप्रभवाणां च स्वपितुर्गृहमिष्यते। तथा हस्तशतादर्धं गदितं वनवासिनाम्' ॥ इत्यधिकं मात्स्ये वर्तते।

सोष्णीषं नाम तद्वास्तु पश्चात्तापोश्रयं भवेत् ॥
पार्श्वयोर्वीथिका यत्र सावष्टम्भं तदुच्यते ।
समन्ताद्वीथिका यत्र सुस्थितं तदिहोच्यते ॥
शुभदं सर्वमेतत्स्याचातुर्वर्ण्ये चतुर्विधम् ।
विस्तारात्षोडशो भागस्तथा हस्तचतुष्टयम् ॥
प्रथमो भूमिकोच्छ्राय उपरिष्टात्प्रहीयते ।
द्वादशांशेन सर्वासु भूमिकासु तथोच्छ्रयः ॥
पक्वेष्टुका भवेद्भित्तिः षडंशांशेन विस्तरात् ।
दारवैरपि कल्प्या स्यात्तथा मृन्मयभित्तिका ॥
गर्भमानेन मानं तु सर्ववास्तुषु शस्यते ।
गृहव्यासस्य पञ्चाशदष्टादशभिरङ्गुलैः ॥
संयुतो द्वारविष्कुम्भो द्विगुणश्चोच्छ्रयो भवेत् ।
द्वारशाखासु बाहुल्यमुच्छ्रायकरसम्मितैः ॥
अङ्गुलैः सर्ववास्तूनां पृथुत्वं शस्यते बुधैः ।
उदुम्बरोत्तमाङ्गं च तदध्यर्धप्रविस्तरात् ॥

उदुम्बरो देहली ।

अथातः सम्प्रवक्ष्यामि स्तम्भमानविनिर्णयम् ।
तद्वास्तुभवनोच्छ्रायं सदा सप्तगुणं विदुः ॥
अशीत्यंशं पृथुत्वं स्यादग्रे नवगुणैः सह ।
चरुकश्चतुरस्रः स्यादष्टास्रो वज्र उच्यते ॥
द्विवज्रः षोडशास्रस्तु द्वात्रिंशास्रः प्रलीनकः ।
मध्यप्रदेशे यः स्तम्भो वृत्तो वृत्त इति स्मृतः ॥

---

१ पश्चाच्छ्रेयोच्छ्रयम् इति मा० पा० ।
२ पक्केष्टका भवेद्भित्तिः षोडशांशेन विस्तरात् । इति मा० पा० ।

एते पञ्च महास्तम्भाः प्रशस्ताः सर्ववास्तुषु ।
पद्मवल्लीलताकुम्भपत्रदर्पणभूषिताः ॥
स्तम्भस्य नवमांशेन पद्मकुम्भान्तराणि तु ।
स्तम्भतुल्या तुला प्रोक्ता हीना चोपतुला ततः ॥
त्रिभागेनेह सर्वत्र चतुर्भागेन वा पुनः ।
हीनं हीनं चतुर्थांशात्तथा सर्वासु भूमिषु ॥
सानरोहाणि सर्वेषां प्रवेशे दक्षिणेन तु ।
द्वाराणि तु प्रवक्ष्यामि प्रशस्तानीह यानि तु ॥
पूर्वेणेन्द्रं जयन्तं च द्वारं सर्वत्र शस्यते ।
याम्यं च वितथं चैव दक्षिणेन विदुर्बुधाः ॥
पश्चिमे पुष्पदन्तं तु वारुणं च प्रशस्यते ।
उत्तरेण तु भल्लाटं सौम्यं तु सुखदं भवेत् ॥
तथा वास्तुषु सर्वत्र वेधं द्वारस्य वर्जयेत् ।
द्वारे तु रथ्यया विद्धे भवेत्सर्वकुलक्षयः ॥
रथ्या मार्गः । वेधोऽग्राभिमुखेनावस्थानम् ।
तरुणा द्वेषबाहुल्यं शोकः पङ्केन जायते ।
अपस्मारो भवेन्नूनं कूपवेधेन सर्वदा ॥
व्यथा प्रस्रवणेन स्यात्कीलेनाग्निभयं भवेत् ।
विनाशो देवताविद्धस्तम्भेन स्त्रीकृतो भवेत् ॥
गृहभर्तुर्विनाशः स्याद्गृहेण च गृहे कृते ।
अमेध्यावस्करैर्विद्धे गृहिणी बन्धकी भवेत् ॥
तथा शस्त्रभयं विद्यादन्त्यजस्य गृहेण तु ।
उच्छ्रायाद्द्विगुणां भूमिं त्यक्त्वा वेधो न जायते ॥

उच्छ्रायाद्द्विगुणामिति । यावान् द्वारोच्छ्रायो दैर्घ्यं, तद्द्विगुणंद्वाराग्रभूमेः परतो यद्येते रथ्यादयो भवन्ति तदा न

वेधो न वास्तुवेध इत्यर्थः ।

स्वयमुद्धाटिते द्वारे उन्मादो गृहवासिनाम् ।
स्वयं च पिहिते विद्यात्कुलनाशं विचक्षणः ॥
मानाधिके राजभयं न्यूने तस्करतो भयम् ।
द्वारोपरि च यद्द्वारं तदन्तकमुखं स्मृतम् ॥
अध्वनो मध्यदेशे तु अधिको यस्य विस्तरः ।
वज्रं तु सङ्कटं मध्ये सद्यो भर्तृविनाशनम् ॥
तथान्यपीडितं द्वारं बहुदोषकरं भवेत् ।
मूलद्वारात्तथात्यन्तं नाधिकं शोभनावहम् ॥
कुम्भश्रीपर्णिवल्लीभिर्मूलद्वारं तु शोभयेत् ।
पूजयेद्वापि तन्नित्यं बलिना चाक्षतोदनैः ॥
भवनस्य वटः पूर्वे दिग्भागे सार्वकामिकः ।
उदुम्बरस्तथा याम्ये वारुणे पिप्पलः शुभः ॥
प्लक्षश्चोत्तरतो धन्यो विपरीतस्त्वसिद्धये ।
कण्टकी क्षीरवृक्षश्च आसन्नः सफलद्रुमः ॥
भार्याहानिः प्रजाहानिर्भवेतां क्रमशः सदा ।
न च्छिन्द्याद्धटितानन्यानन्तरे स्थापयेच्छुभान् ॥
पुन्नागाशोकतिलकशमीवकुलचम्पकान् ।
दाडिमीं पिप्पलीं द्राक्षां तथा कुसुममण्डपान् ॥

जम्बीरपूगपनसद्रुमकेतकीभि-
र्जातीसरोजशतपत्रिकमल्लिकाभिः ।
यन्नारिकेलकदलीदलपाटलाभि-
र्युक्तं तदत्र भवनं श्रियमातनोति ॥

उदगादिप्लवं वास्तोः समानस्य शिरस्तथा ।

समानस्य, मानसहितस्य । वास्तोः, वास्तुपुरुषस्य ।

परीक्ष्य पूर्ववत् कुर्यात् स्तम्भोच्छ्रायं विचक्षणः।
नं देवधूर्त्तसचिवे चत्वराणां समीपतः॥
कारयेद्भवनं प्राज्ञो दुःखशोकसमन्वितम्।
तस्य प्रवेशाश्चत्वारस्तस्योत्सङ्गोऽग्रतः शुभः॥
पृष्ठतः पृष्ठतो गन्तुं सव्यावर्त्तं प्रशस्यते।
अपसव्यो विनाशाय दक्षिणे शीर्षकस्तथा॥
सर्व्वकामफलो नृणां सम्पूर्णो नाम नामतः।
एवं प्रवेशमालोच्य यत्नेन गृहमारभेत्॥
अथ सांवत्सरप्रोक्ते मुहूर्त्ते शुभलक्षणे।
रत्नोपरि शिलां कृत्वा सर्व्वबीजसमन्विताम्॥
चतुर्भिर्ब्राह्मणैः स्तम्भं वस्त्रालङ्कारपूजितम्।
शुक्लाम्बरधरः शिल्पी सहितो वेदपारगैः॥
स्नपितं तं न्यसेत्तद्वत्सर्व्वौषधिसमन्वितम्।
नानाक्षतसमोपेतं वस्त्राभरणसंयुतम्॥
ब्रह्मघोषेण वाद्येन गीतमङ्गलनिःस्वनैः।
प्रदीपे भोजयेद्विप्रान् होमस्तु मधुसर्पिषा॥
वास्तोष्पते प्रतिजानीतिमन्त्रेणानेन सर्व्वदा।
सूत्रपाते तथा कार्य्यमेवं स्तम्भोच्छ्रये पुनः॥
द्वारवंशोच्छ्रये तद्वत्प्रवेशसमये तथा।
वास्तूपशमने तद्वद्वास्तुयज्ञस्तु पञ्चधा॥
ईशाने सूत्रपातः स्यादाग्नेये स्तम्भरोपणम्।
प्रदक्षिणं च कुर्व्वीत वास्तोः पदविलेखनम्।

---

१ न देवधूर्तसचिवचत्वराणां समन्ततः। इति. मा० पा०।
२ पृष्ठभागस्तु इति. मा० पा०।
३ पायसम् इति मा० पा०।

तर्जनी मध्यमा चैव तथाङ्गुष्ठस्तु दक्षिणे ।
प्रवालरत्नकनकं फलंमृष्टाक्षतोदकम् ॥
सर्ववास्तुविभागेषु शस्तं पदविलेखने ।
न भस्माङ्गारकाष्ठेन न शस्त्रनखचर्मभिः ॥
न शृङ्गास्थिकपालैश्च क्वचिद्वास्तु विलेखयेत् ।
एभिर्विलिखितं कुर्यात् दुःखशोकभयादिकम् ॥
यदा गृहप्रवेशः स्याच्छिल्पी तत्राभिलक्षयेत् ।
स्तम्भसूत्रादिकं तद्वच्छुभाशुभफलोदयम् ॥
आदित्याभिमुखं रौति शकुनिः परुषं यदि ।
तुल्यकालं स्पृशेदङ्गं गृहभर्त्ता यदात्मनः ॥
वास्त्वङ्गे तद्विजानीयान्नरः शल्यं भयप्रदम् ।
अङ्गनानन्तरं यत्र हस्त्यश्वश्वापदं भवेत् ॥
तदङ्गसम्भवं विद्यात्तत्र शल्यं विचक्षणः ।
प्रसार्यमाणे सूत्रे तु श्वगोमायुविलङ्घिते ॥
तत्र शल्यं विजानीयात्खरशब्दे च भैरवे ।
यदि शाक्रे तु दिग्भागे मधुरं रौति वायसः ॥
धनं तत्र विजानीयात् भागे वा स्वाम्यधिष्ठिते ।
सूत्रच्छेदे भवेन्मृत्युर्व्याधिः कीले ह्यधोमुखे ॥
अङ्गारेषु तथोन्मादं कपालेषु च सम्भ्रमम् ।
कण्ठशल्येषु जानीयात्पौंश्चल्यं स्त्रीषु शास्त्रवित् ॥
गृहभर्तुर्गृहस्यापि विनाशः शिल्पिसम्भ्रमे ।
स्तम्भस्कन्धच्युते कुम्भे शिरोरोगान् विनिर्दिशेत् ॥
कुम्भापहारे सर्वस्य कुलस्यापि क्षयो भवेत् ।
मृत्युः स्थानच्युते कुम्भे भग्ने बन्धं विदुर्बुधाः ॥

---

१ फलं पिष्ठा कृतोदकम् इति मा० पा० ।

करसङ्ख्याविनाशे तु नाशं गृहपतेर्विदुः।
वीजौपाधिविहीने तु भूतेभ्यो भयमादिशेत्॥
प्राग्दक्षिणेन विन्यस्य स्तम्भं छत्रे निवेशयेत्।
ततः प्रदक्षिणेनाग्न्यान् न्यसेत् स्तम्भान् विचक्षणः॥
यस्माद्भयङ्करो नृणां योजितस्त्वप्रदक्षिणः।
रक्षां कुर्वीत यत्नेन स्तम्भोपद्रवनाशिनीम्॥
तथा फलवतीं शाखां स्तम्भोपरि निवेशयेत्।
प्रागुदक्प्रवणं कुर्याद्दिङ्मूढं तु न कारयेत्॥
स्तम्भं वा भवनं वापि द्वारं वासगृहं तथा।
दङ्मोहे कुलनाशः स्यान्न च संवर्द्धते गृहम्॥
यदि संवर्द्धयेद्गेहं सर्वमेव विवर्धयेत्[1]।
पूर्वेण वर्द्धते वास्तु कुर्याद्वैराणि सर्वदा॥
दक्षिणे वर्द्धितं वास्तु मृत्यवे स्यान्न संशयः।
पश्चाद्विवृद्धं यद्वास्तु तदर्थक्षयकारकम्॥
वर्द्धापितं तथा सौम्ये वहुसन्तापकारकम्।
आग्नेये तस्य वृद्धिः स्यात्तदातिभयदं भवेत्॥
वर्द्धितं राक्षसे कोणे वित्तक्षयकरं भवेत्।
वर्द्धापितं तु वायव्ये वातव्याधिप्रकोपकृत्॥
ईशाने सस्यहानिः स्याद्वास्तौ संवर्द्धिते सदा।
ईशाने देवतागारं तथा शान्तिगृहं भवेत्॥
महानसं तथाऽऽग्नेये तत्पार्श्वे चोत्तरे जलम्।
गृहस्योपस्करं सर्वं नैर्ऋते स्थापयेद्बुधः॥
धर्मस्थानं[2] वहिः कुर्यात्स्नानमण्डपमेव च।

---

१ सर्वदिक्षु विवर्धयेत् इति मा० पा०।
२ वधस्थानमिति मा० पा०।

धनधान्यं च वायव्ये कर्मशालां ततो बहिः ॥
एवं वास्तुविशेषः स्याद्गृहभर्त्तुः शुभावहः ।
अथातः सम्प्रवक्ष्यामि दार्वाहरणमुत्तमम् ॥
धनिष्ठापञ्चकं मुक्त्वा विष्ट्यादिकमतः परम् ।
ततः सांवत्सरादिष्टे दिने यायाद्वनं बुधः ॥
प्रथमं वलिपूजां च कुर्य्याद्वृक्षाय सर्वथा ।
पूर्वोत्तरेण पतितं गृहदारु प्रशस्यते ॥
अन्यथा न शुभं विद्याद्याम्यापरनिपातने ।
क्षीरवृक्षोद्भवं दारु न गृहे विनिवेशयेत् ॥
कृताधिवासं विहगैरनलानिलपीडितम् ।
गजावभग्नं च तथा विद्युन्निर्घातपीडितम् ॥
ऊर्ध्वं शुष्कं तथा दारु भग्नं वक्रं तथैव च ।
चैत्यदेवालयोत्पन्नं नदीसङ्गमजं तथा ॥
श्मशानकूपनिलयं तडागादिसमुद्भवम् ।
वर्जयेत्सर्वदा दारु यदीच्छेद्विपुलां श्रियम् ॥
तथा कण्टकिनो वृक्षान्नीपनिम्बविभीतकान् ।
श्लेष्मातकानाम्रतरून् वर्जयेत् गृहकर्मणि ॥ इति ।

वह्वृचगृह्येऽपि,

अथातो वास्तुपरीक्षा । अनूषरमविवदिष्णु भूमौषधिवनस्पतिवत् । यस्मिन् कुशवीरणं प्रभूतम् । कण्टकिक्षीरिणस्तु समूलान् परिखायोद्वासयेदपामार्गः शाकस्तिलवकः परिव्याध इति चैतानि । यत्र सर्वत आपो मध्यं समेत्य प्रदक्षिणं शयनीयं परीत्य प्राच्यः स्यन्देरन्नप्रवदत्यस्तत्सर्वसमृद्धम् । समवस्रवे भक्तशरणं कारयेत् । वसुमं हि भवति । दक्षिणाप्रवणे सभां मापये·

१ अर्धशुष्कम् इति मा० पा० ।

त्सायूता ह भवति । युवानस्तस्यां कितवाः कलहिनः प्रमायुका भवन्ति । यत्र सर्वत आपः प्रस्यन्देरन् सा स्वस्त्ययन्यद्यूता च ( आ० गृ० अ० २ खं० ७ ) ।

अथैनैर्वास्तु परीक्षेत । जानुमात्रं गर्त्तं खात्वा तैरेव पांसुभिः प्रतिपूरयेत् । अधिके प्रशस्तं, समे वार्त्तं, न्यूने गर्हितम् । अस्तमिते पांसुपूर्णं परिवासयेत्। सोदके प्रशस्तम्, आर्द्रे वार्त्तं, शुष्के गर्हितं, श्वेतं मधुरास्वादम् । सिकतोत्तरं ब्राह्मणस्य, लोहितं क्षत्रियस्य, पीतं वैश्यस्य । तत्सहस्रसीतं कृत्वा यथादिशं समचतुरस्रं मापयेत् आयतचतुरस्रं वा । तच्छमीशाखयोदुम्बरशाखया वा शन्तातीयेन त्रिःप्रदक्षिणं परिव्रजन्प्रोक्षति–अविछिन्नया चोदकधारया "आपोहिष्ठामयो भुव" इति तृचेन । वंशान्तरेषु शरणानि कारयेत् । गर्त्तेष्ववकां शीपालमित्यवधापयेन्नास्याग्निर्दाहुको भवतीति विज्ञायते । मध्यमस्थूणाया गर्त्तेऽवधाय प्रागग्रोदगग्रान् कुशानास्तीर्य व्रीहियवमतीरप आसेचयेद् "अच्युताय भौमाय स्वाहा" इति । अथैनामुच्छ्रीयमाणामनुमन्त्रयेत "इहैव तिष्ठ निमिता तिल्विलास्तामिरावतीं मध्ये पोपस्य तिष्ठन्तीम् । आ त्वा प्रापन्नघायव आ त्वा कुमारस्तरुण आवत्सो जायतां सह । आ त्वा परिश्रितः कुम्भ आदध्नः कलशैरयन"इति । (आ०गृ०अ०२खं०८)

वंशमाधीयमानम् । "ऋतेन स्थूणामधिरोह वंश द्राघीय आयुः प्रतरं दधाना" इति । सदूर्वासु चतसृषु शिलासु मणिकं प्रतिष्ठापयेत् "पृथिव्या अधि सम्भव" इति । "अरङ्गरो वावदीति त्रेधा बद्धो वरत्रया । इरामु ह प्रशंसत्यनिरामपवाधताम्" इति वा । अथास्मिन्नप आसेचयेत् "एतु राजा वरुणो रेवतीभिरास्मिंस्थाने तिष्ठतु मोदमानः ।

इरां वहन्तो घृतमुक्षमाणा मित्रेण साकं सह संविशन्तु" इति । अथैनच्छमयति व्रीहियवमतीभिरद्भिर्हिरण्यमवधाय शन्तातीयेन त्रिः प्रदक्षिणं परिव्रजन्प्रोक्षति अविच्छिन्नया चोदकधारया "आपोहिष्ठामयो भुव"इति तृचेन । मध्येऽगारस्य स्थालीपाकं श्रपयित्वा "वास्तोष्पते प्रतिजानी ह्यस्मान्"इति चतसृभिः प्रत्यृचं हुत्वाऽन्नं संस्कृत्य ब्राह्मणान् भोजयित्वा 'शिवं वास्तु शिवं वास्तु' इति वाचयीत । इति । (आ. गृ.अ. २ खं. ९)।

अविवादिष्णु, यत्र विवदिष्णुर्विवादिता न विद्यते तत्। अविवादीति तु पाठे विवादरहितमित्यर्थः । भूमौपधिवनस्पतिवत्, वहुतरौपधिवनस्पत्युत्पत्तियोग्यम् । परिखाय, उत्पाट्य । परिव्याधो, राजवृक्षविशेषः । प्रदक्षिणं शयनीयं परीत्य, शयनगृहं प्रदक्षिणं यथा भवति तथाकृत्वा। अप्रवदत्यः, अशब्दवत्यः। छान्दसो नुमभावः। सर्वसमृद्धं,सर्वैः पुत्रादिभिः सम्पूर्णम्। समवस्रवे, प्रणालिकादेशे। भक्तशरणं, पाकशाला । सभा, गृहस्थस्य समाजशाला, सा यदि दक्षिणाप्रवणे देशे क्रियते तदा द्यूतवती भवत्यतो न तथा कार्येत्यर्थः।प्रमायुकाः,मरणशीलाः। वार्त्तम्, नात्युत्कृष्टं नापकृष्टमित्यर्थः । सहस्रसीतम्, अपरिमितकृष्टम् । शन्तातीयैः, शन्न इन्द्राग्नी भवतेतिसूक्तेन । अवकाः शम्बुकाः । शीपालाः शैवालाः ।

**विष्णुधर्मोत्तरे,**

राम उवाच ।

वास्तुविद्यां समाचक्ष्व यादोगणनृपात्मज ।
हिताय मानवेन्द्राणां तथान्येषां च मानद ॥

पुष्कर उवाच ।

भूमिमादौ परीक्षेत शुभलक्षणसंयुताम् ।

पूर्वोदक्प्लवणां धन्यां तथा वै दक्षिणोन्नताम् ॥
न तथा शकटाच्छिन्नां न च तोयपरिप्लुताम् ।
वल्मीकमूषिकावासश्वभ्रकण्टकितद्रुमैः ॥
विहीनां मृदुसंस्पर्शां कठिनां चाप्यनूपराम् ।
न तथा यवसंस्थानां नेभवज्रोपमां तथा ॥
न शूर्पकूर्मसंस्थानां स्रक्तिहीनां तथैव च ।
स्रक्तिहीनां, कोणरहिताम् ।
सम्पूर्यमाणां स्वात्खातात्तथा रिक्तमृदं शुभाम् ॥
गर्भे च कुसुमं यस्या न म्लानिमुपगच्छति ।
न निर्वाणमवाप्नोति यस्यां दीपश्च भार्गव ॥
उदकं च तथा यस्यां शीघ्रं राम न जीर्यते ।
सा प्रशस्ता क्षितिस्तस्यां निवेशं कारयेद्बुधः ॥
श्वेता रक्ता तथा पीता कृष्णा चैव यथाक्रमम् ।
विप्रादीनां प्रशस्ता स्यान्मृत्तिका च ततो द्विज ॥
घृतासृगन्नमद्यानां तुल्यगन्धा तथैव च ।
मधुरा च कषाया च अम्लोषणरसा तथा ॥
कुशैः शरैस्तथा काशैर्दूर्वाभिर्या च संवृता ।
परीक्ष्य यत्नतो भूमिं तिथिनक्षत्रसम्पदा ॥
सम्पूज्य ब्राह्मणान् पूर्वं निःशल्यां तां तु कारयेत् ।
खातपूर्णां तु तां कृत्वा देवभागांश्च कल्पयेत् ॥
चतुःषष्टिपदं कृत्वा वास्तु सर्वं यथाविधि ।
चतुष्षष्टिविभागेन कल्पयित्वा समन्ततः ॥
एकैकं तु गृहं तत्र तथैव परिकल्पयेत् ।
यस्मात्सुरविभागेन द्वारन्यासः प्रकीर्तितः ॥
अतः परं प्रवक्ष्यामि देवभागान् यथाविधि ।

मध्ये चतुष्पदः स्वामी ब्रह्मा शुभचतुर्मुखः ॥
प्राक् तथाविग्रहः स्वामी कथितश्च तथाऽर्यमा ।
दक्षिणेन विवस्वांश्च मित्रः पश्चिमतः स्थितः ॥
उदक्पृथ्वीधरश्चैव विकोणेष्वथ मे शृणु ।
विकोणे शिवदैवत्ये राजयक्ष्माम्बुपौ स्मृतौ ॥
सावित्रसवितारौ तु तथाग्नेये प्रकीर्तितौ ।
तथा नैर्ऋतकोणे तु जयेन्द्रौ राम कीर्तितौ ॥
रुद्रव्याधी तु वायव्ये कथितौ भृगुनन्दन ।
देवतानां तथैतासां भूमौ बाह्ये तु मण्डले ॥
पूर्वादिषु यथा दिक्षु देवतास्तन्निबोध मे ।
महेन्द्रश्च रविः सत्यो भृशः प्राग्राम कीर्त्तितः ॥
गृहक्षतो यमो भृङ्गो गन्धर्वश्चैव याम्यतः ।
भल्लाटश्च तथा सोम अदितिर्धनदस्तथा ॥
उत्तरेण स्मृता देवा विकोणेष्वथ मे शृणु ।
दितिरीशो मेघजयौ शिवकोणे प्रकीर्तिताः ॥
व्योमाग्नी पूषवितथौ शिखिकोणे च भार्गव ।
मृगपित्रीशदौवारिसुग्रीवाश्चैव नैर्ऋते ॥
रोग आपश्च वायुश्च मुख्यश्चानिलदिक्स्थिताः ।
तथैव बाह्यतश्चाष्टौ शृणुष्व गदतो मम ॥
अष्टावष्टौ विनिर्दिष्टा देवा दिशि दिशि द्विज ।
आद्यन्तौ तु तयोर्देवौ प्रोक्तावन्नग्रहेश्वरौ ॥
पर्जन्यः प्रथमो देवो द्वितीयश्च करग्रहः ।
महेन्द्ररविसत्याश्च भृशोऽथ गगनस्ततः ॥
पवनश्च महाभागाः पूर्वेणैते प्रकीर्तिताः ।
पुष्पोऽथ वित्तदश्चैव तथैव च गृहक्षतः ॥

यमो भृशश्च गन्धर्वो मृगोऽथ पितरस्तथा।
दक्षिणेन विनिर्दिष्टा देवा भृगुकुलोद्वह॥
दौवारिकश्च सुग्रीवः पुष्पदन्तस्तथासुरः।
वरुणस्तु तथा यक्ष्मो रोगः शोषस्तथैव च॥
पश्चिमेन विनिर्दिष्टो देव दानवनाशनः।
नागराजस्तथा मुख्यो भल्लाटश्च तथा शशी॥
अदितिश्च कुवेरश्च रोगश्चाथ हुताशनः।
एते देवा विनिर्दिष्टास्तथा चोत्तरतो द्विज॥
एतेषामेव देवानां भागे द्वाराणि कारयेत्।
शुभानि तेषु वक्ष्यामि शेषाणि परिवर्जयेत्॥
महेन्द्रसोमदैवत्यौ पूर्वतः शुभदौ स्मृतौ।
गृहक्षतश्च पुष्पश्च तथा दक्षिणतः शुभौ॥
सुग्रीवः पुष्पदन्तश्च शुभौ पश्चिमतो द्विज।
भल्लाटः सोमदेवश्च द्वारे श्रेष्ठौ तथा ह्युदक्॥
द्वात्रिंशच्च बहिर्देवास्तथान्तर्द्वादश स्मृताः॥
मध्ये ब्रह्मा तथा प्रोक्त एवं सम्पिण्डदेवताः।
चत्वारिंशद्विनिर्दिष्टास्तथा पञ्च च भार्गव॥
विन्यस्याजिरमेवादौ चतुष्षष्टिपदं द्विज।
तत्र देवविभागेन गृहकर्म विधीयते॥
चन्द्रसुग्रीवपर्जन्यसत्येन्द्रार्यमवारुणे।
भागे वासगृहं कुर्याद्यथासंस्थानतो द्विज॥
सूर्यान्तरिक्षादिकं तत्र तथा कुर्याद्द्विजोत्तम॥
अथ वा दिग्विभागेन गृहकर्म विधीयते॥
ऐशान्यां देवतावेश्म तथाग्नेय्यां महानसम्।
अग्न्यगारं च तत्रैव भ्रमं नैर्ऋतके तथा॥

गोष्ठागारायुधागारौ वायव्ये च तथा स्मृतौ ।
कूपादि चोदकं शस्तं दिक्षु चैवोत्तरासु च ॥
अन्यासु गर्हितं राम प्रयत्नेन विवर्जयेत् ।
पुराणनवमिश्रं तु दारु वेश्मनि वर्जयेत् ॥
स्वकुड्यं परकुड्ये च नैव कार्यं विजानता ।
विनार्कचन्द्रग्रहणं द्वारसम्परिवर्त्तनम् ॥
वृद्धिक्षयौ न कर्त्तव्यौ भूयः कर्माणि वेश्मनः ।
प्रागुत्तरे तथा कार्यं ब्राह्मणानुमते तथा ॥
ब्रह्मस्थानं शुचिर्नित्यं कार्यं भवति भार्गव ।
न पीडनीयं च तथा नागदन्तादिभिर्भवेत् ॥
मर्माणि राम जानीयाद्देवतापदसन्धिषु ।
न पीडयेत्तथा तानि नागदन्तादिभिर्द्विज ॥
ये द्रुमा घटसिक्ता ये तथा ये च सकोटराः ।
हस्तिविद्युद्धुता ये च देवतावेश्मजाश्च ये ॥
वह्निस्पृष्टाः श्मशाने च ये च जाताश्चतुष्पथे ।
एकवृक्षाश्च ये केचिन्न ते शस्ताः कथञ्चन ॥
वृक्षस्य महतीं पूजां कृत्वा तद्वासकस्य च ।
मध्वाज्यैरुपदिग्धेन तथा छिन्द्यात्परशुना ॥
पूर्वोत्तरेण पतनं प्रशस्तं परिकीर्त्तितम् ।
शेषासु पतनं दिक्षु गर्हितं द्विजसत्तम ॥
वटाश्वत्थौ च निर्गुण्डी कोविदारविभीतकौ ।
पुष्पकः शाल्मलिश्चैव पलाशश्च विवर्जयेत् ॥
पलाशश्चेत्यग्रे, एतानिति शेषः ।
विस्तारद्विगुणोच्छ्रायं द्वारं कार्यं तथा गृहे ॥
निधिप्रमथकौ नागहंससारससन्निभम् ।

द्वारकोणे भ्रमश्वभ्रचतुष्पथसुरालयैः ॥
कूपैकवृक्षरथ्याभिर्विद्धं द्वारं विवर्जयेत् ।
रथ्या मार्गः । वेधोऽत्राभिमुखेनावस्थानम् ।
द्विगुणात्तु गृहोच्छ्रायात् भूमिं त्यक्त्वा न दोषभाक् ।
वेध इतिशेषः ।
आध्मातं सङ्कटं राम तथाम्बुस्रावि यद्भवेत् ।
द्वारं न तत्प्रशंसन्ति तस्मात्तत्परिवर्जयेत् ॥
मूलद्वाराधिकं श्रीभागेषु च तथा भ्रमम् ।
धनदस्य तथा भागे धनुर्वेश्म विधीयते ॥
इन्द्रार्दित्येन्द्रसुग्रीवद्वारमन्यत्तु कारयेत् ।
स्तम्भं तु नवधा कृत्वा पीठभागे तु कारयेत् ॥
भागे कुम्भं तथा कार्यं भागे पद्मं निवेशयेत् ।
स्तम्भे भागत्रये कार्यमष्टास्रिमथ वर्त्तुलम् ॥
तस्योपरि तथा भागे भवत्यामलसारकम् ।
भागे दोषतुला कार्या भागे कार्या तथा तुला ॥
एकशालचतुःशालौ कर्त्तव्यौ स्वेच्छया सदा ।
पूर्वोत्तराभिः शालाभिर्हीनौ कार्यौ द्विशालकौ ॥
दक्षिणापरशालाभिर्हीनौ मरणदायकौ ।
अन्यथा गर्हितौ राम सुतार्थक्षयदौ मतौ ॥
अष्टहस्तोच्छ्रयादूर्ध्वं भूमिकां तु न कारयेत् ।
वास्तूच्छ्रायो न कर्त्तव्यस्तथा हस्तशताधिकः ॥
आरम्भः सशिलान्यासो द्वारस्तम्भोच्छ्रयावुभौ ।
तथाऽऽरोहणनिष्पत्तिस्तथा वास्तुप्रवेशनम् ॥
आरोहणनिष्पत्तिः, सोपानपङ्क्तिः ।
सर्वाण्येतानि कार्याणि दिवसे राम पूजिते ।

सर्व्वेष्वेतेषु कर्त्तव्यं देवब्राह्मणपूजनम् ॥
कालज्ञपूजनं चैव स्थपतीनां च भार्गव ।
प्रावृट्काले न कर्त्तव्यं वास्तुकर्म विजानता ॥
कृष्णपक्षत्रिभागान्ते शुक्लाद्ये च भृगूत्तम ।
तिथिं चतुर्थीं नवमीं वर्जयेच्च चतुर्दशीम् ॥
अङ्गारकदिनं राम करणं विष्टिसंज्ञितम् ।
दिव्यान्तरिक्षक्षितिजैरुत्पातैर्न च पीडितम् ॥
ग्रहोपसृष्टं च तथा व्यतीपातहतं च यत् ।
चन्द्रतारानुकूले भे गृहं कर्तुं विजानता ।
ध्रुवाणि भानि शस्तानि शाक्रं वै नैर्ऋतं तथा ॥
याम्यं च वैष्णवं पुष्यं पौष्णं सावित्रमेव च ।
स्थिरलग्ने स्थिरांशे च कर्तुश्चोपचयात्मके ॥
राम सौम्यग्रहाः केन्द्रे त्रिकोणे वापि भार्गव ।
पापाश्चोपचयस्थाने तस्मिन् कार्यं प्रवेशनम् ॥
केन्द्रस्थं वर्जयेत्पापं सर्वयत्नेन कर्मसु ।
केन्द्रसौम्ययुतं देयं न तु शून्यं कदाचन ॥
अतः परं प्रवक्ष्यामि शिलान्यासविधिं तव ।
चतुःषष्टिपदं कृत्वा समे स्थाने तु मण्डलम् ॥
कृत्वा तु देवतान्यासं तत्र मण्डलके द्विज ।
श्रियाः सम्पूजनं कृत्वा वासुदेवस्य चाप्यथ ॥
पूजनं मण्डले कार्यं वासुदेवगणस्य च ।
गन्धार्घ्यपुष्पनैवेद्यधूपदीपैर्भृगूत्तम ॥
तेषां सम्पूजनं कृत्वा समाधाय हुताशनम् ॥
ओङ्कारपूर्वमाज्यं तु जुहुयाच्छ्रीधरस्य तु ।
श्रियः कृत्वा ततो होमं ब्राह्मणः कारयेत्ततः ॥

ब्राह्मणं तु पुरस्कृत्य वास्तुदेवगणस्य च ।
होतव्यमाज्यं धर्मज्ञ यस्य देवस्य हूयते ॥
तत्कालमाशु भजते लक्षणेऽग्नौ द्विजोत्तम ।
तस्य देवस्य यत्स्थानं तत्र शल्यं विनिर्दिशेत् ॥
शल्यस्योद्धरणं कार्यं राम यत्नेन जानता ।
मध्ये शैलमयं कुम्भं शङ्कुं च स्थापयेद्बुधः ॥
ऐशाने च तथा कोणे शिलां पूर्वं प्रतिष्ठयेत् ।
प्रदक्षिणं ततो राम शिलान्यासो विधीयते ॥
कुम्भस्य च शिलानां च ततः स्नानं विधीयते ।
वटाश्वत्थकषायेण सर्वौषधिजलैस्ततः ॥
ततोऽनुलेपनं कार्यं चन्दनेन सुगन्धिना ।
आच्छादनं ततः कार्यं वासोभिः कुसुमैः शुभैः ॥
दीपं धूपं च नैवेद्यं तेषां राम निवेदयेत् ।
दक्षिणाभिर्द्विजेन्द्राणां ततः पूजा विधीयते ॥
कालवित्स्थपती पूज्यौ ततो राम विजानता ।
ततो मन्त्रं जपेत्कर्त्ता कालज्ञः स्थपतिस्त्वथ ॥
गृहपुष्टिकरं राम मुनिवक्त्रविनिःसृतम् ।
नन्दे नन्दय वासिष्ठे वसुभिः प्रजया सह ॥
जये जयावहे देवि प्रजानां जयमावह ।
पूर्णे गिरीशदायादे पूर्णकामं कुरुष्व माम् ॥
भद्रे कश्यपदायादे कुरु भद्रां मतिं मम ।
सर्वबीजसमायुक्ते सर्वरत्नौषधैर्वृते ॥
रुचिरे नन्दने नन्दे वासिष्ठे रम्यतामिह ।
प्रजापतिसुते देवि चतुरस्रे महीमये ॥
सुभगे सुव्रते भद्रे गृहे काश्यपि रम्यताम्

पूजितैः परमाचार्यैर्गन्धमाल्यैरलङ्कृते ॥
भव भूतिकरी देवि गृहे भार्गवि रम्यताम् ।
अव्यङ्गे चाक्षते पूर्णे मुनेरङ्गिरसः सुते ॥
इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कामयाम्यहम् ।
देशस्वामिपुरस्वामिगृहस्वामिपरिग्रहे ॥
मनुष्यधनहस्त्यश्वपशुवृद्धिकरी भव ।
गृहप्रवेशेऽपि तथा शिलान्याससमो विधिः ॥
कर्त्तव्यः सकलो राम शिलान्यासविवर्जितः ।
पूजितामरलक्ष्मीकं हुताग्निं चाप्यलङ्कृतम् ॥
पञ्चरङ्गेण सूत्रेण प्रतिवद्धसरं तथा ।
सकलेषु तु कोणेषु दिशासु विदिशासु च ॥
गवाक्षकेषु कर्त्तव्याश्चक्रा रक्षोहणास्तथा ।
सर्वस्यास्य तथा न्यासो मन्त्रै रक्षोहणैर्भवेत् ॥
गोपृष्ठविन्यस्तकरः प्रविशेच्च गृही गृहम् ।
स्वनुलिप्तः सुखी स्रग्वी सपत्नीकस्तथैव च ॥
द्विजपुण्याहघोषेण वीणावेणुरवेण च ।
वन्दिनां च निनादेन पटहानां स्वनेन च ॥
काले शुभे कालविदा प्रदिष्टे सतोरणं पूर्णघटाभिरामम् ।
प्रविश्य कालज्ञसमर्चितानां कृत्वार्चनं तत्र सुरोत्तमानाम् ॥
सम्पूज्य वह्निद्विजपुङ्गवांश्च मङ्गल्यमालभ्य च भोजयित्वा ।
विप्रान्मधुक्षीरघृतोत्कटान्नं सदक्षिणांस्तांश्च तथा विसर्ज्य ॥
सप्ताहमग्निं परिचर्य तत्र सम्पूज्य विप्रान् विधिवच्च राम ।
गृहे वसेत्पूजितदेवविप्रे शुचौ सदा सर्वगुणोपपन्ने ॥ इति ।
इति विष्णुधर्मोत्तरेषु वास्तुविधा ।
एवं गृहादौ निर्मिते गृहस्य कस्मिन् भागे के वृक्षाः शुभाः

के चाशुभा इत्यपेक्षिते—

विष्णुधर्मोत्तरे,

पुष्कर उवाच।

उत्तरेण शुभः प्लक्षो वटः प्राग्भार्गवोत्तम।
उदुम्बरश्च याम्येन सौम्येनाश्वत्थ एव च॥
एते क्रमेण नेष्यन्ते दक्षिणादिसमुद्भवाः।
समीपजाताश्च तथा वर्ज्याः कण्टकिनो द्रुमाः॥ इति।

उद्यानं कुत्र भागे कर्त्तव्यं कथं वा कर्त्तव्यमित्यपेक्षायाम्—

तत्रैव,

वामभागे तथोद्यानं कुर्याद्वासगृहाच्छुभम्।
वापयेत्प्राक्तिलांस्तत्र मृद्गीयात्तांश्च पुष्पितान्॥
ततस्तु रोपयेद्वृक्षान् प्रयतः सुसमाहितः।
नतो द्रुममथाभ्यर्च्य ब्राह्मणान् शशिनं तथा॥
ध्रुवाणि पञ्च वायव्यं हस्तं पुष्यं सवैष्णवम्।
नक्षत्राणि तथा मूलं शस्यते द्रुमरोपणे।
उद्यानमजलं राम नाभिरामं यदा तदा॥
प्रवेशयेन्नदीवाहान् पुष्करिण्यश्च कारयेत्।
संस्कार्यमुद्भिदा तोयं कूपाः कार्याः प्रयत्नतः॥
हस्तं मघां तथा मैत्रमाप्यं पुष्यं च वासवम्।
उत्तरात्रितयं राम तथा पूर्वा च फल्गुनी॥
जलाशयसमारम्भे प्रशस्तं वारुणं तथा।
सम्पूज्य वरुणं देवं विष्णुं पर्जन्यमेव च॥
तर्पयित्वा द्विजान् कामैस्तदारम्भपरो भवेत्।
अथोद्याने प्रवक्ष्यामि प्रशस्तान् पादपान् द्विज॥

अरिष्टाशोकपुन्नागशिरीषाः सप्रियङ्गवः ।
परमाशोककदलीजम्बूलकुचदाडिमाः ॥
मङ्गल्याः सुद्रुमा राम रोपणीया गृहेषु वा ।
कृत्वा बहुत्वमेतेषां सेव्याः सर्वेऽप्यनन्तरम् ॥
शाल्मलिं कोविदारं च वर्जयित्वा विभीतकम् ।
दमनं देवदारुं च पलाशं पुष्करं तथा ॥
न विवर्ज्यास्तथा केचिद्देवोद्यानेषु जानता ।
तत्रापि बहुता कार्या मङ्गल्यानां द्विजोत्तम ॥
सायम्प्रातस्तु घर्मर्तौ शीतकाले दिनान्तरे ।
वर्षाकाले भुवः शोषे सेक्तव्या रोपिता द्रुमाः ॥
उत्तमं विंशतिर्हस्ता मध्यमं षोडशायतम् ।
स्थानात्स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम् ॥
अभ्यासजातास्तरवः संस्पृशन्तः परस्परम् ।
अव्यक्तमूलमिश्रत्वाद्भवन्ति विफला द्विज ॥ इति ।

एवं रोपितानां द्रुमाणां रोगोत्पत्तौ चिकित्सोक्ता—

तत्रैव,

तेषां व्याधिसमुत्पत्तौ शृणु राम चिकित्सितम् ।
आदौ संशोधनं तेषां किञ्चिच्छस्त्रेण कारयेत् ॥
विडङ्गघृतपङ्काक्तान् सेचयेच्छीतवारिणा ।
फलनाशे कुलत्थैश्च माषैर्मुद्गैस्तिलैर्यवैः ॥
शृतशीतपयःसेकः फलपुष्पाय सर्वदा ।
अविकाऽजशकृच्चूर्णं यवचूर्णं तिलानि च ॥
उदकं गोमयं चेति सप्तरात्रं निधापयेत् ।
उत्सेकः सर्ववृक्षाणां फलपुष्पादिवृद्धिदः ॥ इति ।

नानारङ्गपुष्पोत्पत्तौ प्रकार उक्तः—

तत्रैव,
रक्ततोयाभिषेचितम् ।
तद्रक्तपुष्पं भवति यौवने नात्र संशयः ।
मत्स्याम्भसा तु सेकेन वृद्धिर्भवति शाखिनाम् ॥ इति ।
अथैतेषां दोहदानाह—
तत्रैव,
ततः प्राधान्यतो वक्ष्ये द्रुमाणां दोहदान्यहम् ।
मत्स्योदकेन शीतेन आम्राणां सेक इष्यते ॥
मृद्वीकानां तथा कार्यस्तेनैव रिपुसूदन ।
पक्वासृग्रुधिरं चैव दाडिमानां प्रशस्यते ॥
तुषं देयं च नव्यानां मद्यं च वकुलद्रुमे ।
विशेषात्कामिनीवक्त्रसंसर्गात्तु गुणो भवेत् ॥
प्रशस्तं चाप्यशोकस्य कामिनीपादताडनम् ।
शृगालमांसतोयं च नारङ्गाक्षोटयोर्हितम् ॥
मधुपर्ण्युदकं चैव वदराणां प्रशस्यते ।
गन्धोदकं सगोमांसं केतकानां प्रशस्यते ॥
क्षीरसेकेन भवति सप्तपर्णो मनोहरः ।
मांसयूपवसामज्जासेकः कुरवके हितः ॥
पूतिमत्स्याघृतं पूतिकार्पासफलमेव च ।
अरिमेदस्य सेकोऽयं पाटलेषु प्रशस्यते ॥
शृगालमत्स्यमांसाभ्यां चम्पकेषु च वापयेत् ।
पारावतानां क्षीरेण रुधिरेण च शस्यते ॥
कपित्थबिल्वयोः सेकं गुडतोयेन कारयेत् ।
जातीनां मल्लिकायाश्च गन्धतोयेन रञ्जनम् ॥
जपाकुरवजातीनां कूर्ममांसं प्रशस्यते ।

खर्जूरनारिकेराणां वंशस्य कदलस्य च ॥
लवणेन सतोयेन सेको वृद्धिकरः स्मृतः ।
विडङ्गलवणोपेतं मत्स्यमांसं भृगूत्तम ॥
सर्वेषामविशेषेण दोहदं परिकल्पयेत् ।
एवं कृते चारुपलाशपुष्पाः सुगन्धिनो व्याधिविवर्जिताश्च ।
भवन्ति नित्यं तरवः सुरम्याश्चिरायुषः स्वादुफलान्विताश्च॥इति।

इति विष्णुधर्मोत्तरे वृक्षायुर्वेदः ।

अथ राष्ट्रम् ।

तत्र मनुः,
राष्ट्रस्य सङ्ग्रहे नित्यं विधानमिदमाचरेत् ।
सुसङ्गृहीतराष्ट्रो हि पार्थिवः सुखमेधते ॥
सङ्ग्रहः, संरक्षणमात्मीयताकरणं वा ।
द्वयोस्त्रयाणां पञ्चानां मध्ये गुल्ममवस्थितम् ।
तथा ग्रामशतानां च कुर्याद्राष्ट्रस्य गुप्तये ॥

द्वयोर्ग्रामशतयोस्त्रयाणां पञ्चानां वा ग्रामशतानां मध्ये गुल्मं पदात्यादिसमूहमवस्थितं कुर्यात्स्थापयेत् । राष्ट्रस्य सङ्ग्रहम् इति पाठे सङ्ग्रहं रक्षास्थानं, गुल्मं गुल्मसहितम्, अवस्थितं सत्यशीलपुरुषाधिष्ठितम् । दस्युलाघवगौरवापेक्षयोक्तो विकल्पः । दुर्गे स्थित एकैकस्मिन् ग्रामे ग्रामसमुदाये वा प्रजापालननियुक्तान् कुर्यात् । तदुक्तम्—

विष्णुना,तत्र स्वस्वग्रामाधिपान् कुर्यात् दशाध्यक्षानिति ।

मनुरपि,
ग्रामस्याधिपतिं कुर्याद्दशग्रामाधिपं तथा ।
विंशतीशं शतेशं च सहस्रपतिमेव च ॥ इति ।

विष्णुधर्मोत्तरेऽपि पुष्करवाक्यम्—
राजा धर्मभृतां श्रेष्ठः कृत्वा पुरुषविग्रहम् ।
पुरुषान् विनियुञ्जीत उत्तमाधमकर्मसु ॥
ग्रामस्याधिपतिं कुर्याद्दशग्रामाधिपं तथा ।
शतग्रामाधिपं वापि तथैव विषयेश्वरम् ॥ इति ।

आपस्तम्बोऽप्याह–ग्रामेषु नगरेषु चार्यान् शुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात्तेषां पुरुषास्तथागुणा एव स्युः सर्वतो नगरं योजनं तस्करेभ्यो रक्ष्यं क्रोशो ग्रामः । इति ।

विष्णुधर्मोत्तरे विशेषः ।
तेषां भागो विभागश्च भवेत्कर्मानुसारतः ।
नित्यमेव तथा कार्यं तेषां चारैः परीक्षणम् ॥ इति ।

याज्ञवल्क्योऽपि,
ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।
साधून् सम्मानयेद्राजा विपरीतांश्च घातयेत् ॥
उत्कोचजीविनो हीनद्रव्यान् कृत्वा विवासयेत् ।
सदानमानसत्कारान् श्रोत्रियान् वासयेत् सदा ॥ इति ।

विचेष्टितं, विविधं व्यापारम् । विपरीतान्, असाधून् । कार्यार्थं कार्यिणो धनादानमुत्कोचः । मानः, पूजा । विशेषान्तरमप्याह—

मनुः,
तेषां ग्राम्याणि कार्याणि पृथक्कार्याणि चैव हि ।
राज्ञोऽन्यः सचिवः स्निग्धस्तानि पश्येदतन्द्रितः ॥

पृथक्कार्याणि, परस्परकलहादीनि । पृथक्कायानीति क्वचित्पाठः । तदा विप्रतिपन्नानीत्यर्थः ।

नगरे नगरे चैकं कुर्यात्सर्वार्थचिन्तकम् ।

उच्चैःस्थानं घोररूपं नक्षत्राणामिव ग्रहम् ॥

उच्चैःस्थानं, कुलादिना महान्तम्, अथवा अत्युच्चोपवेशनस्थलम्। घोररूपं भयानकम्।

सताननुपरिक्रामेत्सर्वानायुक्तकान् स्वयम्।
तेषां वृत्तं परिणयेत्सम्यग्राष्ट्रेषु तच्चरैः ॥ इति।

अनुपरिक्रामेत्, यदा अन्यायिभिस्तेऽभियुक्ता अभिभूयन्ते तदा तान् बलेन पूरयेत् इत्यर्थः। वृत्तं चेष्टितम्। परिणयेत्, प्रापयेत्। तच्चरैः, नृपचरैः।

**विष्णुधर्मोत्तरे,**

ग्रामदोषान् समुत्पन्नान् ग्रामेशः प्रशमं नयेत्।
अशक्तौ दशपालस्य स तु गत्वा निवेदयेत् ॥
सोऽप्यशक्तः शतेशाय यथावद्विनिवेदयेत्।
शतेशो विषयेशाय सोऽपि राज्ञे निवेदयेत् ॥
अशक्तौ शक्तिमान् राम स्वयं युक्तिमुपाचरेत्।
राजा सर्वात्मना कुर्याद्विषये राम रक्षणम् ॥
वित्तमाप्नोति धर्मज्ञ विषयात्स सुरक्षितात्। इति

**मनुरप्याह—**

ग्रामदोषान् समुत्पन्नान् ग्रामिकः शनकैः स्वयम्।
शंसेद्ग्रामदशेशाय दशेशो विंशतीशिने ॥
विंशतीशस्तु तत्सर्वं शतेशाय निवेदयेत्।
शंसेद्ग्रामशतेशस्तु सहस्रपतये स्वयम् ॥ इति।

एतेषां वृत्तिमाह—

**स एव,**

यानि राजप्रदेयानि प्रत्यहं ग्रामवासिभिः।
अन्नपानेन्धनादीनि ग्रामिकस्तान्यवाप्नुयात् ॥

यानि राज्ञे प्रदेयानि अन्नादीनि तानि वृत्त्यर्थं ग्रामाधिपतिर्गृह्णीयात्, न त्वाब्दिकं करम्। आब्दिकं तु करमाप्तद्वारा राजैव गृह्णीयात्। तदुक्तम्—

विष्णुधर्मोत्तरे,

सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम्। इति।

दशी कुलं तु भुञ्जीत विंशी पञ्चकुलानि च।
ग्रामं ग्रामशताध्यक्षः सहस्राधिपतिः पुरम्॥

कुलं, ग्रामैकदेशः, पादुकाख्य इति कल्पतरुः। अन्ये तु कुलं हलद्वयकृष्टा भूः "कुलं तु द्विगुणं हलम्" इति स्मरणात्। हलोऽपि षड्गव एव।

अष्टागवं धर्म्यहलं षड्गवं जीवितार्थिनाम्।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्॥

इति हारीतस्मरणात्। तद्दशग्रामाधिपतिर्जीवितार्थे षड्गवहलद्वयकृष्टां भुवं भुञ्जीत। विंशी, विंशतिग्रामाधिपतिः पञ्चकुलानि भुञ्जीत। विशेषान्तरमाह—

विष्णुः, ग्रामदोषाणां ग्रामाध्यक्षः परिहारं कुर्यात्, अथाशक्तो दशग्रामाध्यक्षाय निवेदयेत्, सोऽप्यशक्तः शताध्यक्षाय, सोऽप्यशक्तो देशाध्यक्षाय, देशाध्यक्षोऽपि सर्वात्मना दोषमुच्छिन्द्यात्। इति।

सर्वात्मनेति। स्वशक्त्यतिक्रमेणाप्येतदर्थं, न तु स्वयमेव दोषमुच्छिन्द्यान्न वा राज्ञे निवेदयेदित्येवमर्थम्।

शतेशो विषयेशाय सोऽपि राज्ञे निवेदयेत्—

इति विष्णुधर्मोत्तरोक्तवचनविरोधात्।

मनुः,

राजा कर्मसु युक्तानां स्त्रीणां प्रेष्यजनस्य च।

प्रत्यहं कल्पयेद्वृत्तिं स्थानकर्मानुरूपतः ॥
पणो देयोऽवकृष्टस्य षडुत्कृष्टस्य वेतनम् ।
षाण्मासिकस्तथाऽऽच्छादो धान्यद्रोणस्तु मासिकः । इति ।

अवकृष्टस्य, गृहकर्मकरस्य । वेतनं, भक्तकम् । आच्छादः, आच्छादनवस्त्रद्वयम् । द्रोण, आढकचतुष्टयम् । तदुक्तम्—

अष्टमुष्टि भवेत्किञ्चित्किञ्चिचत्वारि पुष्कलम् ।
पुष्कलानि च चत्वारि आढकः परिकीर्तितः ॥
चतुराढको भवेद्द्रोण इति ।

शङ्खलिखितौ,

वाहनयोधानां सततमन्वीक्षणं, प्रतिमासं द्विसौवर्णिकी वृत्तिः, षाण्मास्यं स्मरणं, चातुर्मास्यं वा, स्वर्यातेषु दानमनुक्रोशो, विदितेनुष्वप्रदानं, कुलचारित्रशीलविद्यालक्षणगुणाधिकेषु सम्मानं प्रयुञ्जीत । इति ।

षाण्मास्यं स्मरणं, षड्भिर्मासैश्चतुर्भिर्वा मासैरतिक्रान्तैः सद्भिः स्मृत्वा वेतनं देयमित्यर्थः । स्वर्यातेषु, मृतेषु । मृतेषु योधेषु दानदययोरसम्भवात्तत्पुत्रादिषु दानदये विधेये । विदितेषु, युद्धादौ कृतकार्यतया प्रसिद्धेषु । अनुप्रदानं, वेतनादधिकं वस्त्रादि देयमित्यर्थः । निर्दोषस्य वृत्तिं न परिहरेदित्याह—

बृहस्पतिः,

गुणवानिति यः प्रोक्तः ख्यापितो जनसंसदि ।
कथं तेनैव वक्त्रेण निर्गुणः परिकथ्यते ॥
तस्मात्प्रभुत्वं वृत्तिं च निर्दोषस्य न चालयेत् ।
अनवस्थाप्रसङ्गः स्यान्नश्येतोपग्रहस्तथा ॥ इति ।

उपग्रहः, परिग्रहः । दुर्गादिनिवेशानन्तरं कर्त्तव्यान्तरमाह—

१ किञ्चिदष्टौ च पुष्कलमिति क्वचित्पाठः ।

स एव,

सम्यङ्निविष्टदेशस्तु कृतदुर्गस्तु शास्त्रतः।
कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम्॥ इति।

कण्टकाः, दुष्टसामन्तादयः।

मनुरपि,

यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति।
तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः॥

निर्दाता, प्ररूढक्षेत्रमध्यस्थिततृणादिलविता। कक्षं, तृणम्।

राष्ट्रेषु रक्षाधिकृताः परस्वादायिनः शठाः।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः॥ इति।

याज्ञवल्क्योऽपि,

चाटतस्करदुर्वृत्तमहासाहसिकादिभिः।
पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः॥
अरक्ष्यमाणाः कुर्वन्ति यत्किञ्चित्किल्बिषं प्रजाः।
तस्मात्तु नृपतेरर्द्धं यस्माद्गृह्णात्यसौ करान्॥ इति।

मत्स्यपुराणेऽपि,

यथा न स्यात्कृशीभावः प्रजानामनवेक्षया।
तथा राज्ञा विधातव्यं स्वराज्यं परिरक्षता॥
मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया।
सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः॥
भृतो वत्सो जातबलः कर्मयोग्यो यथा भवेत्।
तथा राष्ट्रं महाभाग भृतं कर्मसहं भवेत्॥
यो राष्ट्रमनुगृह्णाति राष्ट्रं स्वं परिरक्षति।
सञ्जातमुपजीवंस्तु विन्दते स महत्फलम्॥

---

१ राज्ञो हि इति मुद्रितमनुपुस्तके पाठः।

दुह्याद्धिरण्यं धान्यं च महीं राजा सुरक्षिता । इति ।

मनुरपि,

मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया ।
सोऽचिराद्भ्रश्यते स्वाम्याज्जीविताच्च सबान्धवः ॥
शरीरकर्षणात्प्राणाः क्षीयन्ते प्राणिनां यथा ।
तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात् ॥ इति ।

याज्ञवल्क्योऽपि,

अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिरक्षति ।
सोऽचिराद्विगतश्रीको नाशमेति सबान्धवः ॥
प्रजापीडनसन्तापात्समुद्भूतो हुताशनः ।
राज्ञां श्रियं कुलं प्राणान्नादग्ध्वा विनिवर्तते ॥ इति ।

कात्यायनोऽपि,

यत्र कर्माणि नृपतिः स्वयं पश्यति धर्मतः ।
तत्र साधुसमाचारा निवसेयुः सुखं प्रजाः ॥ इति ।

मनुः,

रक्षन्धर्मेण भूतानि राजा वध्यांश्च घातयन् ।
यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः ॥
यदधीते यद्यजते यज्जुहोति यदर्चति ।
तस्य षड्भागभाग्राजा सम्यग्भवति रक्षणात् ॥ इति ।

कात्यायनः,

प्रजानां रक्षणं नित्यं कण्टकानां च शोधनम् ।
द्विजानां पूजनं चैव एतदर्थं कृतो नृपः ॥ इति ।

बृहस्पतिः,

तत्प्रजापालनं प्रोक्तं त्रिविधं न्यायवेदिभिः ।
परचक्राच्चौरभयाद्बलिनोऽन्यायवर्त्तिनः ॥

परानीकस्तेनभयमुपायैः शमयेन्नृप ।
बलवत्परिभूतानां प्रत्यहं न्यायदर्शनैः ॥ इति ।
**मनुः,**
[1]सर्वतो धर्मषड्भागो राज्ञो भवति रक्षतः ।
अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः ॥
योऽरक्षन्बलिमादत्ते करं शुल्कं च पार्थिवः ।
प्रतिभोगं च दण्डं च स सद्यो नरकं व्रजेत् ॥
अरक्षितारं राजानं बलिषड्भागहारिणम् ।
तमाहुः सर्वलोकस्य समग्रमलहारकम् ॥
अनवेक्षितमर्यादं नास्तिकं विप्रलोपकम् ।
अरक्षितारमत्तारं नृपं विद्यादधोगतिम् ॥
यो हृत्वा गोसहस्राणि नृपो दद्यादरक्षिता ।
स शब्दमात्रफलभाग्राजा भवति तस्करः ॥
विप्रलोपकं, विप्रवृत्त्युच्छेदकर्तारम् । अत्तारं, भोक्तारम् ।
**शङ्खः,**
न व्रतैर्नोपवासेन न च यज्ञैः पृथग्विधैः ।
राजा स्वर्गमवाप्नोति प्राप्नोति परिपालनात् ॥ इति ।
**यमः,**
वानप्रस्थाः परिव्राजः श्रोत्रियाश्चाहिताग्नयः ।
षड्भागस्य प्रदातारो नैते राज्ञो हिरण्यदाः ॥ इति ।
षड्भागस्य, स्वकृतस्य श्रेयस इतिशेषः ।
**विष्णुधर्मोत्तरे,**
प्रजासुखं तु कर्त्तव्यं सुखमुद्दिश्य चात्मनः ।
किं यज्ञैस्तपसा तस्य प्रजा यस्य सुरक्षिता ॥

---

१ अयं श्लोको मुद्रितमनौ नोपलभ्यते ।

सुरक्षिता प्रजा यस्य स्वर्गस्तस्य गृहोपमः ।
अरक्षिताः प्रजा यस्य नरकं तस्य मन्दिरम् ॥
राम षड्भागमादत्ते सुकृताद्दुष्कृतादपि ।
धर्मभागं महाभाग सम्यग्रक्षणतत्परः ॥
अरक्षिता तथा सर्वं पापमाप्नोति भार्गव ।
न वै किञ्चिदवाप्नोति पुण्यभाक् पृथिवीपतिः ॥
आपन्नमपि धर्मिष्ठं प्रजा रक्षन्त्यथाऽऽपदि ।
तस्माद्धर्मार्थकामेन प्रजा रक्ष्या महीभृता ॥
सुभगाचाटदुर्वृत्तराजवल्लभतस्करैः ।
भक्ष्यमाणाः प्रजा रक्ष्याः कायस्थैश्च विशेषतः ॥
सुभगा, अतिप्रिया स्त्री, वेश्या वा । चाटाः, बहुभाषिणः ।
रक्षिता तद्भयेभ्यस्तु राज्ञा भवति सा प्रजा ।
अरक्षिता सा भवति तेषामेव हि भाजनम् ॥
साधुसंरक्षणार्थाय राजा दुष्टनिबर्हणम् ॥
तृणानामपि निर्माता सदा कुर्याज्जितेन्द्रियः ।
शास्त्रोक्तं बलिमादद्याद्धर्म्यं तत्तस्य जीवितम् ॥ इति ।
विष्णुः,
प्रजासुखैः सुखी राजा तद्दुःखैर्यश्च दुःखितः ।
स कीर्तियुक्तो लोकेऽस्मिन् प्रेत्य स्वर्गे महीयते ॥ इति ।
स्वराष्ट्रसंरक्षणवत्परराष्ट्रग्रहणे फलमाह—
याज्ञवल्क्यः,
य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने ।
तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ॥ इति ।
वशीकृतपरराष्ट्रविषये—
स एव विशेषमाह,

यस्मिन् देशे य आचारो व्यवहारः कुलस्थितिः ।
तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥ इति ।

इति राष्ट्रम् ।

अथ कोशः ।

तत्र विष्णुधर्मोत्तरे,

रिपुघातसमर्थः स्याद्वित्तवानेव पार्थिवः ।
परचक्रोपमर्द्देषु वित्तवान्नैव मुह्यति ॥
वित्तवानेव सहते सुदीर्घमपि विग्रहम् ।
बहुदण्डानपि परांस्तथा भिन्द्याद्धनाधिकः ॥

बहुदण्डान्, बहु दण्डयन्ति ते तथाविधास्तान्, दण्डार्जितबहुतरकोशान् । अत्र दण्डस्य बहुत्वं स्मृत्युक्तदण्डापेक्षया आधिक्यं, तेनान्यायार्जितधनान् जयतीतिव्याख्येयम् । तेन धनाधिको बहुतरधनवान् न्यूनधनान् जयतीत्येतदर्थकं वचनमनर्थकं न भवति । वस्तुतस्तु दण्डो बलमिति यथाश्रुतमेव सम्यक् ।

अन्नप्राणाः प्रजाः सर्वा धने तच्च प्रतिष्ठितम् ।
धनवान् धर्ममाप्नोति धनवान् काममश्नुते ॥
यस्यार्थस्तस्य मित्राणि यस्यार्थस्तस्य बान्धवाः ।
यस्यार्थः स पुमांल्लोके यस्यार्थः स च पण्डितः ॥
अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः ।
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥
विशेषो नास्ति लोकेषु पतितस्याधनस्य च ।
पतिता न तु गृह्णन्ति दरिद्रो न प्रयच्छति ॥
इत्यतो नानुगृह्णन्ति दरिद्रं पतितं जनाः ।
धनहीनस्य भार्यापि नैव स्याद्वशवर्त्तिनी ॥

गुणौघमपि चैवास्य नैव कश्चित्प्रकाशयेत् ।
बान्धवा विनिवर्त्तन्ते धनहीनात्तथा नरात् ॥
यथा पुष्पफलैर्हीनाच्छकुन्ता द्विज पादपात् ॥
द्विजेति रामसम्बोधनम् ।
दारिद्र्यमरणे चोभे केषां चित्सदृशे मते ।
सत्यं ह्यासाद्दरिद्रश्च मृतः श्रेयान्मतो मम ॥
कोशं राज्यतरोर्मूलं तस्माद्यत्नं तदर्जने ।
धर्मेणैव ततः कुर्यान्नाधर्मेण कथञ्चन ॥
धनैरधर्मसम्प्राप्तैर्यद्राष्ट्रमपिधीयते ।
तदेव याति विस्तारं विनाशाय दुरात्मनाम् ॥
सुकृतस्य पुराणस्य बलेन बलिनां वर ।
यद्यधर्मात्फलं शीघ्रं नाप्नुवन्ति दुरात्मनः ॥
पुराणस्य, जन्मान्तरकृतस्य ।
तथापि पूर्वकर्मान्ते तेन पापेन कर्मणा ।
विनश्यन्ति सभूतास्ते सपुत्रपशुबान्धवाः ॥
नरकेषु तथा तेषां यातना विविधाः स्मृताः ।
बहून्यब्दसहस्राणि ये नृपा राष्ट्रपीडकाः ॥
नित्यं राज्ञा तथा भाव्यं गर्भिणीसहधर्मिणा ।
यथा स्वं सुखमुत्सृज्य गर्भस्य सुखमावहेत् ॥
गर्भिणी तद्वदेवेह भाव्यं भूपतिना सदा ।
प्रजासुखं तु कर्तव्यं सुखमुद्दिश्य चात्मनः ॥
किं यज्ञैस्तपसा तस्य प्रजा यस्य सुरक्षिताः ।
सुरक्षिताः प्रजा यस्य स्वर्गस्तस्य गृहोपमः ॥
"प्रजा स्यात्सन्ततौ जने" इत्युभयत्र कोपः ।
अरक्षिताः प्रजा यस्य नरकं तस्य मन्दिरम् ॥

इत्यादिना प्रबन्धेन धनहीनस्य निन्दां विधाय धनार्जन-स्यावश्यकतां ब्रुवता तद्धनार्जनं धर्मेणैव विधेयमित्यादि प्रतिपादितम् ।

महाभारतेऽपि,

अधनं दुर्बलं प्राहुर्धनेन बलवान् भवेत् ।
सर्वं बलवतः पथ्यं सर्वं तरति कोशवत् ॥
अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप ।
प्राणयात्रा च लोकस्य विनार्थेन न सिद्ध्यति ॥
नाधनो धर्मकार्याणि यथावदनुतिष्ठति ।
धनाद्धि धर्मः स्रवति शैलादिव महाभरः ॥
अधनेनार्थकामेन चेतुं धर्मो न शक्यते ।
अर्थैरर्थानि बद्ध्यन्ते गजैरिव महागजाः ॥

चेतुं सञ्चेतुम् ।

अर्थेभ्यो हि प्रवृद्धेभ्यः सम्भृतेभ्य इतस्ततः ।
क्रियाः सर्वाः प्रवर्त्तन्ते पर्वतेभ्य इवापगाः ॥
कोशाक्षपटलं यस्य कोशवृद्धिकरैर्नरैः ।
पात्रभूतैश्च सततं धार्यते स नृपोत्तमः ॥
यो राजकोशं नश्यन्तमाचक्षीत नराधिपे ।
श्रोतव्यं तस्य च रहो रक्ष्यश्चामात्यतो भवेत् ॥ इति ।

एवं धनार्जनस्यावश्यकत्वे तद्धनार्जनं राज्ञा केन प्रकारेण कर्त्तव्यमित्यपेक्षिते—

मनुः,

क्रयविक्रयमध्वानं भक्तं च सपरिव्ययम् ।
योगक्षेमं च सम्प्रेक्ष्य वणिजो दापयेत्करान् ॥

कियता मूल्येन क्रीतमिदं पण्यवस्त्रलवणादिद्रव्यं, विक्री-

यमाणे वात्र किमङ्लभ्यते, कियद्दूरादानीतं, किमस्य चानयतो भक्तव्ययेन शाकसूपादिना च व्ययेन लग्नं, किमस्यारण्यादौ चौरादिभ्यो रक्षारूपेण क्षेमप्रतिविधानेन गतं, कोऽस्येदानीं लाभो योगक्षेमं वैतदवेक्ष्य वणिजः करान् दापयेत् । वणिग्भिरिति वा पाठः ।

यथा फलेन युज्येत राजा कर्त्ता च कर्मणाम् ।
तथा वीक्ष्य नृपो राष्ट्रे कल्पयेत्सततं करान् ॥

यथा राजा कर्मणां रक्षणादिरूपाणां फलेन, कर्ता, कर्षणो वणिगादिश्च, कर्मणां कृषिवाणिज्यादीनां, फलेन युज्येत सम्बध्येत, तथा निरूप्य करान् गृह्णीयात् । अत्र दृष्टान्तमाह—

यथाल्पाल्पमदन्त्याद्यं वार्य्योकोवत्सषट्पदाः ।
तथाल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाऽऽब्दिकः करः ॥

अदन्ति, भक्षयन्ति । आद्यम्, अदनाय भक्षणायार्हं रक्तक्षीरमध्वादि । वार्य्योकोवत्सषट्पदाः, जलौकोवत्सभ्रमराः । तथा राज्ञा मूलधनमनुच्छिन्दता अल्पाल्पो राष्ट्रादाब्दिकः करो ग्राह्यः । वस्तुविशेषविषये वाचनिकान् करान्—

स एवाह,

पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोः ।

ये पशुभिर्जीवन्ति, ये च हिरण्यस्य प्रयोगेण वार्धुषिकाः तेभ्यः पञ्चाशद्भागो वृद्धेर्ग्राह्यः ।

गौतमोऽपि, पशुहिरण्ययोरप्येके पञ्चाशद्भागमिति ।

अयं च पञ्चाशद्भागो वस्त्राणामपि । तथा च—

विष्णुः, द्विकं शतं पशुहिरण्येभ्यो वस्त्रेभ्यश्चेति ।

द्विकं शतं, शते द्वौ भागावित्यर्थः । अर्थात्पञ्चाशद्भाग एव । मांसादावाह—

स एव,

मांसमधुघृतौषधिगन्धपुष्पमूलफलरसशाकपत्राजिनमृद्भाण्डाश्मवैदलेभ्यः षाष्ठभागम् । इति ।

रसदारुपत्रेति क्वचित्पाठः । वैदलानि, विदलीकृतवंशनिर्मितानि शूर्पादीनि । दारूणि, काष्ठानि । षष्ठ एव षाष्ठस्तम् । अयं च भागः संवत्सरे संवत्सरे ग्राह्यः । तथा च–

विष्णुधर्मोत्तरे,

गन्धौषधिरसानां च पुष्पमूलफलस्य च ।

पत्रशाकतृणानां च वत्सरेण च चर्मणाम् ॥

वैणवानां च भाण्डानां सर्वस्याश्ममयस्य च ॥

षड्भागमेव चादद्यादिति ।

अयं तु विना द्रव्यव्ययेन कायक्लेशादिना निष्पादितानां मांसादीनामेकप्रकरणपठितानां, कर्षकैस्तुल्यन्यायत्वात् । द्रव्यव्ययेन क्रीतानां तु षष्टितमो भागो ग्राह्यः । तथा च–

गौतमः, पण्य इत्यनुवर्त्तमाने । मूलफलपुष्पौषधमधुमांसतृणेन्धनादीनां षाष्टिमिति ।

अत्र हरदत्तः । षाष्टः, षष्टितमो भागो विक्रेत्रा राज्ञे देय इति । यदि पण्यशब्दो द्रव्यव्ययेनार्जितेऽन्यथा वार्जिते रूढ इत्याग्रहस्तथापि विरोधादित्थमेव व्यवस्था युक्ता । यत्तु मनुनोक्तम्–

आददीताथ षड्भागं द्रुमांसमधुसर्पिषाम् ।

गन्धौषधिरसानां च पुष्पमूलफलस्य च ॥

पत्रशाकतृणानां च चर्मणां वैणवस्य च ।

मृन्मयानां च भाण्डानां सर्वस्याश्ममयस्य च ॥ इति ।

द्रुः, वृक्षः । मांसं, छागादेः । मधु, क्षौद्रम् । सर्पिः, घृतम् । गन्धा-

श्चन्दनादयः। ओषध्यो, गुडूच्यादयः। रसा, लवणादयः। पुष्पाणि, चम्पकादीनि। मूलानि, हरिद्रादीनि। पत्राणि, ताडीपत्रादीनि। तत्तु पूर्वोक्तोदाहृतविष्णुधर्मोत्तरोक्तसमानार्थम्। केचित्तु गौतमवाक्ये षाष्टमितिपदं षष्ट एव षाष्ट इति व्याख्याय मनुवाक्यविरोधेन हरदत्तव्याख्यां दूषयन्ति। तत्तु पूर्वोक्तव्यवस्थासम्भवेनाभियुक्तव्याख्यादूषणस्य कर्त्तुमशक्यत्वादयुक्तम्। धान्यविषये–

मनुराह,

धान्यानामष्टमो भागः षष्ठो द्वादश एव च।

अष्टमः षष्ठो द्वादश इति विकल्पो भूम्युत्कर्षापकर्षक्लेशलाघवगौरवापेक्षया द्रष्टव्यः। धान्यानां, व्रीहियवादीनाम्। अयं च भागः कर्षकेभ्य एव ग्राह्यः। तथा च–

गौतमः, राज्ञो बलिदानं कर्षकैर्दशममष्टमं षष्ठं वा। इति।

विष्णुस्तु षष्ठांशमेवाह–

प्रजाभ्योबल्यर्थं संवत्सरेण धान्यतः षष्ठमंशमादद्यादिति।

इदं तूत्कृष्टभूविषयम्। अत्र धान्यपदं व्रीहिपरम्। सर्वसस्येभ्यश्चेति पृथगन्यसस्यग्रहणात्। सस्यं व्रीह्यतिरिक्तमन्नजातम्। इयं भूम्युत्कर्षादिना व्यवस्था जीर्णानाम्। वस्तुतस्तु धान्यविशेषेणेयं व्यवस्था। तथा च—

विष्णुधर्मोत्तरे,

शूकधान्येषु षड्भागं शिम्बीधान्येष्वथाष्टमम्।
राजा बल्यर्थमादद्याद्देशकालानुरूपतः॥ इति।

शूकशिम्ब्यतिरिक्ते धान्ये मनुगौतमोक्तो द्वादशो दशमो वा भागः। तथा च–

बृहस्पतिः,

दशाष्टषष्ठं नृपतेर्भागं दद्यात्कृषीवलम्।
खिलाद्वर्षावसन्ताच्च कृष्यमाणाद्यथाक्रमम्॥ इति।

अस्यार्थः। खिलात्, चिरकालमकर्षणेनानुत्पन्नसस्यात्। वर्षावसन्तात्, वर्षाकाले उत्पन्नात्, वसन्तकाले चोत्पन्नात्। कृष्यमाणात्, प्रतिवर्षं कृष्यमाणात्। इदं च वर्षावसन्तादित्यनेनान्वितम्। अयमर्थः। खिलाद्यदुत्पन्नं तत्र दशममंशं, वर्षाकालोत्पन्नादष्टमं, वसन्तकालोत्पन्नात्षष्ठमंशमादद्यादिति। बृहस्पतिविष्णुधर्मोत्तरयोरेकवाक्यतया शूकधान्यं यवगोधूमादि वसन्तोत्पन्नं तत्र षष्ठमंशमादद्यादित्यादि सिद्धम्। अत्र विशेषम्—

स एवाह,

देशस्थित्या बलिं दद्युर्भूतं षण्मासवार्षिकम्।
एष धर्मः समाख्यातः कीनाशानां पुरातनः॥

भूतं, देशमर्यादया व्यवस्थापितम्। कीनाशानां, कर्षकाणाम्। आपदि एतदतिक्रमेऽपि न दोष इत्युक्तम्—

मनुना,

चतुर्थमाददानो हि क्षत्रियो भागमापदि।
प्रजा रक्षन् परं शक्त्या किल्विषात्प्रतिमुच्यते॥ इति।

विशेषान्तरमप्याह—

स एव,

स्वधर्मो विजये तस्य नाहवे स्यात्पराङ्मुखः।
शस्त्रेण वैश्यान् रक्षित्वा धर्म्यमाहारयेद्बलिम्॥
धान्येऽष्टमं विशां शुल्कं विंशं कार्षापणावरम्।
धर्मोपकरणाः शूद्राः कारवः शिल्पिनस्तथा॥

दद्युरितिशेषः।

यथा फलेन युज्येत राजा कर्त्ता च कर्मणाम्।
तथा वीक्ष्य नृपो राष्ट्रे कल्पयेत्सततं करान्॥

इति पूर्वोदाहृतमनुवाक्ये करान् कल्पयेत्, लाभक्षती दृष्ट्वा न्यूनाधिकभावमपि कुर्यादित्युक्तम्। तत्र क्वचित्क्वचिद्गौतमेन वचनेनैव सा प्रतिपादितास्ति।

सा यथा, विंशतिभागः शुल्कः पण्ये। इति।

अस्यार्थः। वणिग्भिर्यच्चन्दनादि विक्रीयते तत्पण्यं, तस्य मूलाधिकाया वृद्धेर्विंशतितमो भागो राज्ञे देयः। तस्य दीयमानस्य शुल्कसंज्ञा। अयं च विंशतितमो भागः परदेशपण्ये, स्वदेशपण्ये तु दशमोऽशः। तथा च–

विष्णुः, स्वदेशपण्याच्च शुल्कांशं दशममादद्यात्। इति।

यत्स्वदेशे क्रीत्वा स्वदेश एव विक्रीयते, तस्मात् लाभद्रव्यदशांशम्, परदेशपण्याच्च विंशतितमम्। यत्पण्यं देशान्तरे क्रीत्वा देशान्तरे विक्रीयते तस्माद्विंशतितमम्। अत्रापि लाभस्यैव। यत्तु,

मनौ—

शुल्कस्थानेषु कुशलाः सर्वपण्यविचक्षणाः।
कुर्युरर्घं यथापण्यं ततो विंशं नृपो हरेत्॥

इति मूलसहितस्य विंशांशः प्रतीयते। तथाप्यर्वे कृते मूलाधिकस्यैव विंशांशो ग्राह्यः। मूलद्रव्यांशग्रहणे तु वणिजां लाभो न स्यात्, तदभावे च वणिजां व्यवहारोच्छेद एव स्यात्। विष्णुधर्मोत्तरे तु–

स्वराष्ट्रपण्यादादद्याद्राजा विंशतिमं द्विज।

इति स्वदेशपण्येऽपि विंशतितमो भाग उक्तः, स तु क्लेश-

बाहुल्यविषयः, तेषामापद्विषयो वा । अस्मिन्नेव विषये परदेशपण्येऽपि—

तत्रैवोक्तम्,

शुल्कांशं परदेशाच्च निबोध गदतो मम ।
क्षयव्ययप्रवासांश्च यथाऽऽयासं द्विजोत्तम ॥
व्ययशुल्कप्रवासादि लङ्घयित्वा तथा द्विज ।
विंशांशं भागमादद्युर्दण्डनीया अतोऽन्यथा ॥ इति ।

सामुद्रपण्यशुल्के तु विशेष उक्तः—

सामुद्रः शुल्को वरं रूपमुद्धृत्य दशपणं स्मृतमन्येषामपि सारानुरूपमुद्धृत्य धर्म्यं प्रकल्पयेदिति ।

वरं, बहुमूल्यं मुक्तादिष्वेकमुद्धृत्य धनस्वामिने दत्त्वाऽवशिष्टस्य दशांशं गृह्णीयात् । अन्येषां सांयात्रिकातिरिक्तानामपि सारभूतमेकमुद्धृत्य धर्म्यं यथोचितं शुल्कं प्रकल्पयेत् । प्रनष्टाधिगते तु विशेषमाह—

मनुः,

आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः ।
दशमं द्वादशं वापि सतां धर्ममनुस्मरन् ॥ इति ।

प्रनष्टं, स्वामिसकाशात् भ्रष्टं, यत् शौल्किकस्थानपालादिभिरधिगतं राज्ञे समर्पितं, तस्मान्नृपः प्रथमवर्षे स्वामिने सर्वं दद्यात्, द्वितीयवर्षे च तस्माद्द्वादशं, तृतीयवर्षे दशमं, चतुर्थवर्षप्रभृति षष्ठं भागमादद्यात् । तदुक्तम्—

याज्ञवल्क्येन,

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥ इति ।

अत्र च "अर्वाक्संवत्सरात्स्वामी हरेत" इत्यनेन प्रथमवर्षे

स्वामिना सर्वमेव ग्राह्यम्, "हरेत परतो नृप" इत्यनेनाविशेषोक्तावपि राजा द्वितीयवर्षादौ संरक्षणनिमित्तं किञ्चिद्गृह्णीयात्। तत्र चौचित्येन द्वितीयवर्षे द्वादशं, तृतीये दशमं, चतुर्थप्रभृति षष्ठं भागं गृह्णीयात्। अत एव-

**मनुना,**

प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत्।
अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत्॥

इति त्र्यब्दपर्यन्तं रक्षणं,स्वामिने दानं चोक्तम्। तदेव याज्ञवल्क्यैकवाक्यतया अर्वाक्संवत्सरात्स्वामिने दानं किमप्यगृहीत्वैव, परतस्तु कश्चिद्भागं गृहीत्वैवेति सिद्धम्। त्र्यब्दपर्यन्तावस्थापनं तु यथास्थितद्रव्यस्यैव, परतो हरणं तु व्ययीकरणानुमतिपरम्। स्वामिन्यागते तु तत्समसङ्ख्यं स्वांशं गृहीत्वा दातव्यम्। तत्रापि स्वांशमध्ये चतुर्थोऽशोऽधिगन्त्रे देयः। तदुक्तम्—

गौतमेन, प्रनष्टस्वामिकमधिगम्य संवत्सरं राज्ञा रक्ष्यमूर्ध्वमधिगन्तुश्चतुर्थोऽशो राज्ञः शेषम्। इति।

अत्र संवत्सरमित्युपलक्षणम्। "राजा त्र्यब्दं निधापयेत्" इति मनुस्मरणात्। निधौ तु विशेषमाह-

**याज्ञवल्क्यः,**

राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्द्धं द्विजः पुनः।
विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः॥
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत्।
अनिवेदितविज्ञातो दाप्यस्तं दण्डमेव च॥ इति।

भूमौ चिरनिखातं द्रव्यं निधिः, तं राजा लब्ध्वा अर्द्धं ब्राह्मणेभ्यो दद्यात्, अर्द्धं कोशे स्थापयेत्। तथा च-

विष्णुः, निधिं लब्ध्वा तदर्द्धं ब्राह्मणेभ्यो दद्यात्, द्वितीयमर्धं कोशे प्रवेशयेत्। इति।

तच्छब्दात् यस्य स्वर्णादेरर्द्धीकरणं सम्भवति तस्यैवार्द्धं दद्यात्, न रत्नादेः, तस्य तु मूल्यकल्पनया दद्यात् इत्येवमर्थः। तदुक्तम्—

मनुना,

निधीनां हि पुराणानां धातूनामेव च क्षितौ।

अर्द्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हि सः॥ इति।

"द्वितीयमर्द्धं कोशे प्रवेशयेत्" इति पृथक्सूत्रकरणं कोशे स्थापनविधानार्थं, स्वामिन्यागते तद्दानावश्यम्भावात्। द्विजो, ब्राह्मणः क्षत्रियो वैश्यश्च श्रुताध्ययनसम्पन्नः सदाचारो निधिं लब्ध्वा, तं राज्ञे निवेद्य सर्वं गृह्णीयात्।अविदुषामेतेषां विशेष उक्तो—

विष्णुना,

निधिं ब्राह्मणो लब्ध्वा सर्वमादद्यात्, क्षत्रियश्चतुर्थमंशं राज्ञे दद्याच्चतुर्थमंशं ब्राह्मणेभ्योऽर्द्धमाददात्, वैश्यस्तु चतुर्थमंशं राज्ञे दद्याद्ब्राह्मणेभ्योऽर्द्धं चतुर्थमंशमादद्यादिति।

अत्र ब्राह्मण इति सामान्यवचनाद्योगीश्वरवाक्ये ब्राह्मणांशे विद्वत्त्वमविवक्षितम्। इतरेण, शूद्रेण, लब्धे निधौ राजा तस्मै षष्ठमंशं दद्याच्छेषं गृह्णीयादिति व्याख्येयम्।

अप्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरेदधिगन्त्रे षष्ठमंशं प्रदद्यात्—

इति वसिष्ठस्मरणात्,

निध्यधिगमो राजधनं न ब्राह्मणस्याभिरूपस्य, अब्राह्मणोऽप्याख्याता षष्ठमंशं लभेतेत्येके—

इति गौतमस्मरणाच्च। तथा च शूद्राय षष्ठं दत्त्वा शेषं

ग्राह्यमिति सिद्धम् । स्वयंगृहीतादर्द्धं ब्राह्मणेभ्यो दद्यादित्याह-

विष्णुः, शूद्रश्चावाप्तं द्वादशधा विभज्य पञ्चांशान् राज्ञे द-द्यात्पञ्चांशान् ब्राह्मणेभ्यो दत्त्वाऽवशिष्टमंशद्वयमादद्यादिति ।

इति विष्णुयाज्ञवल्क्यवाक्ययोर्व्यवस्थां केचिदाहुः । परे तु द्विजशब्दो ब्राह्मणवचनः, सामान्यशब्दस्य विशेषपरत्वात् । तच्च शक्त्या लक्षणया वेत्यन्यदेतत् । विष्णुवाक्यानुरोधाच्चात्र वि-द्वत्त्वमविवक्षितम् । एवमितरपदमपि शूद्रपरमेव । भवतामपि वासिष्ठवाक्ये यत्पदस्य गौतमवाक्ये चाब्राह्मणपदस्य विशेषपर-त्वावश्यकत्वात् । इत्थं च क्षत्रियवैश्ययोः साधारण्येन वि-ष्णूक्ता व्यवस्थेत्याहुः ।

यत्तु विज्ञानेश्वरेण द्विजपदं ब्राह्मणपरम्, इतरपदं चा-विद्वद्ब्राह्मणक्षत्रियादिपरमित्युक्तम् । तच्च विष्णुस्मृत्यदर्श-ननिबन्धनम् । विज्ञानेश्वरानुयायिनस्तु विज्ञानेश्वरव्याख्या-ततात्पर्यकयोगीश्वरविष्णुस्मृत्योर्विकल्पमाहुः, ते श्रद्धामन्द-धिय उपेक्ष्याः । अपरार्कस्तु इतरपदमविद्वद्ब्राह्मणपरमिति प्राह । तस्यायमाशयः । अविद्वद्ब्राह्मणपरं गोरक्षकादिब्राह्मणपरम्, तथा चैते षष्ठांशभागिन इत्यर्थः ।

गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥

इति स्मरणात् । अत्र विप्रपदं नीचकर्मकर्तृक्षत्रियवैश्ययो-रप्युपलक्षकम् । इत्थं च विद्वत्क्षत्रियवैश्ययोर्विष्णूक्ता व्यवस्थे-ति । विज्ञानेश्वरोक्तमप्येवमर्थकत्वे साधु सङ्गच्छते इति दिक् ।

अनिवेदित इति कर्त्तरि निष्ठा । तथा चायमर्थः—यो निधिं लब्ध्वा राज्ञे न निवेदितवान्, राज्ञा च निध्यधिगन्तृत्वेन विज्ञातः, स तं निधिं दाप्यः शक्त्यपेक्षया दण्डं चेति । तथा च—

विष्णुः, अनिवेदितविज्ञातस्य सर्वमपहरेदिति ।

अनुलोमजानां मूर्द्धावसिक्तादीनां क्षत्रियादिवन्निर्णयो मातृसमानधर्मत्वात् । प्रतिलोमजानां तु शूद्रवत् शूद्रसमानधर्मत्वादिति । यदा निधेः स्वामी आगत्य रूपसङ्ख्यादिभिः स्वत्वं विभावयति तदा तस्मै निधिं दद्यात्, षष्ठं द्वादशं वांशं राजा गृह्णीयात् । यथाऽऽह—

मनुः,

ममायमिति यो ब्रूयान्निधिं सत्येन मानवः
तस्याददीत षड्भागं राजा द्वादशमेव वा ॥ इति ।

षष्ठं द्वादशं वा इति विकल्पस्तु धनस्वामिनः सगुणत्वनिर्गुणत्वापेक्षया कालापेक्षया वा द्रष्टव्यः । इदं च भागग्रहणं ब्राह्मणभिन्नादेव । यथाऽऽह—

विष्णुः, स्वनिहितात् ब्राह्मणवर्जं द्वादशमंशं दद्युरिति ।

केचित्तु विष्णुवाक्यात् क्षत्रियादयो द्वादशं, ब्राह्मणः षष्ठं दद्यादित्याहुः । तच्चिन्त्यम् । यदा राजा निधिस्वामिन्यागते निधिं परावृत्य दद्यात्तदा ब्राह्मणाय दत्तं निध्यर्द्धं परावृत्य गृह्णीयात् । यथाऽऽह—

बृहस्पतिः, अस्वामिविक्रयं दानमाधिं च विनिवर्तयेदिति।

परकीयं निधिं स्वीयमिति वदन् राज्ञा तन्निधिसमं दण्डनीय इत्युक्तम्—

विष्णुना, परनिहितमिति ब्रुवंस्तत्समं दण्डमावहेदिति ।

ब्रुवन्, स्वनिहितमिति ब्रुवन् इत्यर्थः । आकरेषु विशेषमाह—

विष्णुः, आकरेभ्यः सर्वमादद्यात् । इति ।

आकराः, सुवर्णरत्नाद्युत्पत्तिस्थानानि ।

विष्णुधर्मोत्तरे,

धात्वाकराणां सर्वेषां मभुरुक्तो महीपतिः ।
निधिं पुराणं सम्प्राप्य कोशेऽर्द्धं तु प्रवेशयेत् ॥
अर्द्धं ब्रह्मणसात्कुर्याद्धर्मकामो महीपतिः । इति ।

नदीतीरसमुद्रयोः शुल्कग्रहणमाह—

मनुः,

पणं यानतरे दाप्यः पौरुषेऽर्द्धपणं तरे ।
पादं पशुश्च योषिच्च पादार्द्धं रिक्तकः पुमान् ॥ इति ।

"भाण्डपूर्णानि" इति अग्रे वक्ष्यति, तद्भिन्नविषयतास्य श्लोकस्य। तेन रिक्तशकटादियानविषये तरणे पणं दाप्यः। एवं पुरुषवाह्यो भारोऽर्द्धपणं दाप्यः । पशोः, गवादेः, योषितश्च पणचतुर्थांशः । भाररहितो मनुष्यः पणाष्टमभागं दाप्यः ।

तथा,

भाण्डपूर्णानि यानानि तार्यं दाप्यानि सारतः ।
रिक्तभाण्डानि यत्किञ्चित्पुमांसश्चापरिच्छदाः ॥ इति ।

भाण्डपूर्णानि, पण्यद्रव्यपूर्णानि शकटादीनि, द्रव्यगतमूल्योत्कर्षापकर्षेण तार्यं दाप्यानि । रिक्तभाण्डानि, अपरिच्छदा दरिद्राश्च, पणपादार्धदानेऽप्यक्षमा यत्किञ्चिद्दाप्याः । एतच्च पारावारगमने । नदीमार्गेण तु दूरदेशगमने देशकालापेक्षया कल्पनीयम् । तदुक्तम्—

तेनैव,

दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत् ।
नदीतीरेषु तद्विद्यात्समुद्रे नास्ति लक्षणम् ॥ इति ।

समुद्रे इदं लक्षणम्, इयं पणादिदानव्यवस्था नास्ति, किन्तु तत्र यथाव्यवस्थमेव देयमित्यर्थः । राज्ञा कर्षकवणिगादिभ्यः किमिति करो ग्राह्य इत्यपेक्षित आह—

कात्यायनः,

भूस्वामी तु स्मृतो राजा नान्यद्रव्यस्य सर्वदा ।
तत्फलस्य हि षड्भागं प्राप्नुयान्नान्यथैव तु ॥
भूतानां तन्निवासित्वात्स्वामित्वं तेन कीर्त्तितम् ।
तत्क्रियावलिषड्भागं शुभाशुभनिमित्तजम् ॥ इति ।

अस्यार्थः। राजा, भुवः स्वामी स्मृतः । अन्यद्रव्यस्य, भूमिसम्बद्धद्रव्यस्य, न स्वामी । अन्यथा, भूमिस्वाम्याभावे । भूतानां, प्राणिनाम् । तन्निवासित्वात्, भूनिवासित्वात् । स्वामित्वं, राज्ञ इति शेषः । इत्यतः तत्क्रियावलिषड्भागं प्राप्नुयात् ।

विष्णुरपि,

राजा च प्रजाभ्यः सुकृतदुष्कृतेभ्यः षष्ठांशभाक् । इति ।

तथा च मनुः,

पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन् ।
अधर्मादपि षड्भागो भवत्यस्य ह्यरक्षतः ॥ इति ।

यत्तु—

अरक्ष्यमाणाः कुर्वन्ति यत्किञ्चित्किल्विषं प्रजाः ।
तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान् ॥

इति याज्ञवल्क्यस्मरणं, तदत्यन्तारक्षणविषयम् । तस्मात्करादानं दृष्टादृष्टार्थत्वेनावश्यकम् । तेनैव च राज्ञो वृत्तिः । तथाच—

गौतमः, राज्ञोऽधिकं रक्षणं सर्वभूतानाम् ।
सर्वग्रहणादश्वत्थच्छेदाद्यपि परिहार्यम् ।

अधिकेन वृत्तिः ।

अधिकं रक्षणमित्युक्तं, तद्द्वारेण यदधिगतं करादिद्रव्यं तदधिकं, तेन वृत्तिः, पोष्यवर्गस्य हस्त्यश्वादीनां च पोषणम् । अनेन आपदोऽन्यत्र पूर्वसञ्चितेन न जीवेदित्युक्तम् । तथा च—

व्याघ्रः,

कुटुम्बपोषणं कुर्यान्नित्यं कोशं च वर्द्धयेत् ।
आपदोऽन्यत्र तं कोशं न गृह्णीयात्कदाचन ॥ इति ।

क्वचित्करग्रहणस्यापवादमाह—

विष्णुः, ब्राह्मणेभ्यः करादानं न कुर्यात्, ते हि राज्ञो धर्मकराः । इति ।

ब्राह्मणेभ्यः, कर्षकेभ्यो व्यवहर्तृभ्यः श्रोत्रियेभ्यश्च । तथा च-

मनुः,

म्रियमाणोऽप्याददीत न राजा श्रोत्रियात्करम् ।
न च क्षुधाऽस्य संसीदेच्छ्रोत्रियो विषये वसन् ॥ इति ।

ते हि राज्ञो धर्मकराः, ते पूर्वोक्ता ब्राह्मणाः सम्यग्रक्षिताः स्वधर्मषष्ठांशं ददतीत्यर्थः ।

मनुरपि,

स रक्ष्यमाणो राज्ञा यं कुरुते धर्ममन्वहम् ।
तेनायुर्वर्धते तस्य द्रविणं राष्ट्रमेव च ॥ इति ।

विष्णुधर्मोत्तरेऽपि, न गृह्णीयादित्युपक्रम्य ।

ब्राह्मणेभ्यस्तथा करम् ।
तेभ्यस्तद्धर्मलाभेन राज्ञो लाभः परं भवेत् ॥ इति ।

विशेषान्तरमाह—

मनुः,

अन्धो जडः पीठसर्पी सप्तत्या स्थविरश्च यः ।
श्रोत्रियेषूपकुर्वंश्च न दाप्यः केन चित्करम् ॥

पीठसर्पी पङ्गुः । श्रोत्रियेषूपकुर्वन्, श्रोत्रियाणां धनधान्यादिदानेनोपकारकः ।

तथा,

श्रोत्रियं व्याधितार्तौ च बालवृद्धावकिञ्चनम् ।

महाकुलीनमार्यं च राजा सम्पूजयेत्सदा ॥ इति

सम्पूजयेत्, स्वयंदानादिना पूजयेत् । अनेन तेभ्योऽपि न किञ्चिद्गृह्णीयादिति ।

आपस्तम्बः, अकरः श्रोत्रियः सर्ववर्णानां, स्त्रियः कुमारश्च प्राग्व्यञ्जनेभ्यो, ये च विद्यार्थां वसन्ति, तपस्विनश्च ये धर्मपराः, शूद्रश्च पादावनेक्ता, अन्धवधिरमूका रोगाविष्टाश्च, ये वृथा द्रव्यपरिग्रहे । इति ।

व्यञ्जनानि, श्मश्रुप्रभृतीनि । वृथा द्रव्यपरिग्रहे, अर्थसङ्ग्रहे विगतप्रयोजनाः ।

विष्णुधर्मोत्तरे तरविषये विशेष उक्तः—

दूतानां ब्राह्मणानां च राजाज्ञागामिनां तथा ।
स्त्रीणां प्रव्रजितानां च तरशुल्कं विवर्जयेत् ॥
गर्भिणी तु द्विमासादिस्तथा प्रव्रजितो मुनिः ।
ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे ॥ इति ।

लिङ्गिनो ब्रह्मचारिणः । वणिजां तु विशेषमाह—

गौतमः, पण्यं वणिग्भिरर्घापचयेन देयमिति ।

इदं शुल्कादधिकं मासिकं पण्यम् । तदुक्तम्—

बृहस्पतिना,

शुल्कं दद्युस्ततो मास एकैकं पण्यमेव च ।
अर्घावरं च मूल्येन वाणिजस्ते पृथक् पृथक् ॥ इति ।

शुल्कस्थानान्युक्तानि—

विष्णुधर्मोत्तरे,

दिशि दिश्येकमेव स्याच्छुल्कस्थानं नृपस्य तु ।

तदतिक्रमे दोष उक्तः—

तत्रैव,

तदतिक्रामतो द्रव्यं राजगामि विधीयते । इति ।

तत्, शुल्कस्थानं हट्टघट्टादि ।

विष्णुनापि,

शुल्कस्थानादपाक्रामन् सर्वापहारमाप्नुयात् । इति ।

इदं राजयोग्यबहुमूल्यहस्त्यश्वादिविषयम् । राजप्रतिपिद्धम्—'दुर्भिक्षे ऽन्नं देशान्तरे न नेयम्'इत्येतद्विषयं वा । यथोक्तम्—

मनुना,

राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च ।
तानि निर्हरतो लोभात्सर्वहारं हरेन्नृपः ॥ इति ।

तथाऽन्यत्र,

शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी ।
मिथ्यावादी च सङ्ख्याने दाप्योऽष्टगुणमत्ययम् ॥ इति ।

शिल्पादिविषये मासिककरमाह—

विष्णुः, शिल्पिनः कर्मोपजीविनश्च मासेनैकं कर्म कुर्युः ।

शिल्पिनो, लोहकारादयः । कर्मोपजीविनः, कारवो वर्द्धक्यादयः । चकारादन्योपजीविनः ।

मनुरपि,

कारुकाञ्छिल्पिनश्चैव शूद्रांश्चात्मोपजीविनः ।
एकैकं कारयेत्कर्म प्रतिमासं महीपतिः ॥ इति ।

एतेनैतेभ्योऽन्यन्न ग्राह्यम्, एष एवैषां शुल्कः । विशेषान्तरमाह—

वसिष्ठः,

नदीकक्षवनदाहशैलोपभोगा निष्कराः स्युस्तदुपजीविनो वा दद्युः प्रतिमासम् । इति ।

वनदाहो, दग्धं वनं तदुपजीविनः । तानेव ये उपजीवन्ति

सैव तेषां वृत्तिः। विशेषान्तरमाह—

**गौतमः**, एतेनात्मोपजीविनो व्याख्याता, नौचक्रिवन्तश्च, भक्तं तेभ्योऽपि दद्यात्। इति।

एतेन, प्रतिमासमेकाहकर्मकरणेन। आत्मोपजीविनः, भारवाहनटनर्त्तकादयः। नौचक्रिवन्तो, नौशकटव्यवहारिणः। भक्तं, दिवाभोजनपर्याप्तमन्नं शिल्प्यादिभ्यो देयम्।

**विष्णुधर्मोत्तरेऽपि**,

कर्म कुर्युर्नरेन्द्रस्य मासेनैकेन शिल्पिनः।
भक्तमात्रेण ये चान्ये स्वशरीरोपजीविनः॥ इति।

करस्याग्रहणे दोषमाह—

**मनुः**,

नोच्छिन्द्यादात्मनो मूलं परेषां चातितृष्णया।
उच्छिन्दन्नात्मनो मूलमात्मानं तांश्च नाशयेत्॥ इति।

करशुल्कादेरग्रहणमात्ममूलोच्छेदः। यथोचितादधिकग्रहणं परमूलोच्छेदः।

**तथा**,

अनादेयं नाददीत परिक्षीणोऽपि पार्थिवः।
न चादेयं समृद्धोऽपि सूक्ष्ममप्यर्थमुत्सृजेत्॥
अनादेयस्य चादानादादेयस्य च वर्जनात्।
दौर्बल्यं ख्याप्यते राज्ञः स प्रेत्येह विनश्यति॥
स्वादानाद्वर्णसंसर्गाद्दुर्बलानां च रक्षणात्।
बलं सञ्जायते राज्ञः स प्रेत्येह विवर्द्धते॥ इति।

स्वादानात्, स्वस्य न्यायागतस्य करादेरादानात्। वर्णसंसर्गात्, वर्णानां ब्राह्मणादीनां स्वस्वजातीयैर्वर्णैः सह संसर्गात् विवाहादिसम्बन्धात्, न तु वर्णान्तरेण संसर्गो येन

सङ्करादिदोषः स्यात्। अन्यायेन करग्रहणे दोषमाह—

याज्ञवल्क्यः,

अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिवर्द्धयेत्।
सोऽचिराद्विगतश्रीको नाशमेति सवान्धवः॥
प्रजापीडनसन्तापात्समुद्भूतो हुताशनः।
राज्ञः कुलं श्रियं प्राणान्नादग्ध्वा विनिवर्तते॥ इति।

कात्यायनोऽपि,

अन्यायेन हि यो राष्ट्रात्करं दण्डं च पार्थिवः।
सस्यभागं च शुल्कं चाप्याददीत स पापभाक्॥ इति।

धर्म्यकरग्रहणे फलमुक्तम्—

महाभारते,

धर्मार्जितो महाकोशो यस्य स्यात्पृथिवीपतेः।
सोऽत्यल्पप्रवरोऽप्यत्र पृथिवीमधितिष्ठति॥ इति।

कात्यायनोऽप्याह,

एवं प्रवर्तते यस्तु लोभं त्यक्त्वा नराधिपः।
तस्य पुत्राः प्रजायन्ते राष्ट्रं कोशश्च वर्द्धते॥ इति।

इति कोशः।

अथ दण्डः।

दण्ड्यन्ते अशिष्टा अनेनेति व्युत्पत्त्या दण्डशब्दो वलवचनः। तत्र—

महाभारते,

प्रकाशश्चाप्रकाशश्च दण्डोऽत्र परिकल्पितः।
प्रकाशोऽष्टविधस्तत्र गुह्यश्च वलवत्तरः॥
रथा नागा हयाश्चैव पादाताश्चैव भारत।
विष्टिर्नाविचराश्चैव दैशिका इति चाष्टमः॥
अनुरक्तेन हृष्टेन पुष्टेन च महीपते।

स्वल्पेनापि हि सैन्येन महीं जयति पार्थिवः ॥ इति ।

विष्टिः, बलात्कारेणाकृष्टः कर्मकरः । दैशिका, देशे भवाः पुरुषाः ।

इति दण्डः ।

अथ मित्रम् ।

याज्ञवल्क्यः,

हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ।
अतो यतेत तत्प्राप्त्यै रक्षेत्सत्यं समाहितः ॥ इति ।

मनुः,

हिरण्यभूमिसम्प्राप्त्या पार्थिवो न तथैधते ।
यथा मित्रं ध्रुवं लब्ध्वा कृशमप्यायतिक्षमम् ॥
धर्मज्ञं च कृतज्ञं च तुष्टप्रकृतिमेव च ।
अनुरक्तं स्थिरारम्भं लघु मित्रं प्रशस्यते ॥ इति ।

अस्य त्रैविध्यमुक्तम्—

मत्स्यपुराणे,

पितृपैतामहं मित्रं सामन्ताश्च तथा रिपोः ।
कृत्रिमं च महाभाग त्रिविधं मित्रमुच्यते ॥
तत्रापि च गुरुः पूर्वं भवेत्तत्रापि चाहृतः ।

सामन्तास्तु तस्य पीडया शत्रुत्वमापन्नाः । अत एव विष्णुधर्मोत्तरे—"अमित्रं च तथा रिपोः" इति पाठः । आहृतः, कृत्रिमः । इममेव प्रशंसति—

व्यासः,

न कश्चित्कस्य चिन्मित्रं न कश्चित्कस्य चिद्रिपुः ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ इति ।

महाभारते,

वेदितव्यानि मित्राणि बोद्धव्याश्चापि शत्रवः ।
एतत्सुसूक्ष्मं लोकेऽस्मिन् दृश्यते प्राज्ञसम्मतम् ॥
यो यस्मिन् जीवितस्यार्थे पश्यन् पीडां न जीवति ।
स तस्य तावन्मित्रं स्याद्यावन्न स्याद्विपर्ययः ॥
नास्ति मैत्री स्थिरा नाम न च चक्रमसौहृदम् ।
अर्थयुक्त्याभिजायन्ते मित्राणि रिपवस्तथा ॥
मित्रं च शत्रुतामेति कस्मिंश्चित्कालपर्यये ।
शत्रुश्च मित्रतामेति स्वार्थस्तु बलवत्तरः ॥ इति ।

याज्ञवल्क्यः,

स्वाम्यमात्यजना दुर्गं कोशो दण्डस्तथैव च ।
मित्राण्येताः प्रकृतयः सप्ताङ्गं राज्यमुच्यते ॥ इति ।

मनुः,

स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा ।
सप्त प्रकृतयो ह्येताः समस्ता राष्ट्रमुच्यते ॥
सप्तानां प्रकृतीनां तु राज्यस्यासां यथाक्रमम् ।
पूर्वं पूर्वं गुरुतरं जानीयाद्व्यसनं नृपः ॥
व्यसनं, व्यसनकारणम् । दोषवदिति शेषः ।
सप्ताङ्गस्यास्य राज्यस्य विष्टब्धस्य त्रिदण्डवत् ॥
अन्योन्यगुणवैशेष्यान्न किञ्चिदतिरिच्यते ।
तेषु तेषु हि कृत्येषु तत्तदङ्गं विशिष्यते ॥
येन यत्साध्यते कार्यं तत्तस्मिन् श्रेष्ठमुच्यते । इति ।

इति मित्रम् ।

अथोपायाः ।

तत्र याज्ञवल्क्यः,

उपायाः साम दानं च भेदो दण्डस्तथैव च ।

सम्यक्प्रयुक्ताः सिद्ध्येयुर्दण्डस्त्वगतिका गतिः ॥ इति ।

तत्र द्वयोर्मुख्यत्वमाह–

मनुः,

सामादीनामुपायानां चतुर्णामपि पण्डिताः ।
सामदण्डौ प्रशंसन्ति नित्यं राज्याभिवृद्धये ॥ इति ।

### तत्र साम ।

तत्र शत्रोस्तदीयानाममात्यादीनां च गुणवर्णनम् उपकारादिस्मारणं च विधाय स्वस्य कृतज्ञताख्यापनपुरःसरं स्वापराधक्षमापणम् । तदुक्तम्–

मत्स्यपुराणे,

मनुरुवाच ।

उपायांस्त्वं समाचक्ष्व सामपूर्वान्महाद्युते ।
लक्षणं च तथा तेषां प्रयोगं च सुरोत्तम ॥

मत्स्य उवाच ।

साम भेदस्तथा दानं दण्डश्च मनुजेश्वर ।
उपेक्षा च तथा माया इन्द्रजालं च पार्थिव ॥
प्रयोगाः कथिताः सप्त तन्मे निगदतः शृणु ।
द्विविधं कथितं साम तथ्यं चातथ्यमेव च ॥
तत्राप्यतथ्यं साधूनामाक्रोशायैव जायते ।
तत्र साधुः प्रयत्नेन सामसाध्यो नरोत्तम ॥
महाकुलीना ऋजवो धर्मनित्या जितेन्द्रियाः ।
सामसाध्या न चातथ्यं तेषु साम प्रयोजयेत् ॥
तथ्यं साम च कर्त्तव्यं कुलशीलादिवर्णनम् ।
तथा तदुपकाराणां कृतानां चैव वर्णनम् ॥
अनयैव तथा युक्त्या कृतज्ञाख्यापनं स्वकम् ।

एवं सान्त्वेन कर्त्तव्या वशगा धर्मतत्पराः ॥
साम्ना यद्यपि रक्षांसि गृह्णन्तीति परा श्रुतिः ।
तथाप्येतदसाधूनां प्रयुक्तं नोपकारकम् ॥
गृह्णन्ति, वशीकुर्वन्ति ।
अतिशङ्कमित्येवं पुरुषं सामवादिनम् ।
असाधवोऽवजानन्ति तस्मात्तेषु वर्जयेत् ॥

अतिशङ्कम्, अतिशयिता शङ्का यस्मिन् तादृशम् । सामवादिनं, सामप्रयोक्तारम् ।

ये शुद्धवंशा ऋजवः प्रणीता धर्मे स्थिताः सत्यपरा विनीताः।
ते सामसाध्याः पुरुषाः प्रदिष्टा मानोन्नता ये सततं च राजन् ॥इति।

अग्निपुराणे,

चतुर्विधं स्मृतं साम उपकारानुकीर्त्तनम् ।
मिथःसम्बन्धकथनं मृदुपूर्वं च भाषणम् ॥
आयतेर्दर्शनं वाचा तत्राहमिति चार्पणम् । इति ।

इति साम ।

अथ भेदः ।

स च शत्रुवर्गे परस्परं वैमत्योत्पादनम् । तदुक्तम्—

मत्स्यपुराणे,

मत्स्य उवाच ।

परस्परं तु ये द्विष्टाः क्रुद्धा भीतावमानिताः ।
तेषां भेदं प्रयुञ्जीत भेदसाध्या हि ते मताः ॥
ये तु येनैव दोषेण परस्मान्नाम बिभ्यति ।
ते तु तद्दोषपातेन भेदनीया भृशं ततः ॥
आत्मीयां दर्शयेदाशां परस्माद्दर्शयेद्भयम् ।

१ आत्मीयं दर्शयेद्दोषम् इति मात्स्ये पाठः ।

एवं हि भेदयेद्भिन्नान् यथावद्वशमानयेत् ॥
संहता हि विना भेदं शक्रेणापि सुदुःसहाः ।
भेदमेव प्रशंसन्ति तस्मान्नयविशारदाः ॥
स्वमुखेनाश्रयेद्भेदं भेदं परमुखेन च ।
परीक्ष्य साधु मन्येत भेदं परमुखाच्छ्रुतम् ॥
सद्यः स्वकार्यमुद्दिश्य कुशलैर्ये हि भेदिताः ।
भेदितास्ते विनिर्दिष्टा नैव राजार्थवादिभिः ॥
अन्तःकोपबहिःकोपौ यत्र स्यातां महीक्षिताम् ।
अन्तःकोपो महांस्तत्र नाशकः पृथिवीक्षिताम् ॥
सामन्तकोपो बाह्यस्तु कोपः प्रोक्तो महीभृतः ।
महिषीयुवराजाभ्यां तथा सेनापतेर्नृप ॥
अमात्यमन्त्रिणां चैव राजपुत्रे तथैव च ।
अन्तःकोपो विनिर्दिष्टो दारुणः पृथिवीक्षिताम् ॥
बाह्यकोपे समुत्पन्ने सुमहत्यपि पार्थिवः ।
शुद्धान्तस्तु महाभाग शीघ्रमेव जयी भवेत् ॥
शुद्धान्तः, अन्तःप्रकोपरहितः ।
अपि शक्रसमो राजा अन्तःकोपेन नश्यति ।
सोऽन्तःकोपः प्रयत्नेन तस्माद्रक्ष्यो महीक्षिता ॥
परान्तःकोपमुत्पाद्य भेदेन विजिगीषुणा ।
ज्ञातीनां भेदनं कार्यं परेषां विजिगीषुणा ॥
रक्ष्यश्चैव प्रयत्नेन ज्ञातिभेदस्तथाऽऽत्मनः ।
ज्ञातयः परितप्यन्ते सततं परितापिताः ॥
तथापि तेषां कर्त्तव्यं सुगम्भीरेण चेतसा ।
ग्रहणं दानमानाभ्यां भेदस्तेभ्यो भयङ्करः ॥
न ज्ञातिमनुगृह्णन्ति नाज्ञातिं विश्वसन्ति च ।

ज्ञातिभिर्भेदनीयास्तु रिपवस्तेन पार्थिवैः ।
भिन्ना हि शक्या रिपवः प्रभूताः स्वल्पेन सैन्येन निहन्तुमाजौ।
सुसंहतैश्चापि ततस्तु भेदः कार्यो रिपूणां नयशास्त्रविद्भिः॥इति।

स्वपक्षभेदनिषेधस्तूक्तो—

ब्रह्मपुराणे,

स्वपक्षभेदो यत्नेन न कर्तव्यः कदाचन ।
दुर्गं कोशश्च दण्डश्च परराष्ट्रभयं विना ॥
स्वभेदेनैव नश्यन्ति वद्धमूला अपि प्रजाः ।

स्वभेदेन, स्वपक्षभेदेन, परराष्ट्रभयं विनापि दुर्गादिकं नश्यतीत्यर्थः ।

इति भेदः ।

अथ दानम् ।

तच्च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पादनानुकूलो व्यापारः । तस्य दानस्य पञ्चविधत्वमुक्तम्—

अग्निपुराणे,

यः सम्प्राप्तधनोत्सर्ग उत्तमाधममध्यमः ।
प्रतिदानं तदा तस्य गृहीतस्यानुमोदनम् ॥
द्रव्यदानमपूर्वं च तथैवेष्टप्रवर्तनम् ।
देयं च प्रतिमोक्षश्च दानं पञ्चविधं स्मृतम् ॥ इति ।

तस्य प्रशंसा चोक्ता—

मत्स्यपुराणे,

मत्स्य उवाच ।

सर्वेषामप्युपायानां दानं श्रेष्ठतमं मतम् ।
सुदत्तेनेह भवति दानेनोभयलोकजित् ॥
न सोऽस्ति राजन् दानेन वशगो यो न जायते ।

दानेन वशगा देवा भवन्तीह सदा नृणाम् ॥
दानमेवोपजीवन्ति प्रजाः सर्वा नृपोत्तम ।
प्रियो हि दानवांल्लोके सर्वस्यैवोपजायते ॥
दानवानचिरेणैव तथा राजा परान् जयेत् ।
दानवानेव शक्नोति संहतान् भेदितुं परान् ॥
यद्यप्यलुब्धगम्भीराः पुरुषाः सागरोपमाः ।
न गृह्णन्ति तथाऽप्येते जायन्ते पक्षपातिनः ॥
अन्यत्रापि कृतं दानं करोत्यन्यान् यथा वशे ।
उपायेभ्यः प्रशंसन्ति दानं श्रेष्ठतमं जनाः ॥
दानं श्रेयस्करं पुंसां दानं श्रेष्ठतमं परम् ।
दानवानेव लोकेषु पुत्रत्वे ध्रियते सदा ॥

न केवलं दानपरा जयन्ति भूलोकमेकं पुरुषप्रवीराः ।
जयन्ति ते राजसुरेन्द्रलोकं सुदुर्जयो यो विबुधाधिवासः ॥ इति ।

तैत्तिरीयश्रुतिरपि,

दानं यज्ञानां वरूथं दक्षिणा, लोके दातारं सर्वभूतान्युपजीवन्ति, दानेनारातीरपानुदन्त, दानेन द्विषन्तो मित्रा भवन्ति, दाने सर्वं प्रतिष्ठितं, तस्माद्दानं परमं वदन्तीति ।

इति दानम् ।

अथ दण्डः ।

स च वित्तस्य शरीरस्य वा पीडनम् । दमयतीति दण्ड इति व्युत्पत्तेः । तत्र—

मनुः,

तदर्थं सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥

तदर्थं, राज्ञः प्रयोजनसिद्धये। प्रजानां रक्षणं राजधर्मः स च दण्डं विना कर्तुमशक्य इति दण्ड एव रक्षक इत्युच्यते। तस्य स्तुतिर्धर्ममिति।

तस्य सर्वाणि भूतानि स्थावराणि चराणि च।
भयाद्भोगाय कल्पन्ते स्वधर्मान्न चलन्ति च॥

तस्य, दण्डस्य। ननु दण्डस्य भयहेतुत्वात् "भीत्रार्थानां भयहेतुः" इति पञ्चमी युक्ता? उच्यते। सम्बन्धमात्रविवक्षाया भयहेतुत्वं नास्तीति षष्ठी। तस्य चरमोपायत्वमुक्तम्-

मत्स्यपुराणे,

मत्स्य उवाच।

न शक्या ये वशे कर्त्तुमुपायत्रितयेन तु।
दण्डेन तान् वशीकुर्याद्दण्डो हि वशकृन्नृणाम्॥
सम्यक्प्रणयनं तस्य तथा कार्यं महीक्षिता।
धर्मशास्त्रानुसारेण सुसहायेन धीमता॥
तस्यासम्यक्प्रणयनं त्रिदशानपि पीडयेत्। इति।

तत्र विशेषमाह—

मनुः,

तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः।
यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्तिषु॥

शक्तिं, सहनशक्तिम्।

समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः॥
यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः।
शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः॥ इति।

यथा शूले मत्स्यान् पक्त्वा भक्षयन्ति, तथा बलिनोऽल्प-

मलान् हिंसित्वा तद्धनादिकं भक्षयेयुरित्यर्थः ।

मात्स्येऽपि,

वानप्रस्थांश्च धर्मज्ञान्निर्ममान्निष्परिग्रहान् ॥
स्वदेशे परदेशे वा धर्मशास्त्रविशारदान् ।
समीक्ष्य प्रणयेद्दण्डं सर्वं दण्डे प्रतिष्ठितम् ॥
आश्रमी यदि वा वर्णी पूज्यो वाऽथ गुरुर्महान् ।
नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ॥
अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
इह राज्यात्परिभ्रष्टो नरकं च प्रपद्यते ॥
तस्माद्राज्ञा विनीतेन धर्मशास्त्रानुसारतः ।
दण्डप्रणयनं कार्यं लोकानुग्रहकाम्यया ॥
यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥
बालवृद्धातुरयतिद्विजस्त्रीविधवाबलाः ।

अबलाः, बलरहिताः ।

मात्स्यन्यायेन भक्ष्येरन् यदि दण्डं न पातयेत् ॥
देवदैत्योरगनराः सर्वे भूतपतत्रिणः ॥
उत्क्रामेयुश्च मर्यादां यदि दण्डो न पालयेत् ।
एष ब्रह्माभिशापेषु सर्वप्रहरणेषु च ॥
सर्वविक्रमकोपेषु व्यवसाये च तिष्ठति ।
पूज्यन्ते दण्डिनो देवा न पूज्यन्ते त्वदण्डिनः ॥
न ब्राह्मणं विधातारं न पूषार्यमणावपि ।
यजन्ते मानवाः केचित्प्रशान्ताः सर्वकर्मसु ॥
रुद्रमग्निं च शक्रं च सूर्याचन्द्रमसौ तथा ।
विष्णुं देवगणांश्चान्यान् दण्डिनः पूजयन्ति च ॥ इति ।

मनुरपि,

सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः ।
दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥

स्वभावाच्छुचिर्नरो दुर्लभः,किन्तु दण्डेनैव जितः पथि स्थाप्यते।

देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः ॥

भोगाय कल्पन्ते, स्वपथप्रवृत्ता भवन्ति । तथा च–

श्रुतिः,

भयात्सूर्यः प्रतपति भयात्तपति चन्द्रमाः ।
भयादग्निश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ इति ।

मनुः,

दुष्येयुः सर्ववर्णाश्च भिद्येरन् सर्वसेतवः ।
सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥ इति ।

दुष्येयुरिति । नीचवर्णा उत्तमवर्णस्त्रीगमनेन सङ्करं प्राप्नुयुरित्यर्थः । अत एव शास्त्रोक्तमर्यादा भिद्येरन् ।

मत्स्यपुराणे,

दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥
राजदण्डभयादेव पापाः पापं न कुर्वते ॥
यमदण्डभयादेके परस्परभयादपि ।
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥
अन्धे तमसि मज्जेयुर्यदि दण्डो न पालयेत् ।
यस्माद्दण्डो दमयति अदण्ड्यान् दण्डयत्यपि ॥
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ।
दण्डस्य भीतैस्त्रिदशैस्समेतै —

भोगो धृतः शूलधरस्य यज्ञे ।
चक्रुः कुमारं ध्वजिनीपतिं च
वरं शिशूनां च भयाद्बलस्थम् ॥ इति ।

शिशूनां वरं,श्रेष्ठम्,अतिशिशुमित्यर्थः।तं कुमारं कार्त्तिकेयं बलस्थं सैन्यमध्यस्थं सन्तं ध्वजिनीपतिं सेनापतिं चक्रुरित्यर्थः। महाभारते अर्जुनवाक्यम्–

धर्मं संरक्षते दण्डस्तथैवार्थं नराधिप ।
कामं च रक्षते दण्डस्त्रिवर्गो दण्ड उच्यते ॥
दण्डेन रक्ष्यते धान्यं धनं दण्डोऽभिरक्षति ।

तथा,

वाचा दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम् ।
दानदण्डः स्मृतो वैश्यो निर्दण्डः शूद्र उच्यते ॥
असम्मोहाय मर्त्यानामर्थसंरक्षणाय च ।
मर्यादा स्थापिता लोके दण्डसंज्ञा विशाम्पते ॥
यत्र श्यामो लोहिताक्षो दण्डश्चरति सूद्यतः ।
प्रजास्तत्र न मुह्यन्ते नेता चेत्साधु पश्यति ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥
नाभीतो यजते राजन् नाभीतो दातुमिच्छति ।
नाच्छित्वा परमर्माणि नाकृत्वा कर्म दुष्करम् ॥
नाहत्वा मत्स्यघाती च प्राप्नोति महतीं श्रियम् ।
नाघ्नतः कीर्त्तिरस्तीह न वित्तं न पुनः प्रजाः ॥
इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ।
य एव देवा हन्तारस्तांल्लोकोऽर्चयते भृशम् ॥
हन्ता रुद्रस्तथा स्कन्दः शक्रोऽग्निर्वरुणो यमः ।

हन्ता कालस्तथा वायुर्मृत्युर्वैश्रवणो रविः ॥
वसवो मरुतः साध्या विश्वेदेवाश्च भारत ।
एतान् देवान्नमस्यन्ति प्रतापप्रणता जनाः ॥
न ब्रह्माणं न धातारं न पूषाणं कथञ्चन ।
मध्यस्थान् सर्वभूतेषु दान्तान् शमपरायणान् ॥
यजन्ते मानवाः केचित्प्रशस्ताः सर्वकर्मसु ।
न हि पश्यामि जीवन्तं लोके कश्चिदहिंसया ॥
सत्त्वैः सत्त्वानि जीवन्ति दुर्बलैर्बलवत्तराः ।
नकुलो मूषकानत्ति बिडालो नकुलं तथा ॥
बिडालमत्ति श्वा राजन् श्वानं व्यालमृगस्तथा ।
व्यालमृगो, व्याघ्रः ।
तानत्ति पुरुषः सर्वान् पश्य धर्मो यथागतः ॥
प्राणस्यान्नमिदं सर्वं जङ्गमं स्थावरं च यत् ।
विधानं वेदविहितं तत्र विद्वान्न मुह्यति ॥
यथा सृष्टोऽसि राजेन्द्र तथा भवितुमर्हसि ।
नावधेन हि कुर्वन्ति तापसाः प्राणयापनाम् ॥
उदके बहवः प्राणाः पृथिव्यां पर्वतेषु च ।
न च कश्चिन्न तान् हन्ति किमन्यत्प्राणयापनात् ॥
सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानि चित् ।
पक्ष्मणोऽपि निपातेन येषां स्यात्स्कन्धपर्ययः[1] ॥
ग्रामान्निष्क्रम्य मुनयो विनीतक्रोधमत्सराः ।
वने कुटुम्बधर्माणो दृश्यन्ते परिमोहिताः ॥
भूमिं भित्त्वौषधीश्छित्त्वा वृक्षादीनण्डजान् पशून् ।
मनुष्यास्तन्वते यज्ञांस्ते स्वर्गं प्राप्नुवन्ति च ॥

१ देहविपर्ययः ।

दण्डनीत्यां प्रणीतायां सर्वे सिद्ध्यन्त्युपक्रमाः ।
कौन्तेय सर्वभूतानां तत्र मे नास्ति संशयः ॥
दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः ।
जले मत्स्यानिवाभक्ष्यन्दुर्बलान् बलवत्तराः ॥
सत्यं चेदं ब्रह्मणा पूर्वमुक्तं दण्डः प्रजा रक्षति साधु नीतः ।
पश्याग्नयश्च प्रतिशाम्यभीताः सन्तर्जिता दण्डभयाज्ज्वलन्ति॥
अन्धन्तम इवेदं स्यान्न प्रज्ञायेत किञ्चन ।
दण्डश्चेन्न भवेल्लोके विभजन्साध्वसाधुनी ॥
येऽपि सम्भिन्नमर्यादा नास्तिका वेदनिन्दकाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनाशु निपीडिताः ॥
सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्जनः ।
दण्डस्य हि भयाद्भीतो भोगायैव प्रवर्त्तते ॥
चातुर्वर्ण्यप्रमोदाय सुनीतिनयनाय च ।
दण्डो विधात्रा विहितो धर्मार्थौ चानुरक्षितुम् ॥
यदि दण्डान्न लभ्येयुर्वयांसि श्वापदानि च ।
अद्युः पशून्मनुष्यांश्च यज्ञार्थानि हवींषि च ॥
अद्युः, भक्षयेयुः ।
न ब्रह्मचार्यधीयीत कल्याणीं[1] न दुहेत गाम् ।
न कन्योद्वहनं गछेद्यदि दण्डो न पालयेत् ॥
चरेयुर्नाश्रमे धर्मं यथोक्तं विधिमाश्रिताः ।
न विद्यां प्राप्नुयात्कश्चिद्यदि दण्डो न पालयेत् ॥
विष्वग्लोपः प्रवर्त्तेत भिद्येरन्सर्वसेतवः ।
ममत्वं न प्रजानीयुर्यदि[2] दण्डो न पालयेत् ॥

---

१ अपत्यवतीम् ।  २ लोक इति शेषः ।

न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि दण्डो न पालयेत् ॥
न प्रेष्या वचनं कुर्युर्न बाला जातु कस्य चित् ।
न तिष्ठेद्युवती धर्मे यदि दण्डो न पालयेत् ॥
दण्डे स्थिताः प्रजाः सर्वा भयं दण्डे विदुर्बुधाः ।
दण्डे स्वर्गो मनुष्याणां लोकोऽयं च प्रतिष्ठितः ॥
न तत्र कूटं पापं वा वञ्चना वापि दृश्यते ।
यत्र दण्डः सुविहितश्चरते रिपुबाधनः ॥
हविः श्वापि लिहेद्दृष्ट्वा दण्डश्चेन्नोद्यतो भवेत् ।
हरेत्काकः पुरोडाशं यदि दण्डो न पालयेत् ॥
अर्थे सर्वे समारम्भाः समायत्ता न संशयः ।
स च दण्डसमायत्तः पश्य दण्डस्य गौरवम् ॥ इति ।

स च दुर्वृत्तेषु निपात्य इत्याह—

याज्ञवल्क्यः,

तदवाप्य नृपो दण्डं दुर्वृत्तेषु निपातयेत् ।
धर्मो हि दण्डरूपेण ब्रह्मणा निर्मितः पुरा ॥
स नेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना ।
सत्यसन्धेन कृतिना सुसहायेन धीमता ॥

नेतुं, प्रणेतुम् । न्यायतः, यथाशास्त्रम् । सत्यसन्धेन, सत्यप्रतिज्ञेन ।

यथाशास्त्रं प्रयुक्तः सन्सदेवासुरमानुषम् ।
जगदानन्दयेत्सर्वमन्यथा तु प्रकोपयेत् ॥
अधर्मदण्डनं स्वर्गकीर्त्तिलोकविनाशनम् ।
सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्त्तिजयावहम् ॥
अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा ।

नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ॥
अर्घ्यः, पूज्यः।
यो दण्ड्यान्दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत्।
इष्टं स्याच्छ्रुतिभिस्तेन समाप्तवरदक्षिणैः ॥
इति सञ्चिन्त्य नृपतिः क्रतुतुल्यफलं पृथक्।
व्यवहारान् स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् ॥
कुलानि जातीः श्रेणीश्च गणान् जनपदानपि।
स्वधर्माच्चलितान्राजा विनीय स्थापयेत्पथि ॥ इति।

कुलानि, कुटुम्बादीनि। जातीः, ब्राह्मणादीन्। श्रेणीः, सुवर्णकारादेः। गणान्,मठब्राह्मणादीन्। जनपदान्, राष्ट्राणि। दण्ड्यश्च द्विविधः—विहिताननुष्ठाता निषिद्धानुष्ठाता च। तदाह—

**नारदः,**

यो यो वर्णोऽपहीयेत यश्चोद्रेकमनुव्रजेत्।
तं तं दृष्ट्वा स्वतो मार्गात्प्रच्युतं स्थापयेत्पथि ॥
अशास्त्रोक्तेषु चान्येषु पापयुक्तेषु कर्मसु।
प्रसमीक्ष्यात्मना राजा दण्डं दण्ड्येषु पातयेत् ॥ इति।

अपहीयेत,स्वधर्माच्च्युतो भवेदित्यर्थः।उद्रेको,निषिद्धं कर्म।

**मनुरपि,**

पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः।
नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति ॥ इति।

एतच्च मातापित्रादिव्यतिरेकेण। "अदण्ड्यौ मातापितरौ स्नातकपुरोहितपरिव्राजकवानप्रस्थाः श्रुतशीलशौचाचारवन्तस्ते-हि धर्माधिकारिण" इति विज्ञानेश्वरलिखितस्मृतेः। मातापितृव-द्बहुश्रुतोऽपि न दण्ड्यः। "स एष बहुश्रुतो भवति" इत्युपक्रम्य—

"षड्भिः परिहार्यो राज्ञा अवध्यश्चावन्ध्यश्चादण्ड्यश्चावहि-

ष्कार्यश्चापरिवाद्यश्चापरिहार्यश्च" इतिगौतमोक्तेः। अन्यः पुनर्ब्राह्मणो दण्ड्य एव।

सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्-

इति याज्ञवल्क्योक्तेः।

मनुः,

तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम्।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः॥
तस्य सर्वाणि भूतानि स्थावराणि चराणि च।
भयाद्भोगाय कल्पन्ते स्वधर्म्मान्न चलन्ति च॥
तं देशकालौ शक्तिं च विद्यां चावेक्ष्य तत्त्वतः।
यथार्हतः सम्प्रणयेन्नरेष्वन्यायवर्त्तिषु॥
स राजा पुरुषो दण्डः स नेता शासिता च सः।
चतुर्णामाश्रमाणां च धर्मस्य प्रतिभूः स्मृतः॥
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।
दण्डः सुप्तेषु जागर्त्ति दण्डं धर्मं विदुर्बुधाः॥
समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयति प्रजाः।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः॥
यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः।
शूले मत्स्यानिवापक्ष्यन्दुर्बलान् बलवत्तराः॥
अद्यात्काकः पुरोडाशं श्वाऽवलिह्याद्धविस्तथा।
स्वाम्यं च न स्यात्कस्मिंश्चित्प्रवर्त्तेताधरोत्तरम्॥
सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः।
दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते॥
देवदानवगन्धर्वा रक्षांसि पतगोरगाः।
तेऽपि भोगाय कल्पन्ते दण्डेनैव निपीडिताः॥

दुष्येयुः सर्ववर्णाश्च भिद्येरन्सर्वसेतवः ।
सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥ इति ।
स च दण्डो द्विविधः । तदाह—
**नारदः,**
शारीरश्चार्थदण्डश्च दण्डश्च द्विविधः स्मृतः ।
शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्त्तितः ।
काकिन्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च ॥ इति ।
यत्तु मनुना—
धिग्दण्डं प्रथमं कुर्याद्वाग्दण्डं तदनन्तरम् ।
तृतीयं धनदण्डं तु वधदण्डमतः परम् ॥

इति चतुर्विधत्वमुक्तम् । तत्राद्यं द्वयमल्पापराधविषयम् । वधदण्डः, शारीरो दण्डः । स च ब्राह्मणव्यतिरिक्तस्य कर्त्तव्य इति तत्स्थानानि वदतोक्तं मनुना ।

दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत् ।
त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥
उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् ।
चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ॥ इति ।

एतेषां यन्निमित्तोऽपराधस्तत्रैवोपस्थादौ निग्रहः कार्यः । धनदानाशक्तस्य दण्डद्वयमाह—
**कात्यायनः,**
धनदानासहं बुद्धा स्वाधीनं कर्म कारयेत् ।
अशक्तौ बन्धनागारं प्रवेश्यो ब्राह्मणादृते ॥ इति ।
यत्त्वापस्तम्बः, चक्षुर्निरोधो ब्राह्मणस्येति ।

तत् पुरान्निर्वासनकाले वस्त्रादिना चक्षुर्निरोधः कार्य इति व्याख्येयम् । निरोधपदस्वारस्यात्पूर्वोदाहृतवचनविरोधाच्च ।

शारीरदण्डवद्यार्थदण्डोऽप्युत्तमसाहसादिभेदेनानेकश्चेति तदुपयोगिकृष्णलादिनिरूपणम् । तत्र—

याज्ञवल्क्यः,

जालसूर्यमरीचिस्थं त्रसरेणू रजः स्मृतम् ।
तेऽष्टौ लिक्षास्तु तास्तिस्रो राजसर्षप उच्यते ॥

गवाक्षप्रविष्टादित्यकिरणेषु यत्सूक्ष्मं वैशेषिकोक्तरीत्या त्र्यणुकत्रयारब्धं रजो दृश्यते तत् त्रसरेणुरिति मन्वादिभिः स्मृतम् ।

गौरस्तु ते त्रयः षट् ते यवो मध्यस्तु ते त्रयः ।
कृष्णलः पञ्च ते माषास्ते सुवर्णस्तु षोडश ॥
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम् । इति ।

इदं तु कनकपरिमाणम् । रजतपरिमाणमपि—

तेनैवोक्तम्,

द्वे कृष्णले रौप्यमाषो धरणं षोडशैव ते ।
शतमानं तु दशभिर्धरणैः पलमेव तु ॥
निष्कं सुवर्णाश्चत्वारः—इति ।

कृष्णलद्वयपरिमितो रौप्यस्य माषो भवति । ते षोडश माषा रौप्यस्य धरणम् । दशभिर्धरणैः शतमानसंज्ञकं रौप्यस्य परिमाणम्, तदेव च पलम् । चत्वारः सुवर्णा रौप्यस्य निष्कः । ताम्रपरिमाणमपि—

तेनैवोक्तम्,

कार्षिकस्ताम्रिकः पणः । इति ।

सुवर्णपलस्य चतुर्थोऽशः कर्षः तेन सम्मितः कार्षिकः स ताम्रिकः पणो भवति । ताम्रस्यायं ताम्रिकः ।

साशीतिः पणसाहस्रो दण्ड उत्तमसाहसः ।
तदर्धं मध्यमः प्रोक्तस्तदर्धमधमः स्मृतः ॥

अशीत्यधिकसहस्रसङ्ख्याकाः पणा उत्तमसाहसाख्यो दण्डः, चत्वारिंशदधिकपञ्चशतसङ्ख्यपणात्मको मध्यमसाहसाख्यः,सप्तत्यधिकशतद्वयसङ्ख्याकपणात्मकोऽधमसाहसाख्यः । स एव च शास्त्रान्तरे प्रथमसाहसाख्य इत्युच्यते । यदुक्तम्—

मनुना,

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः ॥

इति, तदल्पापराधविषयम् ।

धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा ।
योज्या व्यस्ताः समस्ता वाप्यपराधवशादिमे ॥

धिग्दण्डो, धिक्त्वां कापुरुषमित्यादिः । वाग्दण्डः, सर्वस्वं ते हरामि, त्वां देशान्निर्वासयामीति परुषभाषणम् ।

ज्ञात्वाऽपराधं देशं च कालं बलमथापि वा ।
वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ॥

क्वचिद्देशे स्वल्पेनैव शीतेनाऽऽतपेन वा स्वल्पकालेन भोजननिवारणेनाधिका पीडा भवति, क्वचिच्च महतापि न तावती । तथा काले शरदादौ, तथा दण्डनीयबलं विदित्वा ताडनादिदण्डो विधेयः । तथा वयःकर्मवित्तानि । वयः,अशीत्यादि वार्द्धकं, प्रागुपनयनादि शैशवं च । कर्माग्निहोत्रादि । वित्तं प्रसिद्धम् । क्वचित्क्वचिद्वाचानिका एव दण्डविशेषा उक्ताः—

विष्णुधर्मोत्तरे,

उत्साहमन्त्रशक्तिभ्यां प्रभुशक्तिश्च दैविकी ।
चतस्रः शक्तयस्तस्य वैष्णव्यः परिकीर्त्तिताः ॥
कः समर्थः प्रजाः पातुं विना वैष्णवतेजसा ।
सर्वदेवमयस्यैवं वारुणे पृथिवीपतेः ॥

वारुणे इति परशुरामस्य वरुणात्मजं पुष्करं प्रति सम्बुद्धिः। अयं च दण्डो द्विविधः–स्वविषयदण्डः परविषयदण्डश्च। तत्राद्यः–"दण्डप्रणयनं राम स्वदेशे शृणु भूभुजाम्" इत्यादिनोच्यते। द्वितीयस्तु–"द्विविधः कथितो दण्डः परदेशे पुरातनैः" इत्यादिनाग्रे कथयिष्यते।

दण्डप्रणयनं सम्यक् श्रोतुमिच्छामि तत्त्वतः।
कथं स्वविषये तस्य दण्डनीतिर्भवेद्ध्रुवा॥
कथं च दण्डं प्रणयन्नरेन्द्रो धर्मेण युज्येद्यशसा च वीर।
अर्थेन कामेन च सर्वमेतद्ब्रवीहि मे यादवनाथपुत्र॥

पुष्कर उवाच।

दण्डप्रणयनं राम स्वदेशे शृणु भूभुजाम्।
यस्य सम्यक्प्रणयनात्स्वर्गभाक्पार्थिवो भवेत्॥
त्रियवं कृष्णलं विद्धि माषस्तत्पञ्चकं भवेत्।
कृष्णलानां तथा षष्ट्या कर्षार्द्धं राम कीर्तितम्॥
सुवर्णश्च विनिर्दिष्टो राम षोडशमाषिकः।
निष्कं सुवर्णाश्चत्वारो धरणं दशभिस्तु तैः॥
ताम्ररूप्यसुवर्णानां मानमेतत्प्रकीर्तितम्।
ताम्रिकः कार्षिको राम प्रोक्तः कार्षापणो बुधैः॥
पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः।
मध्यमः पञ्च विज्ञेयः सहस्रमपि चोत्तमः॥
बालदायादकं रिक्थं तावद्राजा तु पालयेत्।
यावत्स स्यात्समावृत्तो यावद्वातीतशैशवः॥
वेश्याऽपुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च।
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च॥
निष्कुलासु, पितृकुलभर्तृकुलरहितासु।

जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ।
ताञ्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥
प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ।
अर्वाक् त्र्यब्दाद्धरेत्स्वामी परेण नृपतिर्हरेत् ॥
ममेदमिति यो ब्रूयात्सोऽनुयुक्तो यथाविधि ।
संवाद्य रूपसङ्ख्यादीन्स्वामी तद्द्रव्यमर्हति ॥
संवाद्य, यथास्थितं निवेद्य ।
अवेदयानो नष्टस्य देशं कालं च तत्त्वतः ॥
वर्णं रूपं प्रमाणं च तत्समं दण्डमर्हति ।
वर्णो, रक्तपीतादिर्वस्त्रादौ । रूपं, कटककुण्डलादिर्जातिविशेषः । प्रमाणं, परिमाणं, तोलकादि हस्तवितस्त्यादि वा ।
प्रनष्टाधिगतं रिक्थं तिष्ठेद्युक्तैरधिष्ठितम् ।
यांस्तत्र चौरान् गृह्णीयाद्घातयेत्कुञ्जरेण तान् ॥
ममेदमिति यो ब्रूयादसत्येन तथा निधिम् ।
तस्य दण्डं हरेद्राजा स्ववित्तस्यांशमष्टमम् ॥
असत्यता च रूपपरिमाणादेर्विसंवादेन बोद्धव्या । स्ववित्तस्य, निधिस्थद्रव्यस्य ।
चौरैरमुषितो यस्तु मुषितोऽस्मीति भाषते ।
तत्प्रदाय च भूपाले स दण्ड्यस्तावदेव तु ॥
यो यावन्निह्नुवीतार्थं मिथ्या यो वा वदेत्ततः ।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमम् ॥
कूटसाक्ष्यं तु कुर्वाणांस्त्रीन् वर्णान् धार्मिको नृपः ।
प्रमापयेन्महाभाग ब्राह्मणं तु विवासयेत् ॥
यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्ते विचक्षणः ।
अवध्य मूलं कर्त्तव्यं तस्य दण्डं महीक्षिता ॥

मूलं, मूलद्रव्यम् । अवध्य, अहिंसयित्वा, न्यूनमकृत्वेत्यर्थः । वृद्धेस्तु सर्वथा लोप एव ।

वस्त्रादौ तु तथा मूलच्छेदे धर्मो न हीयते ।

सुवर्णरूप्यादावाधीकृते तद्भोगे मूलच्छेदं विना वृद्धौ च लोप इत्युक्तं, वस्त्रादावाधीकृते तद्भोगे मूलच्छेदे कृतेऽपि राज्ञो धर्मो न हीयत इत्यर्थः ।

यो निक्षेपं वञ्चयति यश्चानिक्षिप्य याचते ।
तावुभौ चौरवच्छास्यौ दाप्यौ वा द्विगुणं दमम् ॥
उपधाभिश्च यः कश्चित्परद्रव्यं हरेन्नरः ।
ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः ॥

उपधाभिः, छलादिभिः ।

यो याचितकमादाय न तद्दद्याद्यथाक्रमम् ।
स निगृह्य बलाद्दाप्यो दण्डं वै पूर्वसाहसम् ॥
अज्ञानाद्यः पुमान् कुर्यात्परद्रव्यस्य विक्रयम् ।
निर्दोषो ज्ञानपूर्वं तु चौरवद्वधमर्हति ॥
मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छति ।
दण्ड्यः स मूल्यं सकलं धर्मज्ञेन महीक्षिता ॥
द्विजभोज्ये तु सम्प्राप्ते प्रातिवेश्यमभोजयन् ।
हिरण्यमापकं दण्ड्यः पापे नास्ति व्यतिक्रमः ॥

पापे, कृतपापे प्रातिवेश्ये सति, अभोजयितुरिति शेषः । व्यतिक्रमो दण्डो नास्ति ।

आमन्त्रितो द्विजो यस्तु वर्त्तमानः प्रतिग्रहे ।
निष्कारणं न गच्छेद्यः स दाप्योऽष्टशतं दमम् ॥

प्रतिग्रहे वर्त्तमानः, प्रतिग्रहपरिग्रहभोजनादिकं कुर्वन् ।

प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः ।

भृतो नार्तो न कुर्याद्यो दर्पात्कर्म यथोचितम् ॥
स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम् ।
अकाले यस्त्यजेद्भृत्यं दण्ड्यः स्यात्तावदेव तु ॥
यो ग्रामदेशसन्धानं कृत्वा सत्येन संविदम् ।
विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् ॥
क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत् ।
सोऽन्तर्दशाहात्तत्साम्याद्दद्याच्चैवाददीत च ॥
साम्यात्, न्यूनाधिकभावाभावेन ।
परेण तु दशाहस्य न दद्यान्नैव दापयेत् ।
आददद्धि ददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥
यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति ।
तस्य कुर्यान्नृपो दण्डं स्वयं षण्णवतिं पणान् ॥
अकन्येति तु यः कन्यां ब्रूयाद्द्वेषेण मानवः ।
स शतं प्राप्नुयाद्दण्डं कन्यादोषमदर्शयन्
अकन्या, क्षतयोनिः ।
यस्त्वन्यां दर्शयित्वाऽन्यां वोढुः कन्यां प्रयच्छति ।
उत्तमं तस्य कुर्वीत राजा दण्डं तु साहसम् ॥
वरो दोषान्न विख्याप्य यः कन्यां वरयेदिह ।
दत्ताऽप्यदत्ता सा तस्य राज्ञा दण्ड्यः शतद्वयम् ॥
लुब्धोऽन्यत्र तु विक्रेता षट्शतं दण्डमर्हति ।
वहेच्छुल्कं तु विक्रेता सत्यङ्कारं तु सन्त्यजेत् ॥
द्विगुणं दण्डयेदेनमिति धर्मो व्यवस्थितः ।
मूल्यैकदेशं दत्त्वा तु यदि क्रेता धनं त्यजेत् ॥
दण्ड्यः स मध्यमं दण्डं तस्य दण्डस्य मोक्षणम् ।
दुग्धाद्धेतुं तु यः पालो गृहीत्वा भक्तवेतनम् ॥

स तु दण्ड्यः शतं राज्ञा सुवर्णं चाप्यरक्षिता ।
दण्डं दत्त्वा न विरमेत्स्वामिभिः कृतलक्षणः ॥
बद्धः कार्ष्णायसैः पाशैस्तस्य कर्मकरो भवेत् ।
धनुःशतपरीमाणां ग्रामस्य तु समन्ततः ॥
द्विगुणां त्रिगुणां वापि नगरस्य तु कल्पयेत् ।
वृतिं तत्र प्रकुर्वीत यामुष्ट्रो नावलोकयेत् ॥
छिद्रं निवारयेत्सर्वं श्वसूकरमुखानुगम् ।
तत्राप्यनावृतं धान्यं विहिंस्युः पशवो यदि ॥
न तत्र कारयेद्दण्डं नृपतिः पशुरक्षिणाम् ।
अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा ॥
अनिर्दशाहाम्, प्रसवोत्तरमनतिक्रान्तदशरात्राम् ।
सपालान् वा विपालान् वा नदण्ड्यान् मनुरब्रवीत् ॥
अतोऽन्यथा विनष्टस्य दशांशं दण्डमर्हति ।
वैराद्दशगुणं दण्डं विनाशात् क्षेत्रियस्य तु ॥
गृहं तडागमारामं क्षेत्रं वा ज्ञानतो हरन् ।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्विशतो दमः ॥
सीमाबन्धनकाले तु सीमाबन्धनकारिणाम् ।
तेषां संज्ञां ददानस्तु जिह्वाच्छेदनमाप्नुयात् ॥
अनर्थेनापि यो विन्द्यात्संविदं वा विगच्छति ।
उत्तमं साहसं दण्ड्यमिति स्वायम्भुवोऽब्रवीत् ॥
स्थापितां चापि मर्यादां ये भिन्द्युः पापकारिणः ।
सर्वे पृथक् पृथक् दण्ड्या राज्ञा प्रथमसाहसम् ॥
मर्यादां, सीमामर्यादाम् ।
शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।
वैश्यश्च द्विशतं राम शूद्रश्च वधमर्हति ॥

July ।  उत्पलदेवविरचिता ।
चितवृत्तिसमेता (वेदान्तः) २
…लप्रकाशः जैमिनीयद्वादशा-
…र्थसंग्रहः श्रीभट्टनारायणात्मज-
…शङ्करविरचितः । ( मीमांसा ) २
प्रकरणपञ्चिका प्रभाकरमतानुसारि-मी-
मांसादर्शनम् । महामहोपाध्यायश्रीशालि-
कनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो
…मांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) २
…द्धिसिद्धान्तसारः । पण्डितप्रवर-
…दव्यासप्रणीतस्तत्कृतव्याख्यास-
…कृतः । ( वेदान्तः ) २
…) कात्यायनश्रौतसूत्रम् । महामहोपाध्याय-
श्रीकर्काचार्यविरचितभाष्यसहितम् । १३
…०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविर-
चितं संपूर्णम् ( वेदान्तः ) २
…१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आ-
नन्दपूर्णविरचितया खण्डनफक्किकावि-
भजनाख्यया व्याख्यया विद्यासागरीति
प्रसिद्धया समेतम् । ( वेदान्तः ) १४
…२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १
…३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्य-
याऽवतरणिकया च सहितम् । ८
…४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथ-
भट्टकृता ( वेदान्तः ) … … २
…५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्कर-
सिद्धान्तवागीशविरचितानि अनुमानजा-
गदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्य-
क्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्ति-
वादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशि-
कायाः कुसुमाञ्जलेश्च क्रोडपत्राणि २
…६) ब्रह्मसूत्रम् , द्वैताद्वैतदर्शनम् । श्रीसुन्दरभ-
ट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहित-
श्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २
…७) षड्दर्शनसमुच्चयः । बौद्धनैयायिकका-
पिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः ।
मणिभद्रकृतटीकया सहितः । हरिभद्र-
सूरिकृतः । … … १
… शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः
प्रमेयरत्नार्णवश्च … … १
(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोम-
णिकृतदीधित्या जागदीशी टीका । १३
(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्र-
मिश्रविरचितः परिभाषा—संस्कारप्रका-
शात्मकः । सापिण्ड्यदीपकश्च … ११
(३१) वीरमित्रोदयः । महामहोपाध्यायश्री-
मित्रमिश्रविरचितः आह्निकप्रकाशः ६
(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपा-
ठिसंकलितः । … … … ४
(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषो-
त्तमाचार्यकृता । … … … २
(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषो-
त्तमजीमहाराजविरचितः … … २
(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसा-
भाष्यं श्रीनिम्बार्काचार्यविरचितम् । १
(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्य-
नारायणतीर्थविरचित-योगसिद्धान्तचन्द्रि-
कासमाख्यया व्याख्यया संवलितम् । २
(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्य-
श्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृत-
वर्षिणीसमाख्यव्याख्यासंवलितम् । ४
(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीम-
हेश्वरसूरिविरचितः । … … २
(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मित.
श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठल-
नाथदीक्षितविरचितटिप्पणीसहिता । श्रीम-
द्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबो-
धिनीटिप्पण्यो—प्रकाशः गोस्वामि श्रीश्री
पुरुषोत्तमजीमहाराज विरचित २
(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमि-
त्रमिश्रविरचितः पूजाप्रकाशः । … ४
(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धा-
न्तापरनामकः । श्रीब्रह्मचारिवनमालि-
मिश्रविरचितः । वेदान्तकारिकावली
श्रीपुरुषोत्तमप्रसाद. शर्मकृता अध्यात्म-
सुधातरङ्गिण्याख्य टीकया सहिता । ३
(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राज-
काचार्यनारायणाश्रमशिष्यमाधवाश्रमविर
चितः । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यविरचिता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणीता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपाद । ६

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता ।

श्रीमद्दुर्बलाचार्य
चितकुञ्जिकाकलाहृः

(४७) व्याकरणसिद्धान्तसुधानिधिः
विश्वेश्वरसूरिविरचितः ।

(४८) वीरमित्रोदयः । लक्षणप्रकाशः ।
महामहोपाध्यायश्रीमित्रमिश्रविरचित.

(४९) बृहदारण्यकवार्त्तिकसारः श्रीमद्विद्यारण्यस्वामिविरचितः । महेश्वरतीर्थकृतलघुसंग्रहाख्यया टीकया समलंकृतः । ४

(५०) वीरमित्रोदयः । राजनीतिप्रक. । महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।


पत्त्रादिप्रेषणस्थानम् { हरिदासगुप्तः,
चौखम्बा बनारस सिटी

July 1916.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 223.

# वीरमित्रोदयः ।

राजनीतिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा

संशोधितः ।

# VÎRAMITRODAYA,

RAJNITI PRAKÂSA,

BY

MAHÂMAHOPÂDHÂYA PANDITA MITRA MISRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. VI.

FASCICULUS III–१

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.

AGENTS—

OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press,*

BENARES.

*Price Rupee one.*

*Registered According to Act XXV. of 1867.*

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२२३

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... ... " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ...

---

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः(मीमांसा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः ( मीमांसा ) २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्ण । ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्ण(वेदान्तः)१

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्यापेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ... ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम्। सम्पूर्णम् ( मीमांसा ) ... ... २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १६

पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने ।
वैश्ये चाप्यर्द्धपञ्चाशच्छूद्रे द्वादशको दमः ॥
क्षत्रियस्याप्नुयाद्वैश्यः साहसं पूर्वमेव तु ।
शूद्रः क्षत्रियमाक्रुश्य जिह्वाच्छेदनमाप्नुयात् ॥
पञ्चाशत्क्षत्रियो दण्ड्यस्तथा वैश्याभिशंसने ।
शूद्रे चैवार्द्धपञ्चाशत्तथा धर्मो न हीयते ॥
वैश्यस्याक्रोशने दण्ड्यः शूद्रश्चोत्तमसाहसम् ।
शूद्राक्रोशे तथा वैश्यः शतार्द्धं दण्डमर्हति ॥
सवर्णाक्रोशने दण्डस्तथा द्वादशिकः स्मृतः ।
द्वादशिकः, द्वादशपणात्मकः ।
वादेष्ववचनीयेषु तदेव द्विगुणं भवेत् ॥
एकजातिर्द्विजातिं तु वाचा दारुणा क्षिपेत् ।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ॥
एकजातिः, शूद्रः, उपनयनकृतद्वितीयजातेरभावात् ।
नामजातिग्रहं त्वेषामभिद्रोहेण कुर्वताम् ।
निखेयोऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥
अयोमयः, लोहमयः ।
धर्मोपदेशं धर्मेण द्विजानामस्य कुर्वतः ।
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥
श्रुतं देशं च जातिं च कर्म शारीरमेव च ।
वितथं तु ब्रुवन्दाप्यो राज्ञा द्विगुणसाहसम् ॥
यस्तु पातकसंयुक्तैः क्षिपेद्वर्णान्तगोचरैः ।
उत्तमं साहसं तस्मिन्दण्डः पात्यो यथाक्रमम् ॥
राज्ञे निवेद्य नियमं प्रशमं यान्ति ये मिथः ।
सर्वे द्विगुणदण्ड्यास्ते विप्रलम्भान्नृपस्य तु ॥

प्रीत्या मयास्याभिहितं प्रमादेनाथ वा वदेत् ।
भूयो न चैवं वक्ष्यामि स तु दण्डार्धभाग्भवेत् ॥
काणं वाप्यथ वा खञ्जमन्यं वापि तथाविधम् ।
तथ्येनापि ब्रुवन्दाप्यो दण्डं कार्षापणावरम् ॥
मातरं पितरं ज्येष्ठं भ्रातरं श्वशुरं गुरुम् ।
आक्षारयन् शतं दण्ड्यः पन्थानं चाददद्गुरोः ॥
गुरुवर्जं तु मार्गे हि यो मार्गं न प्रयच्छति ।
स दाप्यः कृष्णलं राज्ञा तस्य पापस्य शान्तये ॥
एकजातिर्द्विजातिं तु येनाङ्गेनापराध्नुयात् ।
तदेव च्छेदयेत्तस्य क्षिप्रमेवाविचारयन् ॥
अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः ।
अवमेहयतो मेढ्रमवमर्दयतो गुदम् ॥
सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।
कट्यां कृताङ्को निर्वास्योऽङ्कमेकं चास्य कर्त्तयेत् ॥
केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ।
पादयोर्घाटिकायां तु ग्रीवायां वृषणेषु च ॥
त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः ।
अस्थिभेत्ता च षण्निष्कान् प्रमाप्यश्च प्रमापकः ॥
अङ्गभङ्गकरस्याङ्गं तदेवापहरेन्नृपः ।
दण्डपारुष्यकृद्दद्यात्समुत्थानव्ययं तथा ॥
अर्द्धपादकराः कार्या गोगजाश्वोष्ट्रघातकाः ।
पशुक्षुद्रमृगाणां च हिंसायां द्विगुणो दमः ॥
पञ्चाशत्तु भवेद्दण्ड्यस्तथैव मृगपक्षिषु ।
कृमिकीटेषु दण्ड्यः स्याद्रजतस्य तु माषकम् ॥
तस्यानुरूपं मूल्यं च प्रदद्यात्स्वामिने तथा ।
सस्वामिकानां सकरं शेषाणां दण्डमेव तु ॥

सकरं, करेण स्वामिने देयेन मूल्येन सहितम् ।
वृक्षं तु सफलं छित्वा सुवर्णं दण्डमर्हति ॥
द्विगुणं दण्डयेच्चैत्ये पथि सीम्नि जलाशये ।
छेदनादफलस्यापि मध्यमः साहसः स्मृतः ॥
इत्यादिनानाश्रुतिस्मृतिपुराणेषु बहवो दण्डप्रकारा उक्ताः।

इति स्वविषये दण्डः ।

"कथं स्वविषये तस्य दण्डनीतिर्भवेद्ध्रुवम्"

इत्यादिना स्वदेशे दण्डनिरूपणे कृते परविषयेऽपि कथं दण्डः कर्त्तव्य इत्यपेक्षायाम्—

विष्णुधर्मोत्तरे,

राम उवाच ।

सामभेदौ तथा प्रोक्तौ दानदण्डौ तथैव च ।
दण्डः स्वदेशे कथितः परदेशे ब्रवीहि मे ॥

पुष्कर उवाच ।

द्विविधः कथितो दण्डः परदेशे पुरातनैः ।
प्रकाशश्चाप्रकाशश्च तं निबोध द्विजोत्तम ॥
लुण्ठनं ग्रामघातश्च सस्यघातस्तथैव च ।
चतुरङ्गेन दण्डेन परेषां च तथा वधः ॥
चतुरङ्गेन दण्डेन, रथाश्वगजपदातिरूपसैन्येन ।
प्रकाशः कथितो दण्डः प्रत्यक्षं वह्निदीपनम् ।
अप्रकाशो विषं वह्निर्गूढैश्च पुरुषैर्वधः ॥
दूषणं यवसादीनामुदकानां च दूषणम् ।
रसाक्रियाश्च विविधाः सुभगाभेदनादिकम् ॥
परराज्ञोऽन्तःपुरे या सुभगा तस्याः केन चिदुपायेन भेद-

नादिकम् । आदिपदेन सामदानयोरुपादानम् ।

एवमादीनि कार्याणि परचक्रे महीक्षिता ।
स्वराष्ट्रे च द्विजश्रेष्ठ दूष्याणां वलिनामपि ॥
चत्वार एते कथिता ह्युपायाः प्रधानभूता भुवि पार्थिवानाम् ।
अतः परं ते कथयामि राम शेषास्त्रयस्ते न मयेरिता ये ॥इति ।

इति दण्डः ।

अथोपेक्षा ।

विष्णुधर्मोत्तरे,
पुष्कर उवाच ।
यदि मन्येत नृपतिरनेन मम विग्रहे ।
अनर्थायानुवन्धः स्यात्सन्धिना च तथा भवेत् ॥
साम लज्जास्पदं चात्र दानं चार्थक्षयङ्करम् ।
भेदे दण्डेऽनुवन्धः स्यात्तदोपेक्षां समाश्रयेत् ॥
अवज्ञोपहतस्तत्र राज्ञा कार्यो रिपुर्भवेत् ।
उपेक्षैव च धर्मज्ञ श्रेयसी तत्र सा स्मृता ॥
उपेक्षया यत्र तु शक्यमर्थक्षयव्ययायासविहीनया न ।
कार्यं भवेद्ब्राह्मण विग्रहेण लज्जास्पदेनाप्यथ सन्धिना च ॥ इति ।

यत्रार्थक्षयव्ययाभ्यामायासेन च विहीनयोपेक्षया शक्यं कार्यं कर्तुं तत्र हे ब्राह्मण राम लज्जास्पदेन विग्रहेण सन्धिना च कार्यं न भवेत् ।

इत्युपेक्षा ।

अथ माया ।

सा च विना मन्त्रतन्त्रादिकमन्यथाभूतस्यार्थस्यान्यथाभासनोपायः । कपटमिति लोके प्रसिद्धम् । सा च—

विष्णुधर्मोत्तरे,

पुष्कर उवाच ।

उत्पातैर्विविधैः कार्यं परस्योद्वेजनं नृपैः ।
अरातिशिविरस्थाने वसतिर्यस्य पक्षिणः ॥
स्थूलस्य तस्य पुच्छस्थां कृत्वोल्कां विपुलां द्विज ।
विसृज्यैनं ततस्तीव्रमुल्कापातं प्रदर्शयेत् ।
अनेनैवानुसारेण बुद्ध्या निश्चित्य यत्नतः ॥
उत्पातानि तथान्यानि दर्शनीयानि पार्थिवैः ।
उद्वेजनं तथा कुर्यात्कुहकैर्विविधैर्द्विषाम् ॥
सांवत्सरा नवर्षं च नाशं ब्रूयुः परस्य च ।
जिगीषुः पृथिवीराज्यं तेन वोद्वेजयेत्परान् ॥
सांवत्सराः, ज्योतिर्विदः । नवर्षं, वृष्ट्यभावम् ।
देवतानां प्रसादानि कीर्तनीयानि तस्य तु ॥
सुस्वप्नलाभांश्च तथा जिगीषुं प्रति कीर्तयेत् ।
दुःस्वप्नलाभं च तथा परेषामिति निश्चयः ॥
आगतं नो मित्रबलं प्रहरध्वमभीतवत् ।
एवं ब्रूयाद्रणे प्राप्ते भग्ना भग्नाः परे इति ॥
क्ष्वेडाकिलकिलाशब्दमस्य शत्रुर्हतस्तथा ।
देवाज्ञाबृंहितो राजा सन्नद्धः समरं प्रति ॥
एवम्प्रकारा द्विजवर्य मायाः कार्या नरेन्द्रैररिपु प्रहृष्टैः ।
मायाहतः शत्रुरथ प्रशक्यः सङ्ख्ये सुखं हन्तुमदीनसत्त्वः॥इति।

इति माया ।

अथेन्द्रजालम् ।

तच्च मन्त्रतन्त्रादिना अन्यथास्थितस्यार्थस्यान्यथावभासः ।

विष्णुधर्मोत्तरे,

पुष्कर उवाच ।

चतुरङ्गं बलं राजा इन्द्रजालेन दर्शयेत् ।
सहायार्थमनुप्राप्तान्दर्शयेत्रिदिवौकसः ॥
रक्तवृष्टिश्च सन्दर्श्या परेषां शिविरं प्रति ।
छिन्नानि रिपुशीर्षाणि प्रासादाग्रेषु दर्शयेत् ॥

आधित्सता सन्धिमहीनसत्त्वात्कार्यं भवेद्राम महेन्द्रजालम् । वक्ष्यामि तेऽन्योपनिपत्सु तुल्ययोगानि चान्यानि जयावहानि॥इति।

इतीन्द्रजालम् ।

एवं सामादयः सप्तोपाया निरूपिताः। अधुना "मन्त्रमूलमिदं राज्यम्"इत्यादिवचनैर्मन्त्रस्य प्राशस्त्येन मन्त्रो निरूप्यते । तत्र—

अग्निपुराणे,

राम उवाच ।

प्रभावोत्साहशक्तिभ्यां मन्त्रशक्तिः प्रशस्यते ।
प्रभावोत्साहवान् काव्यो जितो देवपुरोधसा ॥
मन्त्रयेतेह कर्माणि नाऽनाप्तैर्नाविपश्चिता ।
अशक्यारम्भवृत्तीनां कुतः क्लेशादृते फलम् ॥
अविज्ञातस्य विज्ञानं विज्ञातस्य च निश्चयः ।
अर्थद्वैधस्य सन्देहच्छेदनं शेषदर्शनम् ॥
सहायाः साधनोपाया विभागो देशकालयोः ।
विपत्तेश्च प्रतीकारः पञ्चाङ्गो मन्त्र इष्यते ॥
मनःप्रसादः श्रद्धा च तथा करणपाटवम् ।
सहायोत्थानसम्पच्च कर्मणां सिद्धिलक्षणम् ॥ इति ।

श्रीरामायणेऽपि,
त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ।
तेषां तु समवेतानां गुणदोषान् वदाम्यहम् ॥
मन्त्रिभिर्मन्त्रसंयुक्तैः समर्थैर्मन्त्रनिश्चये ।
मित्रैर्वातिसमानार्थैर्वान्धवैश्चातिवाहितैः ॥
समानार्थैः, समानप्रयोजनैः ।
मन्त्रिभिर्मन्त्रयित्वा यः कर्मारम्भे प्रवर्तते ।
तत्रैव कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥
एकोऽर्थं विमृशत्येको धर्मे प्रकुरुते मतिम् ।
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ॥
गुणदोषावनिश्चित्य त्यक्तधर्मव्यपाश्रयः ।
करिष्यामीत्युपेक्षेत यः कार्यं स नराधमः ॥
यथैव पुरुषा नित्यमुत्तमाधममध्यमाः ।
एवं मन्त्रोऽपि विज्ञेय उत्तमाधममध्यमः ॥
ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा ।
मन्त्रिणां मन्त्रनियमस्तमाहुर्मन्त्रमुत्तमम् ॥
बह्वयस्तु मतयो भूत्वा मन्त्रिणामर्थसिद्धये ।
पुनर्यत्रैकतां यान्ति स मन्त्रो मध्यमः स्मृतः ॥
अन्योन्यं मतिमास्थाय यत्र सम्प्रतिपद्यते ।
न चैकमत्ये श्लेषोऽस्ति स मन्त्रोऽधम उच्यते ॥
अर्थानर्थौ हि यत्रोभौ संशयश्च परीक्ष्यते ।
स मन्त्र इति विज्ञेयः शेषस्तु खलु विक्रमः ॥ इति ।
विष्णुधर्मोत्तरे,
नैकस्तु मन्त्रयेन्मन्त्रं न राजा बहुभिः सह ।
बहुभिर्मन्त्रयेत्कामं राजा मन्त्रान् पृथक् पृथक् ॥ इति ।

एकः, स्वयम्। बहुभिः, अधिकैः। अत्र स्वस्यैकस्य मन्त्रनिषेधात्स्वभिन्नेनैकेन द्वाभ्यां वा सह मन्त्रः कार्यः। यदि बहुभिः सह मन्त्रयेत् तदा पृथक् पृथगित्यर्थः। तेन मन्त्रः सुरक्षितो भवति। अत एव—

याज्ञवल्क्यः,

मन्त्रमूलमिदं राज्यमतो मन्त्रं सुरक्षितम्।
कुर्याद्यथाऽस्य न विदुः कर्मणामाफलोदयात्॥ इति।

मन्त्रमूलानां कर्मणामाफलोदयात्परेभ्यो मन्त्रं सुरक्षितं कुर्यात्।

मनुरपि,

यस्य मन्त्रं न जानन्ति समागत्य पृथग्जनाः।
स कृत्स्नां पृथिवीं भुङ्क्ते कोशहीनोऽपि पार्थिवः॥ इति।

अग्निपुराणेऽपि,

गुप्तमन्त्रो भवेद्राजा आपदोऽगुप्तमन्त्रतः।
मदः प्रमादः कामश्च सुप्तप्रलपितानि च॥
भिन्दन्ति मन्त्रं प्रच्छन्नाः कामिन्योऽवमतास्तथा। इति।

मत्स्यपुराणेऽपि,

बहुभिर्मन्त्रयेन्मन्त्रं राजा कामं पृथक् पृथक्।
मन्त्रिणामपि नो कुर्यात्मन्त्रिमन्त्रप्रकाशनम्॥
क्वचित्कश्चिच्च विश्वास्यो भवतीह सदा नृणाम्।
निश्चयस्तु सदा मन्त्रे कार्य एकेन सूरिणा॥
भवेद्वा निश्चयावाप्तिः परबुद्ध्युपजीवनात्।
एकस्यैव महीभर्तुर्भूयःकार्यविनिश्चये॥
ब्राह्मणान् पर्युपासीत त्रयीशास्त्रसुनिश्चितान्।
नासच्छास्त्रवतो मूढांस्ते हि लोकस्य कण्टकाः॥ इति।

विष्णुधर्मोत्तरेऽपि,

राज्ञा संवृतमन्त्रेण सदा भाव्यं द्विजोत्तम ।
तस्यासंवृतमन्त्रस्य ज्ञेयाः सर्वापदो ध्रुवाः ॥
कृतान्येव हि कर्माणि ज्ञायन्ते यस्य भूपतेः ।
नारब्धानि महाभाग तस्य स्याद्वसुधा वशे ॥
मन्त्रमूलं सदा राज्यं तस्मान्मन्त्रः सुरक्षितः ।
कर्त्तव्यः पृथिवीपालैर्मन्त्रभेदभयात्सदा ॥
मन्त्रवत्साधितो मन्त्रः सङ्घातानां सुखावहः ।
मन्त्रच्छलेन बहवो विनष्टाः पृथिवीक्षितः ॥
आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।
नेत्रवक्त्रविकाराभ्यां गृह्यतेऽन्तर्गतं मनः ॥
न यस्य कुशलैस्तस्य वशे सर्वा वसुन्धरा ।
भवतीह महीभर्तुः सदा भार्गवनन्दन ॥ इति ।

मन्त्रे जडादीनां निषेधमाह—

मनुः,

जडमूकान्धबधिरांस्तैर्यग्योनान् वयोऽतिगान् ।
स्त्रीम्लेच्छव्याधितव्यङ्गान्मन्त्रकाले प्रसेधयेत् ॥

जडो, बुद्धिहीनः । तैर्यग्योनाः, शुकसारिकादयः । वयोऽतिगा, अतिवृद्धाः । म्लेच्छः, अव्यक्तवाक् । क्लीव इति क्वचित्पाठः ।

भिन्दन्त्यवमता मन्त्रं तैर्यग्योनास्तथैव च ।
स्त्रियश्चैव विशेषेण तस्मात्तत्रादृतो भवेत् ॥ इति ।

आदृतः, शङ्कितः ।

श्रीरामायणे,

अनभिज्ञाय शास्त्राणि यहवः पशुबुद्धयः ।

प्रागल्भ्याद्वक्तुमिच्छन्ति मन्त्रेष्वभ्यन्तरीकृताः ॥
मन्त्रिरूपा हि रिपवः सम्भाव्यास्ते विचक्षणैः ।
ये हितोदयमुत्सृज्य विपरीतोपसेविनः ॥
अहितं हि हिताकारं धाष्टर्याज्जल्पन्ति ये नराः ।
अवेक्ष्या मन्त्रबाह्यास्ते कर्तव्याः कृतदूषणाः ॥
विनाशाय स्वभर्तुर्हि संहताः शत्रुभिर्बुधैः ।
विपरीतानि कृत्यानि कारयन्तीह मन्त्रिणः ॥ इति ।
निषिद्धान्तरमुक्तम्—
महाभारते,
मन्त्रभेदस्य यत्प्राज्ञो द्वाराणीमानि कल्पयेत् ।
अर्थसन्ततिकामश्च रक्षेदेतानि नित्यशः ॥
मदं स्वप्नमविज्ञानमाकारं चात्मसम्भवम् ।
दुष्टामात्येषु विश्रम्भं दूतं चाकुशलं तथा ॥ इति ।
तथा विष्णुधर्मोत्तरे,
न च मूर्खैर्न चानाप्तैस्तथा नाधार्मिकैर्नृपः ।
मन्त्रं तु स्वदितं कुर्याद्येन राष्ट्रे न धावति ॥
स्वदितम्, आस्वादितम् । न धावति, न प्रसरति ।
राज्ञां विनाशमूलस्तु कथितो मन्त्रविभ्रमः ।
नाशहेतुर्भवेन्मन्त्रः क्रमयुक्तस्तु मन्त्रवत् ॥
मन्त्रे सुरक्षिते सिद्धिः कथिता पृथिवीक्षिताम् ।
क्रियमाणानि कर्माणि यस्य वेत्ति न कश्चन ॥
कृतान्येव विजानाति स राजा पृथिवीपतिः । इति ।
मन्त्रणयोग्या अमात्या उक्ता—
महाभारते,
मन्त्रनिश्चयतत्त्वज्ञपाड्गुण्यगुणवेदिनः ।

शक्तान् कुलोचितान् भक्ताननाक्षारितपूर्वकान् ॥
अनाक्षारितपूर्वकान्, अनपकृतपूर्वान् ।
नीतिज्ञान् व्यवहारज्ञानितिहासार्थकोविदान् ॥
इङ्गितज्ञानुपायज्ञान् शूरान् वीरान् कुलोद्गतान् ।
सर्वकार्येषु निपुणानिष्वस्त्रविधिपारगान् ॥
दुर्गयन्त्रविधानज्ञान् धर्मशास्त्रार्थपारगान् ।
अक्षुद्रान् क्षमिणः प्राज्ञाननागतविधायिनः ॥
आयत्यां प्रतिकारज्ञांस्तदात्वे दृढनिश्चयान् ।
द्विषन्मित्राद्युदासीनभावज्ञान् शंसितव्रतान् ॥
स्वभावगुप्तानचलानचलानिव भारत ।
धर्मशीलानकृपणांस्तथा सर्वोपधातिगान् ॥
उपधा, छद्म ।
धिया सर्वान् सम्परीक्ष्य राजा कुर्वीत मन्त्रिणः ।
येऽस्य राजधुरं वोढुं समर्थाः सद्गवा इव ॥
तैः समेत्य महीपालो गुप्तमन्त्रो जितेन्द्रियः ।
विद्यानां दर्शने यत्नमातिष्ठेद्भरतर्षभ ॥ इति ।
मन्त्रिभिर्यथा वक्तव्यं तदुक्तम्—
**श्रीरामायणे,**
यत्प्रियं च हितं चैव साधु धर्म्यं च सर्वशः ।
ब्रूयुस्तन्मन्त्रिणो वाक्यं मन्त्रमाणे विशेषतः ॥
प्राप्ते कार्ये शरीरं तु नेतुं स्वां गुणसम्पदम् ।
प्रियमेव हि वक्तव्यं हितमेव हि मन्त्रिणा ॥
सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ इति ।
मन्त्रोत्तरं स्वयमेकाकिना विचार्यमित्युक्तम्—

विष्णुधर्मोत्तरे,

पृथक् च मन्त्रिभिर्मन्त्रः कृतो वै संहतैः पुनः ।
विचार्य आत्मना साधु पश्चात्तत्र समाश्रयेत् ॥
प्रज्ञाभिमानी नृपतिर्न मन्त्रिवचने रतः ।
क्षिप्रं विनाशमायाति तडागमिव काजलम् ॥
आकारगूहनै राज्ञो मन्त्ररक्षा परा मता ।
आकारैरिङ्गितैः प्राज्ञा मन्त्रं चोहन्ति पण्डिताः ॥
सच्चराणां च वैद्यानां मन्त्रिणां वचने रतः ।
राजा विभूतिमाप्नोति चिरं यशसि तिष्ठति ॥ इति ।

इति मन्त्रः ।

अथ पौरुषम् ।

तत्र याज्ञवल्क्यः,

दैवे पुरुषकारे च कर्मसिद्धिर्व्यवस्थिता ।
तत्र दैवमभिव्यक्तं पौरुषं पौर्वदेहिकम् ॥
दैवं पौर्वदेहिकमिति सम्बन्धः ।
के[१]चिद्दैवाद्धठात्केचित्केचित्पुरुषकारतः ।
सिद्ध्यन्त्यर्था मनुष्याणां तेषां योनिस्तु पौरुषम् ॥
यथा ह्येकेन चक्रेण रथस्य न गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिद्ध्यति ॥ इति ।

मनुरपि,

सर्वं कर्मेदमायत्तं विधाने दैवमानुषे ।

---

१ केचिद्दैवात्स्वभावाद्वा कालात्पुरुषकारतः ।
संयोगे केचिदिच्छन्ति फलं कुशलबुद्धयः ॥ इति विज्ञाने-श्वरसम्मतः पाठः ।

तत्र दैवमचिन्त्यं तु मानुषे विद्यते क्रिया ॥
दैवमानुषसम्पन्ना यात्रा सर्वार्थसाधिका ।
तस्यामतिशयेद्दैवं वर्तते पौरुषं समम्[1] ॥
केचित्पुरुषकारेण केचिद्दैवेन कर्मणा ।
उभाभ्यां केचिदिच्छन्ति फलं कुशलबुद्धयः ॥
दैवमानुषसद्भावे नार्या गर्भः प्रसिद्ध्यति ।
पुंसा सत्यपि संयोगे दैवाभावे न सिद्ध्यति ॥
न हि दैवमुदासीनं कदाचिदपि मानवम् ।
अर्थानर्थफलं नेह संयुनक्त्यवशं हि तत् ॥
काकतालीयवद्दैवाद्दृष्ट्वापि निधिमग्रतः ।
न पौरुषादृते तेन निधिना युज्यते पुमान् ॥ इति ।
मत्स्यपुराणविष्णुधर्मोत्तरयोरपि,
मनुरामावूचतुः ।
दैवे पुरुषकारे च किं ज्यायस्तद्ब्रवीहि मे ।
अत्र मे संशयो देव संशयच्छिद्भवांस्तथा ॥
मत्स्यपुष्करावूचतुः ।
स्वमेव कर्म दैवाख्यं विद्धि देहान्तरार्जितम् ।
तस्मात्पौरुषमेवेह श्रेष्ठमाहुर्मनीषिणः ॥
प्रतिकूलं तथा दैवं पौरुषेण विहन्यते ।
मङ्गलाचारयुक्तानां नित्यमुत्थानशालिनाम् ॥
येषां पूर्वकृतं कर्म सात्त्विकं मनुजोत्तम ।
पौरुषेण विना तेषां केषाञ्चिद्दृश्यते फलम् ॥
कर्मणा प्राप्यते लोके राजसस्य तथा फलम् ।

---

१ इत आरभ्य 'न पौरुषादृते' इत्यन्तानि पद्यानि मुद्रितमनु-पुस्तके नोपलभ्यन्ते ।

कृच्छ्रेण कर्मणा विद्धि तामसस्य तथा फलम् ॥
पौरुषेणाप्यते राजन् मार्गितव्यं फलं नरैः ।
दैवमेव न जानाति नरः पौरुषवर्जितः ॥
तस्माद्धि कालसंयुक्तं दैवं तु सफलं भवेत् ।
पौरुषं दैवसम्पत्त्या काले फलति पार्थिव ॥
दैवं पुरुषकारश्च कालश्च मनुजेश्वर ।
त्रयमेतन्मनुष्यस्य पिण्डितं स्यात्फलावहम् ॥
कृषिवृष्टिसमायोगाद्दृश्यन्ते फलसिद्धयः ।
तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन ॥

कल्पतरौ तु—
वर्षाकाले प्रदृश्यन्ते नैवाकाले कथञ्चन-इतिपाठः ।

तस्मात्सदैव कर्त्तव्यं सधर्मं पौरुषं नृभिः ।
विपत्तावपि यस्येह परलोके ध्रुवं फलम् ॥
नालसाः प्राप्नुवन्त्यर्थान्न च दैवपरायणाः ।
तस्मात्सर्वप्रयत्नेन पौरुषे यत्नमाचरेत् ॥
त्यक्त्वालसान्दैवपरान् मनुष्यानुत्थानयुक्तान् पुरुषान् हि लक्ष्मीः ।
अन्विष्य यत्नाद्वृणुते नृपेन्द्र तस्मात्सदोत्थानवता हि भाव्यम् ॥ इति ।

**श्रीरामायणेऽपि,**
यस्तु नारभते कार्यं नरो दैवपरायणः ।
क्षिप्रं भवति निर्द्रव्यः पलायनपरायणः ॥

**तथा,**
विक्लवो हीनवीर्यो यः स दैवमनुवर्त्तते ।
अविक्लवस्तु तेजस्वी न दैवमनुवर्त्तते ॥
दैवं पुरुषकारेण यतते यः प्रबाधितुम् ।
न स दैवविपन्नार्थः कदाचिदवसीदति ॥ इति ।

दैवस्य नामान्तराण्याह—

व्यासः,

विधिर्विधानं नियतिः स्वभावः कालो ग्रहा ईश्वरकर्म दैवम् ।
भाग्यानि पुण्यानि कृतान्तयोगः पर्यायनामानि पुराकृतस्य ॥ इति ।

द्वयोः स्वरूपमाह—

स एव,

दैवमात्मकृतं विद्यात्कर्म यत्पौर्वदेहिकम् ।
स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् ॥ इति ।

## इति पौरुषम् ।

## अथ राजपुत्ररक्षा ।

तत्र मत्स्यपुराणे,

राजन् पुत्रस्य रक्षा च कर्त्तव्या पृथिवीक्षिता ।
आचार्यश्चापि कर्त्तव्यो नित्ययुक्तैश्च रक्षिभिः ॥
धर्मकामार्थशास्त्राणि धनुर्वेदं च शिक्षयेत् ।
रथे च कुञ्जरे चैनं व्यायामं कारयेत्सदा ॥
शिल्पानि शिक्षयेच्चैनं नाप्तैर्मिथ्या प्रियं वदेत् ।
शरीररक्षाव्याजेन रक्षिणोऽस्य नियोजयेत् ॥
न चास्य सङ्गो दातव्यः क्रुद्धलुब्धावमानितैः ।
तथा च विनयेदेनं यथा यौवनगो मुखे ॥
इन्द्रियैर्नापकृष्येत सतां मार्गात्सुदुर्गमात् ।

यौवनगः, प्राप्तयौवनः । मुखे, आदौ ।

गुणाधानमशक्यं तु यस्य कर्तुं स्वभावतः ॥
बन्धनं तस्य कर्त्तव्यं गुप्तदेशे शुभान्वितम् ।

गुप्तदेश इत्यनेन दुष्टप्रवेशनिषेधः । शुभान्वितमित्यनेन शा-

रीरदुःखनिषेधः, अवश्यापेक्षितस्नानभोजनवस्त्रताम्बूलादिदानं बोध्यते। सुखान्वित इति पाठे देशविशेषणं तत्।

अविनीतकुमारं हि कुलमाशु विशीर्यते ॥ इति।

एवं विनीतस्याधिकारसमर्पणे प्रकार उक्तः—

तत्रैव,

अधिकारेषु सर्वेषु विनीतं विनियोजयेत्।
आदौ स्वल्पे ततः पश्चात् क्रमेण च महत्स्वपि ॥ इति।

पुत्रविनयस्य फलमुक्तम्—

महाभारते,

नैव स्वैररिभिर्वापि ग्रस्यते पुत्रवान्नृपः।
तस्माद्राजा सदा पुत्रं संरक्षेच्छिक्षयीत च ॥
अमात्यैरात्मसदृशै राजपुत्रस्य रक्षणम्।
चारैश्च विविधोपायैः प्रविधेयं पृथग्विधैः ॥ इति।

इति राजपुत्ररक्षा।

## अथ सन्ध्यादिचिन्ता।

तत्र मन्त्रिण इत्यनुवृत्तौ—

मनुः,

तैः सार्द्धं चिन्तयेन्नित्यं सामान्यं सन्धिविग्रहम्।
स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च ॥

तैः, मन्त्रिभिः। चिन्तयेत्, राजेति शेषः। सन्धिः, पणबन्धः। विग्रहः, वैर्यवस्कन्दः। स्थानं, सैन्यकोशपुरराष्ट्रभेदेन चतुर्विधम्। समुदयः, कृषिव्रजवनगुल्मस्थानवणिक्पथशुल्कदण्डादिः। गुप्तिः, राष्ट्रादिरक्षा। लब्धप्रशमनं, देवताश्रमविद्यावतां धार्मिकाणां दानमानसम्मानयोगः। अत्र सामान्यं सन्धिविग्रहमित्यु-

पादानात्सामान्यतः सन्धिविग्रहचिन्ता । विशेषतस्तु षाड्गुण्यप्रकरणे वक्ष्यते ।

मध्यन्दिने चे रात्रौ वा विश्रान्तो विगतक्लमः ।
चिन्तयेद्धर्मकामार्थान् सार्द्धं तैरेक एव वा ॥
परस्पराविरुद्धानां तेषां च समुपार्जनम् ।
कन्यानां सम्प्रदानं च कुमाराणां च रक्षणम् ॥

तेषां, धर्मार्थकामानां बहुधा विरोधवताम् । समुपार्जनम्, सम्यगविरोधेन उपार्जनमुत्पादनम् ।

दूतसम्प्रेषणं चैव कार्यशेषं तथैव च ।
अन्तःपुरप्रचारं च प्रणिधीनां च चेष्टितम् ॥

प्रणिधयः, चाराः ।

कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च यत्नतः ।
अनुरागापरागौ च प्रचारं मण्डलस्य च ॥

अष्टविधं कर्म उशनसोक्तम्—

आदाने च विसर्गे च तथा प्रेषनिषेधयोः ।
पञ्चमे चार्थवचने व्यवहारस्य चेक्षणे ॥
दण्डशुद्धौ तथा युक्त आत्मशुद्धौ तथैव च ।
अष्टकर्मा दिवं याति राजा शक्राभिपूजितः ॥ इति ।

आदानं, करादिग्रहणम् । विसर्गः, पारितोषिकदानम् । प्रेषः, प्रेषणं भृत्यादीनाम् । अर्थवचनं,द्रव्यार्जनोपायः । अनुवचनमिति क्वचित्पाठः । अनुवचनं, कार्यसन्देहे राजाज्ञा । दण्डशुद्धिः, शास्त्रोक्तदण्डप्रणयनम् । आत्मशुद्धिः, प्रायश्चित्तम् ।

दण्डशुद्ध्योः समायुक्तस्तेनाष्टगुणिको नृपः । इति क्वचित्पाठः ।

---

१ ऽर्धरात्रे इति मुद्रितमनौ पाठः ।

मेधातिथिस्तु—अकृतारम्भः, कृतानुष्ठानम्, अनुष्ठितविशेषणं, सामादयश्चत्वारः, एतदष्टविधं कर्माह । पञ्चवर्गः, पञ्चप्रकाराणां चराणां समूहः । पञ्चप्रकारा यथा, श्रद्धेयदेशविशेषाशिल्पभाषादिविदो जनाः । तथा, कुब्जवामनकिरातमूकबधिरजडान्धादिच्छद्मिनः । तथा, नटनर्तकगायनादयः। तथा, श्रमणादयः । प्रचेताः पञ्चवर्गमन्यथाह—

सहायाः साधनोपाया विभागो देशकालयोः ।
विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते ॥ इति ।

सिद्धिः, कार्यसिद्धिः । अपरागो, विरागः । मन्त्रिपुरोहि-

---

१ कुल्लूकभट्टीये तु—'कापटिकोदास्थितगृहपतिवैदेहिकतापसव्यञ्जनात्मकं पञ्चविधं चारवर्गशब्दवाच्यं तत्त्वतश्चिन्तयेत् । तत्र परमर्मज्ञः प्रगल्भच्छात्रः कपटव्यवहारित्वात्कापटिकः, तं वृत्त्यर्थिनमर्थमानाभ्यामुपगृह्य रहसि राजा ब्रूयात्, यस्य दुर्वृत्तं पश्यसि तत्तदानीमेव मयि वक्तव्यमिति । प्रव्रज्यारूढपतित उदास्थितः, तं लोकेषु विदितदोषं प्रज्ञाशौचयुक्तं वृत्त्यर्थिनं कृत्वा रहसि राजा पूर्ववद्ब्रूयात्, बहूत्पत्तिकमठे स्थापयेत्प्रचुरसस्योत्पत्तिकं भूम्यन्तरं च तद्वृत्त्यर्थमुपकल्पयेत, स चान्येषामपि प्रव्रजितानां राजचारकर्मकारिणां ग्रासाच्छादनादिकं दद्यात् । कर्षकः क्षीणवृत्तिः प्रज्ञाशौचयुक्तो गृहपतिव्यञ्जनस्तमपि पूर्ववदुक्त्वा स्वभूमौ कृषिकर्म कारयेत् । वाणिजकः क्षीणवृत्तिर्वैदेहिकव्यञ्जनस्तं पूर्ववदुक्त्वा धनमानाभ्यामात्मीकृत्य वाणिज्यं कारयेत् । मुण्डो जडिलो वा वृत्तिकामस्तापसव्यञ्जनः सोऽपि क्वचिदाश्रमे वसन् बहुमुण्डजटिलान्तरे कपटशिष्यगणवृतो गुप्तराजोपकल्पितवृत्तिस्तापस्यं कुर्यात्, मासद्विमासान्तरितं प्रकाशं बदरादिमुष्टिमश्नीयात्, रहसि च राजोपकल्पितमाहारं कल्पयेत्, शिष्याश्चास्यातीतानागतज्ञानं ख्यापयेयुः, ते च बहुलोकवेष्टनमासाद्य सर्वेषां विश्वसनीयत्वात्सर्वकार्यमकार्यं च पृच्छन्ति अन्यस्य कुक्रियादिकं च कथयन्ति' इत्येवं पञ्च प्रकारा दर्शिताः ।

तसेनापतियुवराजदौवारिकादीनामनुरागविरागौ चारादिभ्यो बोद्धव्यावित्यर्थः ।

मनुः,

उपेतारमुपायं च सर्वोपायांश्च कृत्स्नशः ।
एतत्त्रयं समाश्रित्य प्रयतेतात्मसिद्धये ॥ इति ।

उपेतारम्, उपायप्रयोक्तारमात्मानम् । उपेयम्, उपायसाध्यं शत्रुम् ।

इति सन्ध्यादिचिन्ता ।

## अथ द्वादशराजमण्डलम् ।

विष्णुधर्मोत्तरे,

राम उवाच ।

किन्तु कृत्यतमं राज्ञस्तन्ममाचक्ष्व पृच्छतः ।
राज्यतन्त्रं कथं राज्ञा पालनीयं विपश्चिता ॥

पुष्कर उवाच ।

सप्ताङ्गस्य तु राज्यस्य भाव्यं युक्तेन भूभृता ।
एतावदेव कर्त्तव्यं राज्ञा तन्त्रं भृगूत्तम ॥ इति ।

सप्ताङ्गान्युक्तानि—

तत्रैव,

साम दानं तथा दुर्गं कोशो दण्डस्तथैव च ।
मित्रं जनपदश्चैव राज्यं सप्ताङ्गमुच्यते ॥ इति ।

मनुः,

सप्तानां प्रकृतीनां तु राज्यस्यासां यथाक्रमम् ।
पूर्वं पूर्वं गुरुतरं जानीयाद्व्यसनं नृपः ॥

प्रकृतीनाम्, अङ्गानाम् । व्यसनं, व्यसनकारणम्, दोषवदिति शेषः ।

सप्ताङ्गस्यास्य राज्यस्य विष्टब्धस्य त्रिदण्डवत् ।
अन्योन्यगुणवैशेष्यान्न किञ्चिदतिरिच्यते ॥
तेषु तेषु हि कृत्येषु तत्तदङ्गं विशिष्यते ।
येन यत्साध्यते कार्यं तत्तस्मिञ्छ्रेष्ठमुच्यते ॥ इति ।

विष्णुधर्मोत्तरे तु विशेषः ।

सप्ताङ्गस्यास्य राज्यस्य विघ्नकर्तॄन् विवासयेत् ।
अहितान् घातयेद्राजा क्षिप्रमेवाविचारयन् ॥
सप्ताङ्गस्य तु राज्यस्य वृद्धिः कार्या स्वमण्डले ।
मण्डलेषु च सर्वेषु कषणीया महीक्षिता ॥ इति ।

कषणीयाः, परीक्षणीयाः, अमात्यादय इति शेषः । मण्डलस्य द्वादश प्रकृतीराह—

मनुः,

मध्यमस्य प्रचारं च विजिगीषोश्च चेष्टितम् ।
उदासीनप्रचारं च शत्रोश्चैव प्रयत्नतः ॥
एताः प्रकृतयो मूलं मण्डलस्य समासतः ।

एतस्मिन् राजमण्डल इमाश्चतस्रो राजप्रकृतयो भवन्ति विजिगीषुररिर्मध्यम उदासीन इति । विजेतुमभ्युद्यतो विजिगीषुः । अरिस्तु त्रिविधः—सहजः कृत्रिमः स्वभूम्यनन्तर इति । मध्यमः, अरिविजिगीष्वोरसंहतयोर्निग्रहे समर्थः । तदुक्तम्—

अखिलो मण्डलार्थस्तु यस्मिन् ज्ञेयः स मध्यमः । इति ।

अखिलः, अर्थाद्विजीगीषुयातव्ययोः । मण्डलार्थः, मण्डलप्रयोजनं, यस्मिन् स मध्यमो ज्ञेयः । उदासीनः, अरिविजिगीषुमध्यमानामसंहतानां निग्रहसमर्थः । तदुक्तम्—

विकृष्टेऽध्वन्यनायत्त उदासीनो बलान्वितः । इति ।

विकृष्टेऽध्वनि, अरिमित्रापेक्षया विप्रकृष्टे स्थले । अनायत्तः,

त्रयाणामप्यनधीनः । मध्यमोदासीनयोर्लक्षणे विष्णुधर्मोत्तरे स्पष्टमभिधास्येते ।

अष्टौ चान्याः समाख्याता द्वादशैव तु ताः स्मृताः ॥

विजिगीषुमित्रमरिमित्रं विजिगीषुमित्रमित्रमरिमित्रमित्रं चेति अन्याश्चतस्रः प्रकृतयः पूर्वतः।यस्यां दिश्यरिः सैव पूर्वा।पार्ष्णिग्राहः, आक्रन्दः, पार्ष्णिग्राहासारः, आक्रन्दासारश्चेति चतस्रः प्रकृतयः पश्चात् इत्यष्टौ, आद्याश्चतस्र इति द्वादश। तथा चोक्तम्—

विष्णुधर्मोत्तरे,

अधिकृत्याभियोज्यं तु तत्रापि शृणु कल्पनाम् ।
अभियोज्यः स्मृतः शत्रुस्तस्यापि च प्रतीक्षिता ॥

तस्य, अरेः । प्रतीक्षिता, सेवकः । तदुक्तम्—

मनुना,

अनन्तरमरिं विद्यादरिसेविनमेव च । इति ।
तत्परस्तु सुहृज्ज्ञेयो रिपुमित्रमतः परम् ।
स्वमित्रमित्रं तत्पश्चान्मित्रमित्रं रिपोस्तथा ॥
एतत्पुरस्तात्कथितं पश्चादपि निबोध मे ।
पार्ष्णिग्राहः स्थितः पश्चात्ततस्त्वाक्रन्द उच्यते ।
आसारस्तु ततोऽप्यन्यस्त्वाक्रन्दासार उच्यते ॥

आसारः, पार्ष्णिग्राहासारः ।

जिगीषोः शत्रुयुक्तस्य वियुक्तस्य तथा द्विज ।
निग्रहानुग्रहे शक्तो मध्यमः परिकीर्त्तितः ॥
निग्रहानुग्रहे शक्तः सर्वेषामपि यो भवेत् ।
उदासीनः स कथितो बलवान् पृथिवीपतिः ॥
एतावदेव ते प्रोक्तं राम द्वादशराजकम् ।
नात्रापि निश्चयः शक्यो वक्तुं मनुजपुङ्गव ।

नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ॥
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ।
सामर्थ्ययोगात् कारणात् ।
त्रिविधा रिपवः प्रोक्ताः कुल्यानन्तरकृत्रिमाः ।
पूर्वः पूर्वो गुरुस्तेषां दुश्चिकित्स्यतमो मतः ॥
अनन्तरोऽपि यः शत्रुः सोऽपि मे कृत्रिमो मतः ।
पार्ष्णिग्राहो भवेद्राजा शत्रुर्मित्राभियोगिनः ॥
पार्ष्णिग्राहमुपायैस्तु शमयेच्च तथा स्वकम् ।
मित्रेण शत्रोरुच्छेदं प्रशंसन्ति पुरातनाः ॥
मित्रं हि शत्रुतामेति सामन्तत्वादनन्तरम् ।
शत्रुं जिगीषुरुच्छिन्द्यात्स्वयं शक्नोति चेद्यदि ॥
प्रतापवृद्धौ तेनास्य न मित्राज्जायते भयम् ।
नान्यथा पृथिवी जेतुं शक्या राम जिगीषुणा ॥ इति ।
महाभारते,
विजिगीषोररिर्मित्रमरेर्मित्रमतः परम् ।
मित्रमित्रं शत्रुमित्रमित्रं ज्ञेयं पुरःसरम् ॥
पार्ष्णिग्राहस्तथाक्रन्दः पार्ष्ण्यासारश्च पृष्ठतः ।
आक्रन्दासार इति च ज्ञेयं मण्डलचिन्तकैः ॥
पार्ष्णिग्राहाभिसारं च पार्ष्णिग्राहं च विग्रहे ।
राजाक्रन्दाभिसारेण तथाऽऽक्रन्देन वर्द्धयेत् ॥
वर्द्धयेत्, छेदयेत् ।
विरोधयेच्छत्रुमित्रं मित्रमित्रमरेस्तथा ।
मित्रेण मित्रमित्रेण मध्यमत्वाभिवाञ्छकः ॥
मन्त्रप्रभूत्साहशक्तीः पालयेद्बलवान्नृपः ।
अत्र यद्यपि मध्यमोदासीनौ नोक्तौ तथापि मन्वाद्येकवा-

मयतयात्रापि तौ बोद्धव्यौ । कल्पतरुस्तु—'विजिगीषुमित्रं, विजिगीषुमित्रमित्रम्, अरिमित्रम्, अरिमित्रमित्रं, मध्यममित्रं मध्यममित्रमित्रम्, उदासीनमित्रम्, उदासीनमित्रमित्रं चेत्यष्टौ, प्रकृताश्चत्वारः प्रकृतय इति द्वादश' इत्याह । एतेषां भेदानाह—

मनुः,

अमात्यराष्ट्रदुर्गार्थदण्डाख्याः पञ्च चापराः ।
प्रत्येकं कथिता ह्येताः सङ्क्षेपेण द्विसप्ततिः ॥ (अ०७ श्लो० १५७)

विजिगीषुः, विजिगीष्वमात्यादयः पञ्च एवं षट् । एवमन्ये एकादश माण्डलिकाः, एषाममात्यादयः प्रत्येकं पञ्च पञ्चेति द्विसप्ततिर्भवन्ति । असाध्यमरिमाह—

स एव,

प्राज्ञं कुलीनं दातारं शूरं दक्षं तथैव च ।
कृतज्ञं शक्तिमन्तं च कष्टमाहुररिं बुधाः ॥ (अ०७श्लो०२१०) इति ।
आर्यता पुरुषज्ञानं शौर्यं करुणवेदिता ।
स्थौलेलक्ष्यं च सततमुदासीनगुणोदयः ॥ (अ०७ श्लो० २११)
तान्सर्वानभिसन्दध्यात्सामादिभिरुपक्रमैः ।
व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च ॥ (अ० ७ श्लो० १५८)

अभिसन्दध्यात्, वशीकुर्यात् । विजिगीषुर्धर्मेण परान् जयेदित्युक्तम्—

---

१ अत्र 'उदासीन गुणानाह स एव' इत्यपेक्षितं त्रुटितमिव भाति ।

२ बहुप्रदत्वम् 'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे' इत्यमरः ।

३ अत्रापि 'तेषां वशीकारोपायमाह स एव' इत्यपेक्षितम् । एतत्पद्यस्थतच्छब्देन पूर्वोक्तद्विसप्ततिप्रकारराजमण्डलस्य परामर्शात् तदनन्तरमेवास्य पद्यस्य विद्यमानत्वात् ।

विष्णुधर्मोत्तरे,

यथास्य नोद्विजेल्लोको विश्वास्यश्च यथा भवेत् ।
जिगीषुर्धर्मविजयी तथा लोकं वशं नयेत् ॥
यः स्यादधर्मविजयी तस्मादुद्विजते जनः ।
प्राप्यापि वसुधां कृत्स्नां न चिरं श्रियमश्नुते ॥
धर्मेण राज्ञो भवतीह वृद्धिर्धर्मेण वृद्धिश्च तथा परत्र ।
धर्मेण लब्ध्वा वसुधां जितारिर्भुक्त्वा चिरं नाकमनुप्रयाति ॥ इति ।

इति द्वादशराजमण्डलम् ।

अथ षाड्गुण्यम् ।

तत्र याज्ञवल्क्यः,

सन्धिं च विग्रहं यानमासनं संश्रयं तथा ।
द्वैधीभावं गुणानेतान्यथावत्परिकल्पयेत् ॥ इति ।

मनुः,

सन्धिं च विग्रहं चैव यानयासनमेव च ।
द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ॥
आसनं चैव यानं च सन्धिं विग्रहमेव च ।
कार्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेव च ॥

सन्धिः, हस्त्यश्वादिदानादिना परस्परमुपकर्त्तव्यमित्यादिव्यवस्था । तदुक्तम्—

पणबन्धः स्मृता सन्धिः—इति ।

विग्रहो विरोधः । तदुक्तम्—

अपकारस्तु विग्रहः । इति ।

यानं, स्वबलेन शत्रुं प्रति गमनम् । तदुक्तम्—

जिगीषोः शत्रुविषये यानं यात्राऽभिधीयते । इति ।

आसनं, विग्रहमुपेक्ष्य स्वदेशेऽवस्थितिः । तदुक्तम्—
विग्रहेऽपि स्वके देशे स्थितिरासनमुच्यते । इति ।
द्वैधीभावः, स्वबलस्य द्विधाकरणम् । तदुक्तम्—
बलार्द्धेन प्रयाणं तु द्वैधीभाव स उच्यते । इति ।
संश्रयः, परपीडितस्य प्रबलराजान्तराश्रयणम् । तदुक्तम्—
उदासीने मध्यमे वा संश्रयात्संश्रयः स्मृतः ।
सन्ध्यादयो द्विविधाः । तदुक्तम्—
मनुना,
सन्धिं च द्विविधं विद्याद्राजा विग्रहमेव च ।
उभे यानासने चैव द्वैधं संश्रयमेव च ॥

तत्र सन्धिर्द्विविधो यथा—आवाभ्यां राजान्तरं प्रति यानं कर्त्तव्यमिति क्रियमाण एकः, त्वमत्र याह्यहमन्यत्र यास्यामीति द्वितीयः । एतावपि प्रत्येकं द्विविधौ तात्कालिकफलवत्त्वोत्तरकालीनफलवत्त्वाभ्याम् । तदुक्तम्—
तेनैव,
समानयानकर्मा च विपरीतस्तथैव च ।
तदात्वायतिसंयुक्तः सन्धिर्ज्ञेयो द्विलक्षणः ॥ इति ।

विग्रहो द्विविधः—स्वकार्यार्थं मार्गशीर्षादिकालेऽकाले वा कृतः स्वयङ्कृत एकः, मित्रस्यापकारे केनचित्कृते तद्रक्षार्थमपरः । तदुक्तम्—
तेनैव,
स्वयङ्कृतश्च कार्यार्थमकाले काल एव च ।
मित्रस्य चैवापकृते द्विविधो विग्रहः स्मृतः ॥ इति ।

यानं द्विविधम्—बलवत एकाकिनो मित्रसहितस्य वा । तदुक्तम्—
तेनैव,

एकाकिनश्चात्ययिके कार्ये प्राप्ते यदृच्छया ।
संहतस्य च मित्रेण द्विविधं यानमुच्यते ॥ इति ।

आसनं द्विविधम्–क्षीणबलस्य मित्ररक्षार्थं सबलस्य वा। तदुक्तम्–

तेनैव,

क्षीणस्य चैव क्रमशो दैवात्पूर्वकृतेन वा ।
मित्रस्य चानुरोधेन द्विविधं स्मृतमासनम् ॥ इति ।

द्वैधं द्विविधम्–दुर्गदेशेऽर्द्धबलेन राजावस्थानम्, अर्द्धबलेन सेनापतिप्रयाणं, वैपरीत्येन वावस्थानं गमनं च । तदुक्तम्–

बलस्य स्वामिनो वापि स्थितिः कार्यस्य सिद्धये ।
द्विविधं कीर्त्यते द्वैधं षाड्गुण्यगुणवेदिभिः ॥ इति ।

स्थितिः, द्विधाभूय स्थितिः । द्विधास्थितेर्द्वैधशरीरान्तर्गतत्वात् । संश्रयो द्विविधः–अपहृतार्थस्यादानार्थः, अमुकमयमाश्रित इति भाविपीडानिवृत्त्यर्थश्च । तदुक्तम्–

तेनैव,

अर्थसम्पादनार्थं च पीड्यमानस्य शत्रुभिः ।
साधुषु व्यपदेशार्थं द्विविधः संश्रयः स्मृतः ॥ इति ।

ते च कदा केन च कर्त्तव्या इत्यपेक्षायामाह–

मनुः,

यदाऽधिगच्छेदायत्यामाधिक्यं ध्रुवमात्मनः ।
तदात्वे चाल्पिकां पीडां तदा सन्धिं समाश्रयेत् ॥

आयत्याम्, उत्तरकाले। आधिक्यं, बलाधिक्यम् । तदात्वे, सम्प्रति । स च समेन बलीयसा वा कार्यः । तदुक्तम्–

समेन सन्धिरन्वेष्यो हीनेन च बलीयसा । इति ।

स्वयं हीनेन सता समेन सह बलीयसा वा सह सन्धिरन्वेष्यः।

मनुः,

यदा प्रहृष्टा मन्येत सर्वास्तु प्रकृतीर्भृशम्।
अत्युच्छ्रितं तथात्मानं तदा मन्येत विग्रहम्॥

विष्णुधर्मोत्तरेऽपि,

हीनेन विग्रहः कार्यः स्वयं राज्ञा वलीयसा।
राज्ञा स्वयं वलीयसा सता हीनेन शत्रुणा सह विग्रहः कार्यः।

मनुः,

यदा मन्येत भावेन हृष्टं पुष्टं स्वकं वलम्।
परस्य विपरीतं च तदा यायादरीन् प्रति॥

विष्णुधर्मोत्तरेऽपि,

वहुलाभकरं यत्स्यात्तदा यानं समाश्रयेत्।
वहुव्ययक्षयायासं तेषां राम प्रकीर्त्तितम्॥
वहुव्ययक्षयायासमित्यत्र समाहारद्वन्द्वेन नपुंसकत्वैकवद्भावौ।

मनुः,

यदा तु स्यात्परिक्षीणो वाहनेन वलेन च।
तदासीत प्रयत्नेन शनकैः सान्त्वयन्निपून्॥

विष्णुधर्मोत्तरेऽपि,

आसीत कर्मविच्छेदं शक्तः कर्त्तुं रिपुर्यदा।
यदा रिपुः शक्तः स्वापेक्षया सामर्थ्यवान् तदा कर्मणो विग्रहस्य विच्छेदं कर्त्तुमासीतेत्यर्थः।

मनुः,

मन्येतारिं यदा राजा सर्वथा वलवत्तरम्।
तदा द्विधा वलं कृत्वा साधयेत्कार्यमात्मनः॥

विष्णुधर्मोत्तरेऽपि,

अशुद्धपार्ष्णिर्वलवान्द्वैधीभावं समाश्रयेत्।

मनुः,

यदा परबलानां तु गमनीयतमो भवेत् ।
तदा तु संश्रयेत्क्षिप्रं धार्मिकं बलिनं नृपम् ॥
निग्रहं प्रकृतीनां च कुर्याद्योऽरिबलस्य च ।
उपसेवेत तं नित्यं सर्वयत्नैर्गुरुं यथा ॥

विष्णुधर्मोत्तरेऽपि,

बलिना निगृहीतस्तु योऽसन्धेयेन पार्थिवः ।
संश्रयस्तेन कर्त्तव्यो गुणानामधमो गुणः ॥

तथा,

सर्वशक्तिविहीनस्तु तदा कुर्यात्तु संश्रयम् ।

मनुः,

यदि तत्रापि सम्पश्येद्दोषं संश्रयकारितम् ।
सुयुद्धमेव तत्रापि निर्विशङ्कं समाचरेत् ॥
सर्वोपायैस्तथा कुर्यान्नीतिज्ञः पृथिवीपतिः ।
यथास्याभ्यधिका न स्युर्मित्रोदासीनशत्रवः ॥
आयतिं सर्वकार्याणां तदात्वं च विचारयेत् ।
अतीतानां च सर्वेषां गुणदोषौ च तत्त्वतः ॥
आयत्यां गुणदोषज्ञस्तदात्वे क्षिप्रनिश्चयः ।
अतीते कार्यशेषज्ञः शत्रुभिर्नाभिभूयते ॥
यथैनं नाभिसन्दध्युर्मित्रोदासीनशत्रवः ।
तथा सर्वं संविदध्यादेष सामासिको नयः ॥
चारेणोत्साहयोगेन क्रिययैव च कर्मणाम् ।
स्वशक्तिं परशक्तिं च नित्यं विद्यान्महीपतिः ॥
पीडनानि च सर्वाणि व्यसनानि तथैव च ।
आरभेत ततः कार्यं सञ्चिन्त्य गुरुलाघवम् ॥

आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः ।
कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥ इति ।

अग्निपुराणे सन्ध्यादीनामनेके प्रकारा उक्ता विस्तरभयात्तु नेह लिख्यन्ते । अथ षाड्गुण्यमध्ये सङ्क्षेपतो 'यायादरीन् प्रति'इति यदुक्तं तद्विस्तरतो निरूपयितुं यात्राप्रकरणम् । तत्रादौ तत्कालो निरूप्यते । स च तत्कालो **विष्णुधर्मोत्तरे** मात्स्ये चाभिहितः ।

राम उवाच ।

भगवन् धर्मशास्त्रज्ञ सर्वशास्त्रविशारद ।
यात्राकालविधानं मे कथयस्व महीक्षिताम् ॥

पुष्कर उवाच ।

यदा मन्येत नृपतिराक्रन्देन बलीयसा ।
पार्ष्णिग्राहाभिभूतोऽरिस्तदा यात्रां प्रयोजयेत् ॥
उच्छ्रायो वा भृता भृत्याः प्रभूतं च बलं मम ।
मूलरक्षासमर्थोऽस्मि तदा यात्रां प्रयोजयेत् ॥
मूलं, स्वदेशः ।
अशुद्धपार्ष्णिर्नृपतिर्न तु यात्रां प्रयोजयेत् ।
पार्ष्णिग्राहाधिकं सैन्यं मूले निक्षिप्य वा व्रजेत् ।
दिव्यान्तरिक्षक्षितिजैरुत्पातैः पीडितं परम् ॥
तमृक्षपीडासन्तप्तं पीडितं च तथा ग्रहैः ।
स्वबलव्यसनोपेतं तथा दुर्भिक्षपीडितम् ॥
सम्भूतान्तरकोपं च क्षिप्रं यायादरिं नृपः ।
शत्रोर्वा व्यसने यायात्काल एष सुदुर्लभः ॥ इति ।

---

१ योधान्मत्वा प्रभूतांश्च इति मात्स्ये पाठः ।

मनौ,

यदा तु यानमातिष्ठेदरिराष्ट्रं प्रति प्रभुः ।

तदानेन विधानेन यायादरिपुरं शनैः । इति ।

याज्ञवल्क्येऽपि,

यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत् ।

परश्च हीन आत्मा च हृष्टवाहनपूरुषः ॥ इति ।

विष्णुधर्मोत्तरेऽपि,

प्रज्वलन्ती तथैवोल्का दिशि यस्यां प्रपद्यते ।

भूकम्पो यां दिशं याति यां च केतुः प्रधूमयेत् ॥

निर्घातश्च पतेद्यत्र तां यायाद्वसुधाधिपः ।

विष्टिनायककं सैन्यं तथा भिन्नं परस्परम् ॥

विष्टिनायककं, विष्टिर्बलादाकृष्टः कर्मकरः स नायको यत्र तादृशम् ।

यूकामाक्षिकबहुलं बहुरोगाकुलं तथा ।

नास्तिकं भिन्नमर्यादं तथाऽमङ्गलवादिनम् ॥

अपेतप्रकृतिं चैव निराशं च तथा जये । इति ।

एतादृशं यदा परसैन्यं तदा यायादित्यनुषङ्गः ।

विष्णुर्यात्रामासानाह, चैत्रे मार्गशीर्षे वा यात्रां यायात् । इति।

वाशब्दोऽनुक्तसमुच्चये तेन फाल्गुनोऽपि ग्राह्यः । यथाह—

मनुः,

मार्गशीर्षे शुभे मासे यायाद्यात्रां महीपतिः ।

फाल्गुनं वाथ चैत्रं वा मासौ प्रति यथाबलम् ॥

अन्येष्वपि तु कालेषु यदा पश्येद्ध्रुवं जयम् ।

तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः ॥ इति ।

रिपुव्यसनस्य स्वातन्त्र्येण कालत्वाभिधानात्तत्काले का-

लान्तरप्रतीक्षा निषिध्यते ।

विष्णुधर्मोत्तरे,

चैत्रे वा मार्गशीर्षे वा यात्रां यायान्नराधिपः । इति ।

इदमुपलक्षणम् । अन्यापि ज्योतिःशास्त्रोक्ता सर्वापि कालशुद्धिर्ग्राह्या । यात्रातः पूर्वं सप्तदिनपर्यन्तं देवपूजोक्ता—

तत्रैव,

सप्ताहेन यदा यात्रा भविष्यति महीपतेः ।
तदा दिने तु प्रथमे पूजनीयो विनायकः ॥
मोदकैरक्षतैर्दध्ना कुसुमैश्च तथा फलैः ।
गन्धवस्त्रैरलङ्कारैर्धूपैर्दीपैर्मनोहरैः ॥

अग्निपुराणे तु हरिशम्भ्वोरपि पूजोक्ता—

पूजनीयो हरिः शम्भुर्मोदकाद्यैर्विनायकः । इति ।

द्वितीयेऽहनि कर्त्तव्यं सर्वदिक्पालपूजनम् ।
दिक्पालपूजनं कृत्वा तेषां च पुरतः स्थितः ॥
शय्यां कुशाद्यैः कुर्वीत सितवस्त्रोत्तरच्छदाम् ।
विकिरेन्नागपुष्पैस्तां तथा सिद्धार्थकैः शुभैः ॥
तच्छीर्षके तु पूज्या श्रीर्भद्रकाली च पादयोः ।
हरिं दक्षिणपार्श्वे तु वामे ब्रह्माणमेव च ॥
पूजितं कलशं हृद्यं कुर्यादुष्णीषके दृढम् ।
नीलपल्लवसंछन्नं चारुपुष्पोज्ज्वलं शुभम् ॥
एककालं हविष्यान्नं लघु भुक्त्वा महीपतिः ।
स्वयं दक्षिणपार्श्वेन मन्त्रमेतमुदीरयेत् ॥
नमः शम्भो त्रिनेत्राय रुद्राय वरदाय च ।
वामनाय विरूपाय स्वप्नाधिपतये नमः ॥
भगवन्देवदेवेश शूलभृद्वृषवाहन ।

इष्टानिष्टं समाचक्ष्व स्वप्ने सुप्तस्य शाश्वतम् ॥
यज्जाग्रतो दूरमिति मन्त्रमावर्तयेत्ततः ।
हृदि न्यस्य कुशान् राज्ञः प्रयतस्तु पुरोहितः ॥
ततः स्वपेच्छुभे दृष्टे यात्रा देया तु नान्यथा ।
तृतीयेऽहनि सम्प्राप्ते देवं दिङ्नाथमर्चयेत् ॥
एकमेव महाभाग दिङ्नाथं च तथा ग्रहम् ।
यां दिशं नृपतिर्गच्छेन्नाथस्तस्यास्तथैव तम् ॥
चतुर्थेऽहनि सम्प्राप्ते ग्रहयागो विधीयते ।
पञ्चमेऽहनि सम्प्राप्ते सर्वयागस्तथैव च ॥
देवतानां स्वनगरे कृता यासां तथालयाः ।
तासां सम्पूजनं कार्यं स्वपुरे या व्यवस्थिताः ॥
तत्रैव रात्रौ भूतानां कर्त्तव्यं च तथार्चनम् ।
देववृक्षेषु चैत्येषु गोपुराट्टालकेषु च ॥
चतुष्पथेषु रथ्यासु पर्वतानां गुहासु च ।
नदीतीरेषु रम्येषु देवतायतनेषु च ॥
तेषां सम्पूजनं कृत्वा स्वगृहे तान् समर्चयेत् ।
तत्र कृत्वा तथैवार्च्याः प्रमथा भूभुजा स्वयम् ॥
वासुदेवस्य देवस्य तथा सङ्कर्षणस्य च ।
प्रद्युम्नस्यानिरुद्धस्य ब्रह्मणः शङ्करस्य च ॥
कीनाशशक्रवरुणधनेशानां तु ये गणाः ।
वायोश्च निर्ऋतेर्वह्नेस्तथा चन्द्रार्कयोश्च ये ॥
ग्रहाणामथ ऋक्षाणां स्कन्दस्य धनदस्य च ।
महाबला महाकाया महासत्त्वा महाव्रताः ॥
अणिमा महिमा चैव गरिमा लघिमा तथा ।
ईशित्वेन वशित्वेन प्राप्तिनाम्ना तथा च ये ॥

यत्र कामावसायित्वं तथा येषां च विद्यते ।
एवमष्टगुणैश्वर्य्यसंयुता भीमविक्रमाः ॥
नानासत्त्वशिरोग्रीवा नानाप्रहरणायुधाः ।
नानाविरागवसना नानासत्त्ववपुर्धराः ॥
तथा नानाविधाहारा महाचेष्टा महाबलाः ।
भक्तानुकम्पिनो वीरा वरदाः कामरूपिणः ॥
प्रमथाः प्रतिगृह्णन्तु उपहारं नमोऽस्तु वः ।
सपुत्रमातृभृत्योऽहं सदारः शरणं गतः ॥
रक्षध्वं मां महाभागा गृहे युद्धे तथाध्वनि ।
चमूनां पृष्ठतो गत्वा नाशयध्वं तथा रिपून् ॥
स्वप्नं शुभाशुभं वापि कथयध्वं समाहिताः ।
विनिवृत्तश्च दास्यामि दत्तादभ्यधिकं बलिम् ॥
अनिवृत्तेन दातव्याः सयत्नेन च भूभुजा ।
पूर्ववच्च तथा रात्रौ स्वप्नप्रार्थनमिष्यते ॥ इति ।
तत्र सुस्वप्नदर्शने यात्रोक्ता—
मत्स्यपुराणे,
शरीरस्फुरणे धन्ये तथा सुस्वप्नदर्शने ।
निमित्ते शकुने धन्ये जाते शत्रुपुरं व्रजेत् ॥ इति ।
अत्र प्रसङ्गात् शुभाशुभसूचकाः सुस्वप्ना दुःस्वप्नाश्चोच्यन्ते ।
तत्र श्रीरामायणे शुभस्वप्नविषये त्रिजटावाक्यम्—
समग्रभवनां कृत्स्नां ग्रसमानः पुरीमिमाम् ।
स्वप्ने रामो मया दृष्टो रुधिरं पीतवान्बहु ॥
गजदन्तमयीं दिव्यां शिबिकामन्तरिक्षगाम् ।
युक्तां नागसहस्रेण सुखमास्थाय राघवः ॥
स्वप्ने चाद्य मया दृष्टः शुक्लाम्बरवरावृतः ।

सागरेण परिक्षिप्तं श्वेतं पर्वतमास्थितः ॥
राघवश्च मया दृष्टश्चतुर्दन्तं महागजम् ।
आरूढः शैलसङ्काशं विचरन्सह लक्ष्मणः ॥
ततस्तौ नरशार्दूलौ दीप्यमानौ स्वतेजसा ।
शुक्लमाल्याम्बरधरौ जानकीं प्रत्युपस्थितौ ॥
ततस्तस्य नगस्याग्रादाकाशस्थस्य दन्तिनः ।
भर्त्रा परिगृहीतस्य जानकी स्कन्धमाश्रिता ॥
भर्तुरङ्कात्समुत्पत्य ततः कमललोचना ।
चन्द्रसूर्यौ मया दृष्टा पाणिना परिमार्जती ॥
ततस्ताभ्यां कुमाराभ्यामास्थितः स गजोत्तमः ।
सीतया च विशालाक्ष्या लङ्कां पर्यभितः स्थितः ॥
पाण्डुरर्षभयुक्तेन रथेनाष्टयुजा स्वयम् ।
शुक्लमाल्याम्बरो रामो लक्ष्मणेन सहागतः ॥ इति ।
अष्टयुजा, अष्टर्षभयुक्तेन ।
मत्स्यपुराणे,
शैलप्रासादनागाश्ववृषभारोहणं हितम् ।
द्रुमाणां श्वेतपुष्पाणां गमनं च तथा द्विज ॥
तृणद्रुमोद्भवो नाभौ तथा च बहुबाहुता ।
तथा च बहुशीर्षत्वं पलितोद्भव एव च ॥
सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता ।
चन्द्रार्कताराग्रसनं परिमार्जनमेव च ॥
शक्रध्वजालिङ्गनं च तदुच्छ्रायक्रिया तथा ।
भूम्यम्बुधोराग्रसनं शत्रूणां च वधक्रिया ॥
जयो विवादो द्यूतेषु सङ्गमे च तथा द्विज ।
भक्षणं चाममांसानां मत्स्यानां पायसस्य च ॥

दर्शनं रुधिरस्यापि स्नानं च रुधिरेण ह ।
सुरारुधिरमद्यानां पानं क्षीरस्य चाप्यथ ॥
अन्त्रैर्विचेष्टनं भूमौ निर्मलं गगनं तथा ।
सुखेन दोहनं शस्तं महिषीणां गवां तथा ॥
सिंहीनां हस्तिनीनां च बडवानां तथैव च ।
प्रसादो देवविप्रेभ्यो गुरुभ्यश्च तथा शुभः ॥
अम्भसा त्वभिषेकश्च गवां शृङ्गाश्रितेन च ।
चन्द्राद्भ्रष्टेन वा राजन् ज्ञेयो राज्यप्रदो हि सः ॥
चन्द्राद्भ्रष्टेनाम्भसाभिषेकः ।
राज्याभिषेकश्च तथा शिरसश्छेदनं तथा ।
मरणं वह्निदाहश्च वह्निदाहो गृहस्य च ॥
लब्धिश्च राज्यलिङ्गानां तन्त्रीवाद्यादिवादनम् ।
तथोदकानां तरणं विषमस्य च लङ्घनम् ॥
हस्तिनीवडवानां च गवां च प्रसवो गृहे ।
आरोहणं तथाश्वानां रोदनं च तथा शुभम् ॥
वरस्त्रीणां तथा लाभस्तथाऽऽलिङ्गनमेव च ।
निगडैर्बन्धनं धन्यं तथा विष्ठानुलेपनम् ॥
जीवतां भूमिपालानां सुहृदामपि दर्शनम् ।
दर्शनं देवतार्चानां विमलानां तथाम्भसाम् ॥
शुभान्यथैतानि नरस्तु दृष्ट्वा प्राप्नोत्ययत्नाद्ध्रुवमर्थलाभम् ।
स्वप्नानि धर्मज्ञभृतां वरिष्ठ व्याधेर्विमोक्षं च तथाऽऽतुरोऽपि॥इति।

इति शुभस्वप्नाः ।

अथाशुभस्वप्नाः ।

तत्र श्रीरामायणे,

विमानात्पुष्पकादथ रावणः पतितो मया ।

कृष्यमाणः स्त्रिया दृष्टो मुण्डः पीताम्बरो हसन् ॥
रथेन खरयुक्तेन रक्तमाल्यानुलेपनः ।
स गत्वा दक्षिणामाशां प्रविष्टो गोमयह्रदम् ॥
कण्ठे बद्ध्वा दशग्रीवं प्रमदा रक्तवासिनी ।
काली करालवदना दिशं याम्यां प्रकर्षति ॥
वराहेण दशग्रीवः शिशुमारेण चासकृत् ।
उष्ट्रेण च मया दृष्टः प्रयातो दाक्षिणां दिशम् ॥
सप्राजश्च मया दृष्टो गीतवादित्रनृत्तवान् ।
बिभ्रतां रक्तमाल्यानि रक्षसां रक्तवाससाम् ॥
लङ्का चेयं पुरी दृष्टा गजवाजिरथाकुला ।
सागरे पतिता कृत्स्ना भग्नप्राकारतोरणा ॥
पीत्वा तैलं प्रनृत्यन्ति प्रहसन्ति महास्वराः ।
लङ्कायां भस्मरूक्षायां सर्वराक्षसयोषितः ॥
कुम्भकर्णादयश्चेमे सर्वे राक्षसपुङ्गवाः ।
पीतैर्निवसनैर्दृष्टाः क्रीडतो गोमयह्रदे ॥ इति ।
मत्स्यपुराणविष्णुधर्मोत्तरयोरपि,
इदानीं कथयिष्यामि निमित्तं स्वप्नदर्शने ।
नाभिं विनान्यगात्रेषु तृणवृक्षसमुद्भवः ॥
चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा ।
मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता ॥
उच्चात्प्रपतनं चैव दोलारोहणमेव च ।
अर्ज्जनं पद्मलोहानां तपतामपि धारणम् ॥
रक्तपुष्पद्रुमाणां च चण्डालस्य तथैव च ।

---

१ अर्जनं पक्वलोहानां हयानामपि मारणम् । इति मात्स्ये पाठः ।

वराहर्क्षखरोष्ट्राणां तथा चारोहणक्रिया ॥
भक्षणं पक्वमांसानां तैलस्य कृसरस्य च ।
नर्तनं हसनं चैव विवाहो गीतमेव च ॥
तन्त्रीवाद्यविहीनानां वाद्यानां चापि वादनम् ।
स्रोतोऽवगाहगमनं स्नानं गोमयवारिणा ॥
पङ्कोदकेन च तथा महीतोयेन वाप्यथ ।
मातुः प्रवेशो जठरे चितारोहणमेव च ॥
शक्रध्वजाभिपतनं पतनं शशिसूर्ययोः ।
दिव्यान्तरिक्षभौमानामुत्पातानां च दर्शनम् ॥
देवद्विजातिभूपालगुरूणां क्रोध एव च ।
आलिङ्गनं कुमारीणां पुरुषाणां च मैथुनम् ॥
हानिश्चैव स्वगात्राणां विरेकवमनक्रिया ।
दक्षिणाशाभिगमनं व्याधिनाभिभवस्तथा ॥
फलापहारश्च तथा गृहाणां चैव पातनम् ।
गृहसम्मार्जनं चैव धनहानिं विनिर्दिशेत् ॥
पीडा पिशाचक्रव्यादवानरान्त्यनरैरपि ।
परादभिभवश्चैव तस्माच्च व्यसनोद्भवः ॥
काषायवस्त्रधारित्वं तद्वत्स्त्रीक्रीडनं तथा ।
तद्वत्स्त्रीक्रीडनं, काषायवस्त्रयुक्तस्त्रिया सह क्रीडनम् ।
स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम् ।
एवमादीन्यधन्यानि स्वप्नानि तु विनिर्दिशेत् ॥ इति ।

ऐतरेयारण्यके,अथ स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एनमास्कन्दयत्याशुवायुरेनं प्रवहति सुवर्णं खादित्वापगिरति मध्वश्नाति बिसानि भक्षयत्येकपुण्डरीकं धारयति खरैर्वराहैर्युक्तैर्याति कृष्णां धेनुं कृष्णव-

त्सां नलदमाली दाक्षिणामुखो व्राजयति स यद्येतेषां किञ्चित्प-श्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वान्येनान्नेन ब्राह्मणान् भोजयित्वा चरुं स्वयं प्राश्नी-यात् । इति । ( आ० ३ अ० २ खं० १० )

अथेत्यादि दश स्वप्नारिष्टानि । स्वप्ने साकल्येनात्यन्तं कृष्णवर्णं पुरुषं कृष्णवर्णैर्दन्तैर्युक्तं पश्यति स च पुरुष एनं स्व-प्नद्रष्टारं हन्ति इत्येकमरिष्टम् । अरण्ये प्रौढो वराहो हन्ति इति द्वितीयम् । मर्कटो मूर्द्धन्यारोहतीति तृतीयम् । शीघ्रवायुः स्ववे-गेन निम्नदेशे वलात्प्रवहतीति चतुर्थम् । सुवर्णं भक्षयित्वा वमतीति पञ्चमम् । मधुआकण्ठमश्नातीति षष्ठम् । विसानि पद्मा-नां नालानि भक्षयतीति सप्तमम् । एकं रक्तवर्णं पुण्डरीकं शि-रसि धारयतीति अष्टमम् । युक्तैरश्ववत्सज्जीकृतैर्गर्दभैर्वराहैर्वा ग्रामान्तरं गच्छतीति नवमम् । नलदमाली रक्तकुसुमग्रथितस्र-ग्वी दक्षिणदिगभिमुखो भूत्वा कृष्णवत्सोपेतां कृष्णां धेनुं व्राजयति प्रेरयतीति दशमम् । एतैः स्वप्नगतैररिष्टैः प्रत्यासन्नं मरणं निश्चित्य यदस्यानन्तरकर्त्तव्यं तद्दर्शयति—स यदीति । स पुमानेषामरिष्टानां मध्ये एकमपि पश्येत्तस्मिन्दिने उपोष्य स्थालीपाकविधानेन पायसं श्रपयित्वा रात्रीव्यख्यदायतीतिसू-क्तेन प्रत्यृचं हुत्वा स्वगृहपक्केनान्नेन यथाशक्ति ब्राह्मणान् भोज-यित्वा होमशेषं स्वयं प्राश्नीयात् । एतेषु स्वप्नेषु अयं विशेषः । सामान्यतस्तु दुःस्वप्नदर्शनेऽन्यो विधिरुक्तः—

स्वप्नममनोज्ञं दृष्ट्वा द्यानो देव सवितरितिद्वाभ्यां यच्च गोषु दुःस्वप्नमिति पञ्चभिरादित्यमुपतिष्ठेत यो मे राजन्युज्यो वा सखा वेति सप्तर्भिरादित्यमुपतिष्ठेतैकया वा । इति ।

एषामकथनं धन्यं भूयश्च स्वपनं तथा ।

एषां, दुःस्वप्नानाम्।
फल्कस्नानं तिलैर्होमो ब्राह्मणानां च पूजनम्।
स्तुतिश्च वासुदेवस्य तथा तस्यैव पूजनम्॥
नागेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्ननाशनम्।
तथा,
अच्युतं केशवं विष्णुं हरिं सत्यं जनार्दनम्।
हंसं नारायणं चैव एतन्नामाष्टकं शुभम्॥
त्रिसन्ध्यं यः पठेन्नित्यं दारिद्र्यं तस्य नश्यति।
शत्रुसैन्यं क्षयं याति दुःस्वप्नं च विनश्यति॥
गङ्गायां मरणं चैव दृढभक्तिश्च केशवे।
ब्रह्मविद्यावबोधश्च तस्मान्नित्यं पठेन्नरः॥ इति।

इति दुःस्वप्नाः।

अथ शुभाशुभस्वप्नविपाककालः।

स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः।
षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्तृतीयके॥
चतुर्थे मासमात्रेण पश्यतो नात्र संशयः।
एकस्यां यदि वा रात्रौ शुभं वा यदि वाऽशुभम्॥
पश्चात् दृष्टस्तु यस्तत्र तस्य पाकं विनिर्दिशेत्।
तस्माच्छोभनके स्वप्ने पश्चात्स्वप्नं न शस्यते॥ इति।

तदेवं पञ्चमेऽहनि सुस्वप्नदर्शने षष्ठेऽहनि यात्रायां निश्चितायां कृत्यान्तरमुक्तम्—

विष्णुधर्मोत्तरे,
षष्ठेऽहनि जयस्नानं कर्त्तव्यं च तथा भवेत्।
विधिस्तस्याभिषेकार्थः सर्व एव विधीयते॥
अस्य जयाभिषेकस्य प्रयोगो वक्ष्यते। अत्रैवं वक्ष्यमाणा

घृतकम्बलशान्तिर्नीराजनशान्तिश्च यथासम्भवं कर्त्तव्या ।

यात्रादिने तु सम्प्राप्ते क्षुरकर्म विवर्जयेत् ।
अभ्यङ्गं गृहकार्यं च क्रोधशोकौ च काङ्कतम् ॥
काङ्कतं, केशप्रसाधनम् ।
यातव्यं येन तेनाद्य तदुक्तं स्नानमाचरेत् ।
स्नातः शुक्लाम्बरः स्रग्वी तथा श्वेतानुलेपनः ।
चित्राभरणवान्राजा दूर्वापल्लवलाञ्छनः ।
पूजयित्वा महाभागं देवदेवं त्रिविक्रमम् ॥
जुहुयाच्च ततो वह्नौ सुसमिद्धे पुरोहितः ।
आयुष्यमभयं चैव तथा स्वस्त्ययनं गणम् ॥
शर्मवर्मगणं चैवं तथा प्रतिरथं शुभम् ।
शाकुनं च तथा सूक्तं सूक्तं वैष्णवमेव च ॥
तथाग्निलक्षणोत्पत्तौ शुभे यायान्महीपतिः ।
नक्षत्रस्य दिशश्चैव नैवेद्यं यत्प्रकीर्त्तितम् ॥
तदेव नृपतिः प्राश्य यात्रां कुर्याद्यथाविधि ।
अहृद्यं मक्षिकाकेशकीटयुक्तं विवर्जयेत् ॥
दग्धं च वर्जयेद्यात्रा देया भवति नान्यथा ।
अन्यथा, केशकीटादिपाते ।
ततस्तु राजलिङ्गानामायुधानां तथैव च ।
नीराजनोक्तमन्त्रैस्तु सर्वास्तानभिमन्त्रयेत् ॥
मन्त्रा यथा—

राम उवाच ।

छत्राश्वकेतुकरिणां पताकाखड्गचर्मणाम् ।
तथा दुन्दुभिचापानां ब्रूहि मन्त्रं ममानघ ॥

पुष्कर उवाच ।

शृणु मन्त्रान्महाभाग भगवान्यत्पराशरः ।
गालवाय पुरोवाच सर्वधर्मभृतां वरः ॥

पराशर उवाच ।

यथाम्बुदश्छादयति शिवायेमां वसुन्धराम् ।
तथाच्छादय राजानं विजयारोग्यवृद्धये ॥

इति छत्रमन्त्रः ।

गन्धर्वकुलराजस्त्वं मा भूयाः कुलदूषकः ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥
प्रभावस्त्वं हुताशस्य भगवंस्त्वं तुरङ्गम ।
तेजसा चैव सूर्यस्य मुनीनां तपसा तथा ॥
रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च ।
स्मर त्वं राजपुत्रोऽसि कौस्तुभं च मणिं स्मर ॥
यां गतिं ब्रह्महा गच्छेत्पितृहा मातृहा तथा ।
भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥
सूर्याचन्द्रमसौ वायुर्यावत्पश्यन्ति दुष्कृतम् ।
व्रजेस्त्वं तां गतिं क्षिप्रं तच्च पापं भवेत्तव ॥
विकृतिं यदि गच्छेर्नो युद्धेऽध्वनि तुरङ्गम ।
रिपून् विजित्य समरे सह भर्त्रा सुखी भव ॥

इत्यश्वमन्त्रः ।

शक्रकेतो महावीर सुपर्णस्त्वच्युताश्रितः ।
पतत्रिराड्वैनतेयस्तथा नारायणध्वजः ॥
काश्यपेयोऽमृताहर्ता नागारिर्विष्णुवाहनः ।
अप्रमेयो दुराधर्षो रणे चैवारिसूदनः ॥

गरुत्मान्मारुतगतिस्त्वयि सन्निहितः स्थितः ।
साश्ववर्मायुधान्योधान् रक्षास्माकं महीमृन् ॥

इति ध्वजमन्त्रः

कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः ॥
तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः ।
भद्रो मन्दो मृगश्चैव गजः सङ्कीर्ण एव च ॥
वने वने प्रसूतास्ते स्मर योनिं महागज ।
पान्तु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः ॥
भर्त्तारं रक्ष नागेन्द्र समयः प्रतिपाल्यताम् ।
अवाप्नुहि जयं युद्धे गमने स्वस्ति नो व्रज ॥
श्रीस्ते सोमाद्बलं विष्णोस्तेजः सूर्याज्जवोऽनिलात् ।
स्थैर्यं मेरोर्जयं रुद्राद्यशो देवात्पुरन्दरात् ॥
युद्धे रक्षन्तु नागास्त्वां दिशश्च सह दैवतैः ।
अश्विभ्यां सह गन्धर्वाः पान्तु त्वां सर्वतः सदा ॥

इति हस्तिमन्त्रः ।

हुतभुग्वसवो रुद्रा वायुः सोमो महर्षयः ।
नागकिन्नरगन्धर्वयक्षभूतगणग्रहाः ॥
प्रमथास्तु सहादित्यैर्भूतेशो मातृभिः सह ।
शक्रसेनापतिः स्कन्दो वरुणश्चाश्रितस्त्वयि ॥
प्रदहन्तु रिपून्सर्वान् राजा विजयमृच्छतु ।
यानि प्रयुक्तान्यरिभिर्दूषणानि समन्ततः ॥
पतन्तूपरि शत्रूणां हतानि तव तेजसा ।
कालनेमिवधे यद्वद्यद्वत्त्रिपुरघातने ॥
हिरण्यकशिपोर्यद्वद्वधे सर्वासुरेषु च ।

शोभितासि तथैवाद्य शोभस्व समयं स्मर ॥
नीलान् श्वेतानिमान् दृष्ट्वा नश्यन्त्वाशु नृपारयः ।
व्याधिभिर्विविधैर्घोरैः शस्त्रैश्च युधि निर्जिताः ॥
पूतना रेवतीनाम्ना कालरात्रीति पठ्यते ।
दहत्वाशु रिपून्सर्वान् पताके त्वामुपाश्रिता ॥
इति पताकामन्त्रः ।

असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्माचारस्तथैव च ॥
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ।
नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ॥
रोहिण्याश्च शरीरं ते दैवतं तु जनार्दनः ।
पिता पितामहो देवस्स त्वं पालय सर्वदा ॥
इति खड्गमन्त्रः ।

शर्मप्रदस्त्वं समरे चर्मन् सैन्याय मे ह्यसि ।
रक्ष मां रक्षणीयोऽहं तवानघ नमोऽस्तु ते ॥
इति चर्ममन्त्रः ।

दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः ।
नवभूमिपसैन्यानां तथा विजयवर्धनः ॥
यथा जीमूतघोषेण हृष्यन्ति शिखिचारणाः ।
तथा च तव शब्देन त्रस्यन्त्वस्मद्द्विषो रणे ॥
इति दुन्दुभिमन्त्रः ।

सर्वायुध महामात्र सर्वदेवारिसूदन ।
चापस्त्वं सर्वतो रक्ष साकं शरवरैः सदा ॥
इति चापमन्त्रः ।

दैववित्प्रयतो भूत्वा राजा वाथ पुरोहितः ।
तेषां सम्पूजनं कृत्वा दैवज्ञं समुपस्थितम् ॥
धनेन पूजयेद्राजा दक्षिणाभिर्द्विजोत्तमान् ।
ततः पुण्याहघोषेण द्विजानां हतकल्मषः ॥
मङ्गलालम्भनं कृत्वा मन्त्रमेतं निशामयन् ।
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥
लोकपालाः सगन्धर्वा नद्यः शैला मही द्विजाः ।
अग्निः स्वाहा स्वधा स्कन्दो होमो ब्रह्मा प्रजापतिः ॥
मुहूर्तास्तिथयो भानि वेदा अयनवत्सराः ।
गावः सरस्वती देवी दीर्घमायुर्दिशन्तु ते ॥
जगत्सिसृक्षोर्या सिद्धिर्बभूव ब्रह्मणः पुरा ।
जगज्जिष्णोश्च या विष्णोः सिद्धिरासीत्त्रिविक्रमे ॥
असुरैश्वर्यनाशे च बभूव त्र्यम्बकस्य या ।
सिद्धिस्त्रिदशशत्रुघ्न्यर्थे त्रिपुरासुरघातने ॥
शक्रे वृत्रवधे या च स्कन्दे देवारिसङ्क्षये ।
तां प्राप्नुहि सदा सिद्धिं सा च यात्रास्तु ते सदा ॥
रक्षन्तु सर्वतः सर्वे देवाः शक्रपुरोगमाः ।
इति श्रुत्वा शुभां वाचं गृहीत्वा सशरं धनुः ॥
धन्वनागेतिमन्त्रेण दैवज्ञस्य करात्स्वयम् ।
तद्विष्णोः परमित्येव शृण्वन्मन्त्रमनुत्तमम् ॥
पैष्टे रिपुमुखे दद्यात्प्रथमं दक्षिणं पदम् ।
पदद्वात्रिंशकं गत्वा दिक्षु प्राच्यादिषु त्वथ ॥
नागं रथं हयं चैव युवानं चारुहेत्क्रमात् ।
युवानं, युवनरवाह्यं यानम् ।
आरुह्य सुमना गच्छेद्वाद्यघोषेण भूरिणा ॥

स निष्क्रम्य महानीशो न पृष्ठमवलोकयेत् ।
मङ्गलानि ततः पश्यन्निमित्तं च शनैर्व्रजेत् ॥ इति ।

मङ्गलानि, मङ्गलसूचकानि शकुनानि । निमित्तं, शरीरस्फुरणादि ।

## अथेष्टशकुनानि ।

तत्र विष्णुधर्मोत्तरे,
अथेष्टानि प्रवक्ष्यामि मङ्गलानि तवानघ ।
श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भास्तथैव च ॥
जलजानि च शस्यानि मांसं मत्स्याश्च भार्गव ।
सस्यम्, अकृष्णं धान्यं, कृष्णधान्यस्यापशकुनेष्वग्रे पठितत्वात् ।
गावस्तुरङ्गमा नागा बद्ध एकः पशुस्त्वजः ।
त्रिदशाः सुहृदो विप्रा ज्वलितश्च हुताशनः ॥
गणिका च महाभाग दूर्वा चार्द्रं च गोमयम् ।
रुक्मं रौप्यं तथा ताम्रं सर्वरत्नानि चाप्यथ ॥
औषधानि च सर्वज्ञ वचासिद्धार्थके तथा ।
औषधानि, असंयोजितानि ।
नृवाह्ययानं यानं च भद्रपीठं तथैव च ।
खड्गं छत्रं पताकां च मृदमायुधमेव च ॥
राजलिङ्गानि सर्वाणि शवं रुदितवर्जितम् ।
घृतं दधि पयश्चैव फलानि विविधानि च ॥
स्वस्तिकं वर्धमानं च नन्द्यावर्त्तं सकौस्तुभम् ।
नद्यश्च चित्रविन्यस्ता मङ्गल्यान्यपराणि च ॥
अक्षताश्च तथा मुख्यास्तथा दर्पणमेव च ।
अञ्जनं रोचनं चैव भृङ्गारो माक्षिकं तथा ॥

शङ्ख इक्षुस्तथा भक्ष्या वाचश्चैव तथा शुभाः ।
वादित्राणां सुखः शब्दो गम्भीरश्च मनोहरः ॥
गान्धारषड्जऋषभा याने शस्तास्तथा स्वराः ।
अनुकूलो मृदुः स्निग्धः सुखस्पर्शः सुखावहः ॥
वायुरिति शेषः । अनुकूलः, पृष्ठलग्नः ।
मेघाः शस्ता घनाः स्निग्धा गजबृंहितसन्निभाः ॥
बृंहितं, शब्दः ।
अनुलोमा तडिच्छस्ता शक्रचापं तथैव च ।
अनुलोमा ग्रहाः शस्ता दिक्पतिस्तु विशेषतः ॥
आस्तिक्यं श्रद्दधानत्वं तथा पूज्याभिपूजनम् ।
शस्तान्येतानि धर्मज्ञ यच्च स्यान्मनसः प्रियम् ॥
मनसस्तुष्टिरेवात्र परमं जयलक्षणम् ।
एकतः सर्वलिङ्गानि मनसस्तुष्टिरेकतः ॥
यानोत्सुकत्वं मनसः प्रहर्षः सुस्वप्नलाभो विजयप्रवादः ।
मङ्गल्यलब्धिः श्रवणं च राम ज्ञेयानि नित्यं विजयावहानि॥इति।

इति इष्टशकुनानि ।

अथापशकुनानि ।

विष्णुधर्मोत्तरे,

औषधानि च युक्तानि धान्यं कृष्णमशोभनम् ।
कार्पासतृणकाष्ठं च गोमयं चेतराणि च ॥

युक्तानि, संयोजितानि । गोमयं, शुष्कगोमयम् । आर्द्रगोमयस्य शकुनेषु पाठात् ।

अङ्गारं गुडमज्जास्तु मुण्डाभ्यक्तं च नग्नकम् ।
अङ्गारं सधूमम् ।

अयः पङ्कं चर्म केशा उन्मत्तं च नपुंसकम् ।
चण्डालश्वपचाद्याश्च नरा बन्धनपालकाः ॥
गर्भिणी स्त्री च वधकपिण्याकादीनि वै मृतम् ।
मृतं, सरुदितम् । अरुदितमृतस्य शकुनेषु पाठात् ।
तुषभस्मकपालास्थिभिन्नभाण्डानि यानि च ।
अहृद्यो वधशब्दश्च भिन्नभैरवगर्जितः ॥
एहीति पुरतः शब्दः शस्यते न तु पृष्ठतः ।
गच्छेतिशब्दः पश्चात्तु पुरस्तादपि गर्हितः ॥
क यासि तिष्ठ मा गच्छ किं ते तत्र गतस्य च ।
अन्ये शब्दाश्च ये दुष्टास्ते विपत्तिकरा अपि ॥
ध्वजादिषु तथा स्थानं क्रव्यादीनां विगर्हितम् ।
स्खलनं वाहनानां च वस्त्रसङ्गस्तथैव च ॥
विनिर्गतस्य द्वाराद्यैः शिरसश्चाभिघातनम् ।
छत्रध्वजादिवस्त्राणां पतनं च तथा ऽशुभम् ॥
वायुः सशर्करो रूक्षः सर्वदिग्भ्यः समुत्थितः ।
प्रतिलोमस्तथा नीचो विज्ञेयो भयकृद्विज ॥
ऋक्षा रूक्षस्वराः खड्गाः क्रव्यादाश्च विगर्हिताः ।
अप्रशस्ते तथा ज्ञेये परिवेषप्रवर्षणे ॥
दृष्ट्वा निमित्तं प्रथमं मङ्गल्यं विघ्ननाशनम् ।
केशवं पूजयेद्विद्वांस्तथैव मधुसूदनम् ॥
द्वितीये तु ततो दृष्टे प्रतीपे प्राविशेद्गृहम् । इति ।

इत्यपशकुनानि ।

अथ निमित्तानि ।

अङ्गदक्षिणभागे तु शस्तं प्रस्फुरणं शुभम् ।

अप्रशस्तं तथा वामे पृष्ठस्य हृदयस्य च ॥
लाञ्छनं पिटकं चैव ज्ञेयं स्फुरणवत्तथा ।
विपर्ययेण विहितं सर्वं स्त्रीणां विपर्ययम् ॥
दक्षिणेऽपि प्रशस्तेऽङ्गे प्रशस्तं स्याद्विशेषतः ।
अतोऽन्यथासिद्धिरजल्पनात्तु फलस्य शस्तस्य च निन्दितस्य ।
अरिष्टचिह्नोपगमे द्विजानां कार्यं सुवर्णेन च तर्पणं स्यात्॥इति ।

अन्यत्रापि,

नेत्रस्याधः स्फुरणमसकृत्सङ्गरे भङ्गहेतु—
र्नेत्रोपान्ते हरति च धनं नासिकान्ते च मृत्युः ॥
नेत्रस्योर्ध्वं हरति सकलं मानसं दुःखजालं
वामे चैतत्फलमविकलं दक्षिणे वैपरीत्यम् ॥ इति ।

ऐतरेयारण्यकेऽन्यान्यपि अशुभनिमित्तान्युक्तानि । तानि—

यथा, स यथायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्यवोचाम तौ यत्र विहीयेते चन्द्रमा इवादित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा माञ्जिष्ठा व्यस्तः पायुः काककुलायगन्धिकमस्य शिरो वायति सम्परेतोऽस्यात्मा न चिरमिव जीविष्यतीतिविद्यात्स यत्करणीयं मन्येत तत्कुर्वीत यदन्ति यच्च दूरक इति सप्त जपेदादित्प्रत्नस्य रेतस इत्येका यत्र ब्रह्मा पवमानेतिपळ्द्वयन्तमसस्परीत्येकाथापि यत्र छिद्र इवादित्यो दृश्यते रथनाभिरिवाभिख्यायेत छिद्रां वा छायां पश्येत्तदप्येवमेव विद्यादथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं वात्मानं पश्येद्विपर्यस्ते वा कन्याके जिह्मेन वा दृश्येयातां तदप्येवमेव विद्यादथाप्यपिधायाक्षिणी उपेक्षेत तद्यथा वटरकाणि सम्पतन्तीव दृश्यन्ते तानि यदा न पश्येत्तदप्येवमेव

विद्यादथाप्यपिधाय कर्णौ उपशृणुयात्स एषोऽग्नेरिव प्रज्वलतो रथस्येवोपब्दिस्तं यदा न शृणुयात्तदप्येवमेव विद्यादथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा मेघे वा विद्युतं पश्येन्मेघे वा विद्युतं न पश्येन्महामेघे वा मरीचीरिव पश्येत तदप्येवमेव विद्यादथापि यत्र भूमिं ज्वलन्तीमिव पश्येत तदप्येवमेव विद्यादिति प्रत्यक्षदर्शनानि । इति (आ०३अ०२खं० १०)

स यश्चायमिति । स यो ज्ञानरूपोऽशरीर आत्मा स चादित्यमण्डलस्थश्च एक एवेत्यवोचाम–"यश्चासावादित्यमण्डले पुरुषः सोऽहम्" इत्यनेन । तदेकत्वं तिरोभायादित्यशरीरपुरुषौ यदा निहीयेते वियुक्तौ भवत इत्येकमरिष्टम् । तत्र लिङ्गम्–चन्द्रमा इवादित्यो दृश्यते न रश्मयः प्रादुर्भवन्तीति। रश्मय उष्णाः । मञ्जिष्ठावत् द्यौर्लोहिनी दृश्यते इति द्वितीयम् । पायुद्वारं व्यस्तं विवृत्तं दृश्यते इति तृतीयम् । काकनीडसदृशगन्धमस्य शिरो भवतीति चतुर्थम् । एषामन्यतरस्मिन् सम्पन्नेऽस्यात्मा जीवो मृतो न चिरञ्जीविष्यतीति निश्चिनुयात् । ततः किमित्याह–स यदिति । करणीयं, लौकिकं वैदिकं च । तावद्विलम्बसिद्ध्यर्थं यदन्तीत्यादिका ऋचो जपेत् । अरिष्टान्तरं दर्शयति- अथेति। सूर्यो रथचक्रनाभिरिव सच्छिद्रो भवति, स्वच्छायां वा सच्छिद्रां पश्येत्, तदपि पूर्ववत् । आदर्शो, दर्पणः । अत्रादर्शोदकाभ्यां प्रतिबिम्बयोग्यानि स्वच्छानि खड्गादीन्युपलक्ष्यन्ते । तेषु प्रतिबिम्बयोग्येषु द्रव्येषु आत्मानं स्वकीयं देहं जिह्मशिरसं कुटिलशिरसं शिरोरहितं वा पश्येदिति निमित्तद्वयम् । कन्याके, अक्षिकनीनिके, प्रतिबिम्बितचक्षुर्गोलमध्ये विपर्यस्ते शुक्लमण्डलमध्ये कृष्णमण्डलमिति यथास्थितचक्षुःसन्निवेशापेक्षया विपरीते, जिह्मेन वा, वक्रत्वेन वा उपलक्षिते इति

निमित्तद्वयमेवं निमित्तचतुष्टयम् । अरिष्टसूचकमरिष्टान्तरं द-र्शयति—अथापीति । अक्षिणी नेत्रे अपिधायाच्छाद्य निमी-ल्येत्यर्थः । उपेक्षेत पश्येत्, अपाङ्गाववष्टभ्येति शेषः । वट-रकाणि, नानावर्णानि कार्पासपटलानीव सम्पतन्ति पतमा-नानि पश्येत् । इदं च वस्तुगतिकथनम् । वटरकाणि यदा न पश्येत् नावलोकयेत्, तदपि एवमेव, पूर्वोक्तारिष्टवदेव विद्या-त् जानीयात् । अरिष्टान्तरं दर्शयति—अथापीति । अत्रापि व-स्तुगतिकथनम् । सर्वो हि लोकः कर्णौ स्वश्रोत्ररन्ध्रे अपिधा-य, स्वाङ्गुलीभ्यां दृढमिति शेषः । शृणुयात्, शब्दस्य साक्षात्कारं कुर्यात्करोति । स एषः, स शब्दः, प्रज्वलतोऽग्नेरिव, रथस्येव, वेगेन गच्छत इति शेषः । उपब्दिः, घोषः । प्रज्वलतोऽग्ने-र्घोष इव वेगेन गच्छतो रथस्य घोष इवेति वस्तुस्थितिः । तं य-दा न शृणुयात् तदापि एवमेव पूर्वोक्तमिव विद्यात् । अरिष्टा-न्तरं दर्शयति—अथापीति । यथा मयूरस्य शिखण्डिनो ग्रीवा नीललोहिता तथाग्निर्नील इव दृश्यते तदप्यरिष्टान्तरम् । अ-मेघे, मेघरहिते निर्मलाकाशे, विद्युतं, परैरदृश्यमानामितिशेषः । पश्येदवलोकयति । मेघे वा विद्युतं, परैर्दृश्यमानामितिशेषः । न पश्येत् । महामेघे, वर्षर्तुमध्ये भूमौ सर्वत्रान्धकारमापादयन् प्रौढो मेघो मध्याह्नादिकाले कदाचिद्भवति स महामेघस्तस्मिन् महामेघे । मरीचीरिव सूर्यरश्मीनिव पश्येत् एवं चत्वार्यरिष्टानि । अथापीति । यत्र भूमिं शुष्कतृणलोष्टादिरहितां केवलां मृत्तिकां ज्वलन्तीं ज्वालायुक्तामिव पश्येत् इत्येकमरिष्टम् । उदाहृतानाम-रिष्टानामुपसंहार—इति प्रत्यक्षदर्शनानीति । जागरावस्थायामपि प्रत्यक्षेण दृश्यमानान्यरिष्टानि ज्ञेयानि। अथ राज्ञो युद्धार्थं प्रस्थि-तस्य षड्दिनपर्यन्तं प्रस्थानमभिहितं सप्तमे दिने यात्रा। तत्र विष्णु-

धर्मोत्तरे षष्ठे दिने जयस्नानमभिहितम्—

षष्ठेऽहनि जयस्नानं कर्त्तव्यं च तथा भवेत्।
विधिस्तस्याभिषेकार्थः सर्व एव विधीयते॥

इत्यादिना। तद्विधिश्च लिङ्गपुराणेऽभिहितः। तथा हि महादेवं प्रति मनोः प्रश्नः।

शक्राय कथितं पूर्वं धर्मकामार्थमुक्तिदम्।
जयाभिषेकं देवेश वक्तुमर्हसि मे प्रभो॥

सूत उवाच।

तस्मै देवो महादेवो भगवान्नीललोहितः।
जयाभिषेकमखिलमवदत्परमेश्वरः॥

शिव उवाच।

जयाभिषेकं वक्ष्यामि नृपाणां हितकाम्यया।
अपमृत्युजयार्थं तु सर्वशत्रुजयाय च॥
युद्धकाले च सम्प्राप्ते कृत्वेदमभिषेचनम्।
स्वपत्नीं चाभिषिच्यैवं गच्छेद्योद्धुं रणाजिरे॥
विधिना मण्डपं कृत्वा प्रपां वा कूटमेव वा।
नवधा स्थापयेद्वह्निं ब्राह्मणो वेदपारगः॥
ततः सर्वाभिषेकार्थे सूत्रपातं च कारयेत्।
प्रागाद्यं वर्णसूत्रं च दक्षिणाद्यं तथा पुनः॥
सहस्राणां द्वयं तत्र शतानां च चतुष्टयम्।
शेषमेकं तथा कोष्ठं तेषु कोष्ठानि संहरेत्॥
बाह्ये वीथ्यां पदं चैकं समन्तादुपसंहरेत्।
अङ्गसूत्राणि सङ्गृह्य विधिना पृथगेव तु॥
प्रागाद्यं वर्णसूत्रं च दक्षिणाद्यं तथा पुनः।

प्रागाग्रं दक्षिणाग्रं च पद् रेखाः संहरेत्क्रमात् ॥
प्रागाग्राः पङ्क्तयः सप्त दक्षिणाग्रास्तथा पुनः ।
तस्मादेकोनपञ्चाशत्पङ्क्तयः परिकीर्त्तिताः ॥
न च पङ्क्तिं हरेन्मध्ये गन्धगोमयवारिणा ।
कमलं वा लिखेत्तत्र हस्तमात्रं सुशोभनम् ॥
अष्टपत्रं सितं वृत्तं कर्णिकाकेसरान्वितम् ।
अष्टाङ्गुलप्रमाणेन कर्णिका हेमसन्निभा ॥
चतुरङ्गुलमानेन केसरस्थानमुच्यते ।
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च यथाक्रमम् ॥
आग्नेयादिषु कोणेषु स्थापयेत्प्रणवेन तु ।
अव्यक्तादीनि वै दिक्षु गोत्राचारेण विन्यसेत् ॥
अव्यक्तो नियतः कालः कला चेति चतुष्टयम् ।
सितरक्तहिरण्याभकृष्णा धर्मादयः क्रमात् ॥
हंसाकारेण वै गात्रं हेमाभासेन सुव्रत ।
शक्तिराधारमध्ये तु कमलं सृष्टिकारणम् ॥
विन्दुमात्रं कलामध्ये नादाकारमतः परम् ।
नादोपरि शिवं ध्यायेदोङ्काराख्यं जगद्गुरुम् ॥
मनोन्मनीं पदान्तस्थां महादेवं च भावयेत् ।
वामादयः क्रमेणैव प्रागाद्याः केसरेषु वै ॥
वामा ज्येष्ठा तथा रौद्री कला विकरणी तथा ।
वलप्रमथनी देवी दमनी च यथाक्रमम् ॥
वामदेवादिभिः सार्द्धं प्रणवेन तु विन्यसेत् ।
नमोऽस्तु वामदेवाय नमो ज्येष्ठाय शूलिने ॥
रुद्राय कालरूपाय कलाविकरणाय च ।
वलानां च तथा सर्वभूतस्य दमनाय च ॥

मनोन्मनाय देवाय मनोन्मन्यै नमो नमः ।
मन्त्रैरेतैर्यथान्यायं पूजयेन्मण्डलोपरि ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
द्वितीयावरणे चैव शक्तयः षोडशैव तु ॥
तृतीयावरणे चैव चतुर्विंशदनुक्रमात् ।
पिशाचवीथी वै मध्ये नाभिवीथी समन्ततः ॥
पिशाचानां हि मध्ये तु महावीथी प्रकीर्तिता ।
अष्टोत्तरसहस्रं तु पदमष्टारसंयुतम् ॥
तेषु तेषु पृथक्त्वेन पदेषु कमलं क्रमात् ।
कल्पयेच्छालिनीवारगोधूमाणुयवादिभिः ॥
तण्डुलैश्च तिलैर्वाथ गौरसर्षपसंयुतैः ।
अथ वा कल्पयेदेतैर्यथाकालं विधानतः ॥
अष्टपत्रं लिखेत्तेषु कर्णिकाकेसरान्वितम् ।
शालीनामाढकं प्रोक्तं कमलानां पृथक् पृथक् ॥
तण्डुलानां तदर्द्धं स्यात्तदर्द्धं तु यवादयः ।
द्रोणं प्रधानकुम्भस्य तदर्द्धं तण्डुलाः स्मृताः ॥
तिलानामाढकं मध्ये यवानां च तदर्द्धकम् ।
अर्घ्याम्भसा समभ्युक्ष्य कमलं प्रणवेन तु ॥
तेषु सर्वेषु विधिना प्रणवं च न्यसेत्क्रमात् ।
एवं समाप्य चाभ्यर्च्य पदसाहस्रमुत्तमम् ॥
कलशानां सहस्राणि हैमानि च शुभानि तु ।
उक्तलक्षणयुक्तानि कारयेद्राजतानि वा ॥

---

१ मन्त्रैरेतैर्यथान्यायं पिशाचानां प्रकीर्तिता । इतिमुद्रितलिङ्गपुराणे पाठः ।

ताम्रजानि यथान्यायं प्रणवेनार्घ्यवारिणा ।
द्वादशाङ्गुलविस्तारमुदरे समुदाहृतम् ॥
वर्त्तितस्तु तदर्द्धेन नाभिस्तस्य विधीयते ।
कण्ठं च व्यङ्गुलोत्सेधं विस्तारं चतुरङ्गुलम् ॥
ओष्ठं तु व्यङ्गुलोत्सेधं निर्गमं तु द्विरङ्गुलम् ।
तस्माद्वै द्विगुणं दिव्यं शिवकुम्भं प्रकीर्त्तितम् ॥
यवमात्रान्तरं सम्यक् तन्तुनावेष्ट्य कीर्त्तिताः ।

---

१ अत्र मुद्रितलिङ्गपुराणे-यवमात्रान्तरं सम्यक्तन्तुनावेष्टयेद्द्विवै । इति पाठपूर्वकम्-"अवगुण्ठ्य तथाभ्युक्ष्य कुशोपरि यथाविधि । पूर्ववत्प्रणवेनैव पूरयेद्गन्धवारिणा ॥ स्थापयेच्छिवकुम्भाढ्यं वर्धनीं च विधानतः । मध्यपद्मस्य मध्ये तु सकूर्चं साक्षतं क्रमात् ॥ आवेष्ट्य वस्त्रयुग्मेन प्रच्छाद्यकमलेन तु । हैमेन चित्ररत्नेन सहस्रकलशं पृथक् ॥ शिवकुम्भे शिवं स्थाप्य गायत्र्या प्रणवेन च । विद्महे पुरुषायैव महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् । मन्त्रेणानेन रुद्रस्य सान्निध्यं सर्वदा स्मृतम । वर्धन्यां देव गायत्र्या देवीं संस्थाप्य पूजयेत् ॥ गणाम्बिकायै विद्महे महातपायै धीमहि । तन्नो गौरी प्रचोदयात् । प्रथमावरणे चैव वामाद्याः परिकीर्तिताः । प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥ शक्तयः षोडशैवात्र पूर्वाद्यं तेषु सुव्रत । ऐन्द्रव्यूहस्य मध्ये तु सुभद्रां स्थाप्य पूजयेत् ॥ भद्रामाग्नेयचक्रे तु याम्ये तु कनकाण्डजाम् । अम्बिकां नैर्ऋते व्यूहे मध्यकुम्भे तु पूजयेत् ॥ श्रीदेवीं वारुणे भागे वागीशां वायुगोचरे । गोमुखीं सौम्यभागे तु मध्ये कुम्भे तु पूजयेत् ॥ रुद्रव्यूहस्य मध्ये तु भद्रकर्णीं समर्चयेत् । ऐन्द्राग्निविदिशोर्मध्ये पूजयेदणिमां शुभाम् ॥ याम्यपावकयोर्मध्ये लघिमां कमले न्यसेत् । राक्षसान्तकयोर्मध्ये महिमां मध्यतो यजेत् ॥ वरुणासुरयोर्मध्ये प्राप्तिं वै मध्यतो यजेत् ॥ वरुणानिलयोर्मध्ये प्राकाम्यं कमले न्यसेत् ॥ वित्तेशानिलयोर्मध्ये ईशित्वं स्थाप्य पूजयेत् । वित्तेशेशानयोर्मध्ये वशित्वं स्थाप्य पूजयेत् ॥ ऐन्द्रेशेशानयोर्मध्ये यजेत्कामावसा-

पूर्वं या देवताः सर्वाः प्रधानकलशेषु च ॥
पूजयेद्व्यूहमध्ये च पूर्ववद्विधिपूर्वकम् ।
दक्षां दक्षायिकां चैव चण्डां चण्डायिकां तथा ॥
हरां हरायिकां चैव शौण्डां शौण्डायिकां तथा ।
प्रथमां प्रथमायिकां मन्मथां मन्मथायिकाम् ॥
भीमां भीमायिकां चैव शकुनिं शकुनायिकाम् ।
सुमतिं च सुमत्यार्यीं गोपीं गोपायिकां तथा ॥
अथ नन्दं च नन्दार्यीं पितामहमतः परम् ।
पितामहार्यीं पूर्वायां विधिवत्स्थाप्य पूजयेत् ॥
एवं सम्पूज्य विधिना तृतीयावरणं शुभम् ।
सौभद्रव्यूहमासाद्य प्रथमावरणे क्रमात् ॥
प्रागाद्यं स्थाप्य विधिना शक्त्यष्टकमनुक्रमात् ।
द्वितीयावरणे चैव प्रागाद्यं शृणु शक्तयः ॥
षोडशैव समभ्यर्च्य पद्ममुद्रां प्रदर्शयेत् ।
बिन्दुका बिन्दुगर्भा च नादिनी नादगर्भजा ॥
शक्तिका शक्तिगर्भा च परा चैव परापरा ।
प्रथमावरणेऽष्टौ च शक्तयः परिकीर्तिताः ॥
चण्डा चण्डमुखी चैव चण्डवेषा मनोजवा ।
चण्डाक्षी चण्डनिर्घोषा भ्रुकुटी चण्डनायिका ॥
मनोद्भवा मनोऽध्यक्षा मानसी माननायिका ।
मनोहारी मनोह्लादी मनःप्रीतिर्महेश्वरी ॥
द्वितीयावरणे चैव षोडशैव प्रकीर्तिताः ।

---

यकम् । द्वितीयावरणं प्रोक्तं तृतीयावरणं शृणु ।" इत्यधिकं वर्तते अपेक्षितं च ।

१ शक्तयस्तु चतुर्विंशत्प्रधानकलशेषु च । इति च पाठः ।

सौभद्रं कथितं व्यूहं भद्रव्यूहं शृणुष्व मे ॥
ऐन्द्री हुताशनी याम्या नैर्ऋती वारुणी तथा ।
वायव्या चैव कौबेरी ऐशानी चाष्टशक्तयः ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
हरिणी च सुवर्णा च काञ्चनी हाटकी तथा ॥
रुक्मिणी च[1] नमस्या च सुभगा जम्बुनायिका ।
वाग्भवा वाक्पथा वाणी भीमा चित्ररथा सुधीः ॥
वेदमाता हिरण्याक्षी द्वितीयावरणे स्मृताः ।
भद्राख्यं कथितं व्यूहं कनकाख्यं शृणुष्व मे ॥
वज्रं शक्तिश्च दण्डश्च खड्गं पाशो ध्वजस्तथा ।
गदा त्रिशूलं क्रमशः प्रथमावरणे स्मृताः ॥
बुद्धा प्रबुद्धा चण्डा च मुण्डा चैव कपालिनी ।
मृत्युहन्त्री विरूपाक्षी कपर्दी कमलासना ॥
दंष्ट्रिणी रङ्गिणी चैव लम्बाक्षी कङ्कभूषणी ।
सम्भवा शार्ङ्गिणी चैव षोडशैताः प्रकीर्तिताः ॥
कथितं कनकव्यूहमाम्बिकाख्यं शृणुष्व मे ।
खेचरी सर्वनामा च शमनी ब्रह्मरूपिणी ॥
चलिनी बलनामा च माहिमाऽमृतलालसा ।
प्रथमावरणे चाष्टौ शक्तयः सर्वसम्मताः ।
शङ्खिनी शिखरा देवी मृदुरवा सुशीतला ॥
छाया भूतधनी धन्या इन्द्रमाता च वैष्णवी ।
तृष्णा रागवती मोहा कामकोपा मदोत्कटा ॥
इन्द्रा च वधिरा[2] देवी षोडशैताः प्रकीर्त्तिताः ।
कथितं चाम्बिकाव्यूहं श्रीव्यूहं शृणु सुव्रत ॥

---

१ सत्यभामा चेत्यपि पाठः । २ भाविनी इत्यपि पाठः ।

स्पर्शा स्पर्शवती गन्धा प्राणापानसमानका ।
उदाना व्याननामा च प्रथमावरणे स्मृताः ॥
तमोहता प्रभा मोघा तेजनी दहनी तथा ।
भीमास्या ज्वालिनी शेषा शोषिणी रुद्रनायिका ॥
वीरभद्रा गणाध्यक्षा चन्द्राहासा च गह्वरा ।
गणमाताऽम्बिका चैव शक्तयः सर्वसम्मताः ॥
द्वितीयावरणे प्रोक्ताः षोडशैव यथाक्रमात् ।
श्रीव्यूहं कथितं भद्रं वागीशं शृणु सुव्रत ॥
धारा वारिधरा चैव वाह्निकी वायसी तथा ।
मर्यातीता महामाया वज्रिणी कामधेनुका ॥
प्रथमावरणेऽप्येवं शक्तयोऽष्टौ प्रकीर्त्तिताः ।
पयोष्णी वारुणी शान्ता जयन्ती च वरप्रदा ॥
प्लाविनी जलमाता च पयोमाता महाम्बिका ।
रक्ता कराली चण्डाक्षी महोच्छुष्मा पयस्विनी ॥
माया विद्येश्वरी काली कालिका च यथाक्रमम् ।
षोडशैव समाख्याताः शक्तयः सर्वसम्मताः ॥
व्यूहं वागीश्वरं प्रोक्तं गोमुखं व्यूहमुच्यते ।
शङ्खिनी हलिनी चैव लम्बकर्णा च कल्किनी ॥
यक्षिणी मालिनी चैव वमनी वरमानिनी ।
प्रथमावरणे चैव शक्तयोऽष्टौ प्रकीर्तिताः ॥
चण्डा घण्टा महानादा सुमुखी दुर्मुखी बला ।
रेवती प्रथमा घोरा सौम्या लीना महाबला ॥
जया च विजया चैव अजिता चापराजिता ।
द्वितीयावरणे चैताः शक्तयः षोडशैव तु ॥

---

१ सैन्या इति पाठः ।

णा शृणुष्व ।
महा[1]चण्डा विरूपाक्षी शुष्काभाकाशमातृका ॥
संहारी जातहारी च दंष्ट्राली शुष्करेवती ।
प्रथमावरणे चाष्टौ शक्तयः परिकीर्त्तिताः ॥
पिपीलिका पुष्पहारी अशनी सर्वहारिणी ।
भद्रहारी शुभाचारी हेमा योगेश्वरी तथा ॥
चित्रा भानुमती छिद्रा सैंहिकी सुरभी यमा ।
सर्वा[2]नन्दा खगाख्या च शक्तयः षोडशैव तु ॥
महाव्यूहाष्टकं प्रोक्तमुपव्यूहाष्टकं शृणु ।
अणिमाव्यूहमावेष्ट्य प्रथमावरणे क्रमात् ॥
ऐन्द्री च चित्रभानुश्च वारुणी दण्डिरेव च ।
प्राणरूपी तथा हंसः स्वात्मशक्तिः पितामहः ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
केशवो भगवान् रुद्रश्चन्द्रमा भास्करस्तथा ॥
ईश्वरश्च तथा ह्यात्मा ह्यन्तरात्मा महेश्वरः ।
परमात्मा ह्यणुर्जीवः पिङ्गलः पुरुषः पशुः ॥
भोक्ता च भूपतिर्भावो द्वितीयावरणे स्मृताः ।
कथितं चाणिमाव्यूहं लघिमाख्यं वदामि ते ॥
श्री[3]कण्ठः श्रीधरः श्रीशः सत्यकश्च तथा वरः ।
अमरेशः स्थितीशश्च भारभूतस्तथाष्टमः ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।

---

१ महाजया इत्यपि पाठः ।
२ सर्वभव्या च वेगाख्या इत्यपि पाठः ।
३ श्रीकण्ठोऽन्तश्च सूक्ष्मश्च त्रिमूर्तिः शशकस्तथा । इत्यपि पाठः ।

स्थाणुर्हरश्च चण्डेशो भूतीशः सुरपुङ्गवः ॥
सद्योजातो गुहेशश्च सूरसेनः सुरेश्वरः ।
क्रोधीशश्च तथा चण्डः प्रचण्डः शिव एव च ॥
एकरुद्रस्तथा कूर्चस्त्वेकनेत्रश्चतुर्मुखः ।
द्वितीयावरणे रुद्रा षोडशैव प्रकीर्त्तिताः ॥
कथितं लघिमाव्यूहं महिमां शृणु सुव्रत ।
अजेशः क्षेमरुद्रश्च सोमेशो लाङ्गली तथा ॥
चण्डारुश्चार्द्धनारीश एकान्तश्चान्त एव च ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
गिरीशः शकलश्चण्डो द्विरण्डः कल एव च ।
पाली भुजङ्गनामा च पिनाकी खड्गिरेव च ॥
काम ईशस्तथा श्वेतो भृगुः षोडश वै स्मृताः ।
कथितं महिमाव्यूहं प्राप्तिव्यूहं शृणुष्व मे ॥
संवर्त्तो लकुलीशश्च वाडवो हस्तिरेव च ।
चण्डयक्षो गणपतिर्महाभृगुरजोऽष्टमः ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
त्रिविक्रमो महाजिह्वो ध्वाङ्क्षः श्रीभद्र एव च ॥
महादेवो दधीचश्च कुमारश्च परावरः ।
महादंष्ट्रः करालश्च सूचकश्च सुवर्धनः ॥
महाध्वाङ्क्षो महानन्दी गण्डो गोपालकस्तथा ।

---

१ इदमर्धं मु० लिं० पु० नास्ति ।
२ इदमप्यर्धं नास्ति ।
३ ऋक्ष इति च पाठः ।
४ दण्डी इति च पाठः ।

८ सुव्रत ॥
पुष्पदन्तो महानन्दो विपुलानन्दकारकः ।
शुल्को विडालः कमलो विल्वश्चारुण एव च ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
रतिप्रियः सुरेशानश्चित्राङ्गश्च सुदुर्जयः ॥
विनायकः क्षेत्रपालो महामोहश्च जाङ्गलः ।
वत्सपुत्रो महापुत्रो ग्रामदेशाधिपौ तथा ॥
सर्वस्थानाधिपो देवो मेघनादः प्रचण्डकः ।
कालदूतश्च कथितो द्वितीयावरणं स्मृतम् ॥
प्राकाम्यं कथितं व्यूहमैश्वर्यं कथयामि ते ।
मङ्गला चर्चिका चैव योगीशा वरदायिका ॥
भासुरा सुरमाता च सुन्दरी मातृकाष्टमी ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
गणाधिपश्च मन्त्रज्ञो वामदेवः षडाननः ।
विदग्धश्च विचित्रश्च अमोघो मोघ एव च ।
अंश्वो भद्रश्च सोमेशश्चोत्तमोदुम्बरस्तथा ॥
नारसिंहश्च विजयस्तथा इन्द्रग्रहः प्रभुः ।
अपांपतिश्च विधिना द्वितीयावरणं स्मृतम् ॥
ऐश्वर्यं कथितं व्यूहं वशित्वं कथयाम्यतः ।
गगनो भुवनश्चैव विजयो ह्यजयस्तथा ॥
महाजयस्तथाङ्गारो व्यङ्गारश्च महायशाः ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥

---

१ शुक्लो विशाल इत्यपि पाठः ।
२ अम्बी रुद्रश्च इत्यपि पाठः ।

महोहर्पः प्रचण्डेशो. महावर्णो महासुरः ।
महारोमा महागर्भः प्रथमः कनकस्तथा ॥
खरजो गरुडश्चैव मेघनादोऽथ गर्भकः ।
[2]गजत्वक्छेदको वाहस्त्रिशिखो मारिरेव च ॥
चशित्वं कथितं व्यूहं शृणु कामावसायिकम् ।
[3]त्रिनादो विकटश्चैव वसन्तो ऽभय एव च ॥
विद्युन्महाबलश्चैव कमलो दमनस्तथा ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
धर्मश्चातिबलः सर्पो महाकायो महाहनुः ।
सकलश्चैव भस्माङ्गी दुर्जयो दुरतिक्रमः ॥
वेतालो रौरवश्चैव दुर्द्धराभोग एव च ।
वज्रः कालाग्निरुद्रश्च सिंहनादो महागुहः ॥
द्वितीयावरणं प्रोक्तं व्यूहं कामावसायिकम् ।
कथितं षोडशव्यूहं द्वितीयावरणं शृणु ॥
द्वितीयावरणे चैव दक्षव्यूहे च शक्तयः ।
प्रथमावरणे चाष्टौ बाह्ये षोडश एव च ॥
मनोहरा महानादा चित्रा चित्ररथा तथा ।
रोहिणी चैव चित्राङ्गी चित्ररेखा विचित्रिका ॥
प्रथमावरणे प्रोक्ता द्वितीयावरणे शृणु ।
चित्रा विचित्ररूपा च शुभदा कामदा शुभा ॥
क्रूरा च पिङ्गला देवी खड्गिका लम्बिका सती ।
दंष्ट्राली राक्षसी ध्वंसी लोलुपा लोहितामुखी ॥

---

१ सुन्दरश्च इत्यपि पाठः ।
२ गजश्च च्छेदको वाहुरिति च पाठः ।
३ सद्योनाद इत्यपि पाठः ।

द्वितीयावरणे प्रोक्ताः षोडशैव समासतः ।
दक्षव्यूहं समाख्यातं दाक्षव्यूहं शृणुष्व मे ॥
सर्वाशिनी विश्वरूपा लम्पटा चामिषप्रिया ।
लम्बोष्ठी दीर्घदंष्ट्रा च लम्बजानुः महारिणी ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
गजकर्णाश्वकर्णा च महाकाली सुभीषणा ॥
वातवेगरवा घोरा घना घनरवा तथा ।
घोरघोषा महाघण्टा सुघण्टा घण्टिका तथा ॥
घण्टेश्वरी महाघोरा घोरा चैवातिघोरिका ।
द्वितीयावरणे चैव षोडशैव प्रकीर्त्तिताः ॥
दाक्षव्यूहं समाख्यातं चण्डाव्यूहं शृणुष्व मे ।
अतिघण्टातिघोरा च कराला करका तथा ॥
विभूतिर्भोगदा कान्तिः शङ्खिनी चाष्टमी स्मृता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
पत्रिणी चैव गान्धारी योगमाता सुपीवरा ।
उँत्ताल्कोत्सुका वीरा संहारी रमणी तथा ॥
फलहारी जीवहारी स्वेच्छाहारी च तुण्डिका ।
रेवती रङ्गिणी सङ्गा द्वितीये षोडशैव तु ॥
चण्डाव्यूहं समाख्यातं चण्डायीव्यूहमुच्यते ।
चण्डी चण्डमुखी चण्डा चण्डवेगा महारवा ॥
भ्रुकुटी चण्डरूपा च चण्डभ्रूश्चाष्टमी स्मृता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
चण्डघ्राणा चला चैव चलजिह्वा चलेश्वरी ।

---

१ सर्वासती इत्यपि पाठः ।
२ रक्ता मालांशुका इत्यपि पाठः ।

चलवेगा महाकाया महामाया च विद्युता ॥
कङ्काली च कृशाङ्गी च किंशुका चण्डघोपिका ।
महाहासा महारावा चण्डभाऽनङ्गचण्डिका ॥
चण्डाय्याः कथितं व्यूहं हरव्यूहं शृणुष्व मे ।
चण्डाक्षी कामदा देवी शूकरी कुक्कुटानना ॥
गान्धारी दुन्दुभिर्दुर्गा सौमित्रा चाष्टमी स्मृता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
अमृतोद्भवा महालक्ष्मीर्वर्णदा जीवरक्षिणी ।
हरिणी क्षीणजीवा च चन्द्रवक्त्रा चतुर्भुजा ॥
व्योमचारी व्योमरूपा व्योमव्यापी शुभोदया ।
गृहचारी सुचारी च विषाहारी विषान्तिका ॥
हरव्यूहं समाख्यातं हरार्धीव्यूहमुच्यते ।
जम्भाऽच्युता च कङ्कारी देविका दुर्धरावहा ॥
चण्डिका चपला चेति प्रथमावरणे स्मृताः ।
चण्डिका चामरी चैव भण्डिका च शुभानना ॥
पिण्डिनी मुण्डिनी मुण्डा डाकिनी शार्ङ्गरी तथा ।
कर्त्तरी हर्त्तरी चैव भामिनी यज्ञदायिनी ॥
यमदंष्ट्रा महादंष्ट्रा कराला चेति शक्तयः ।
हराय्याः कथितं व्यूहं शौण्डाव्यूहं शृणुष्व मे ॥
विकराली कराली च कालजङ्घा यशस्विनी ।
वेगा वेगवती विद्या वेदाङ्गा चाष्ट शक्तयः ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
वज्रा शङ्खवती शङ्खा बला चैकबला तथा ॥

---

१ अत्र लिङ्गपुराणे-"वज्रा शङ्खातिशङ्खा वा बला चैवाबला

बला चातिबला लोला कुम्भिनी स्तम्भिनी तथा ।
अञ्जनी मोहनी माया विकटाङ्गी नली तथा ।
शौण्डाव्यूहं समाख्यातं शौण्डायीव्यूहमुच्यते ।
दन्तुरा रौद्रभागा च अमृता सुकुला तथा ॥
चलजिह्वार्धनेत्रा च रूपिणी दारिका तथा ।
प्रथमावरणस्यैता द्वितीयावरणे शृणु ॥
खादका रूपनाशा च संहारी चाक्षयान्तका ।
कण्डनी पेषणी चैव महाग्रासा कृतान्तिका ॥
दण्डिनी किङ्करी बिम्बा वर्णिनी चामलाङ्गिनी ।
विद्राणी द्राविणी चेति शक्तयः षोडशैव तु ॥
कथितं हि मनोरम्यं शौण्डायीव्यूहमुत्तमम् ।
प्रथमाख्यं प्रवक्ष्यामि व्यूहं रम्यं सुशोभनम् ॥
प्लवनी प्लावनी शोभा मन्दा चैव मदोत्कटा ।
मदाक्षया महादेवी प्रथमावरणे स्मृताः ॥
कामसन्दीपनी देवी अतिरूपा मनोहरा ।
महावशा मदग्राहा विह्वला मदविह्वला ॥
अरुणा घोषणी दिव्या रेवती भाण्डनायिका ।
स्तम्भनी घोररक्ताक्षी घोररूपा सुशोषणा ॥
व्यूहं तु प्रथमाख्यं ते स्वायम्भुव यथा तथा ।
कथितं प्रथमाप्याख्यं प्रवक्ष्यामि शृणुष्व मे ॥
घोरा घोरतरा घोरा अतिघोराघनायिका ॥
धावनी क्रोष्टुकी मुण्डा चाष्टमी परिकीर्त्तिता ।

---

तथा । अञ्जनी मोहनी माया विकटाङ्गी नली तथा ॥ गण्डकी दण्डकी घोणा शोणा सत्यवती तथा । कल्लोला चेति क्रमशः षोडशैव यथाविधि ॥" इति पाठः ।

प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
भीमा भीमतराऽभीमा शस्त्री चैव सुवर्चला ॥
स्तम्भनी मोहनी रौद्री रुद्रवत्यचलाचला ।
महाबला महाशान्तिः शिवाशीला शिवाशिवा ।
बृहत्कुक्षी बृहन्नासा षोडशैव प्रकीर्त्तिताः ॥
प्रथमार्यी समाख्याता मन्मथाख्यं वदामि ते ।
कालकर्णी कराला च कल्याणी कपिला शिवा ॥
दृष्टिस्तुष्टिः प्रतिष्ठा च प्रथमावरणे स्मृताः ।
शान्तिः पुष्टिकरी तुष्टिर्जया चैव श्रुतिर्धृतिः ॥
कामदा सुभगा सौम्या तेजनी कामतन्त्रिका ।
धार्मिकी धर्मिणी शीला पापहा धर्मवर्द्धनी ॥
मान्मथं कथितं व्यूहं मान्मथायिकमुच्यते ।
धर्मरक्षा निवाता च धर्माधर्मवती तथा ॥
सुमतिर्दुर्मतिर्मेधा विमला चाष्टमी स्मृता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
शुद्धिर्बुद्धिर्मतिः कान्तिर्वर्तुला मोहवर्द्धनी ।
बला चातिबला भीमा प्राणवृद्धिकरी तथा ॥
निर्लज्जा निर्घृणा मन्दा सर्वपापक्षयङ्करी ।
कपिला चातिविधुरा षोडशैताः प्रकीर्त्तिताः ॥
मान्मथायिकमुक्तं ते भीमाव्यूहं वदामि ते ।
रक्ता चैव विरक्ता च उद्वेगा शोकवर्द्धनी ॥
कामा तृष्णा क्षुधा मोहा चाष्टमी परिकीर्त्तिता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
जया निद्राऽभयालस्या सुतृष्णा रोदनी दरा ।
कृष्णाकृष्णाङ्गिनी वृद्धा शुद्धोच्छिष्टाशनी वृपा ॥

कामदा भोगिनी दग्धा दुःखदा सुखदा तथा ।
भीमाव्यूहं मया प्रोक्तं भीमायीव्यूहमुच्यते ॥
आनन्दा च सुनन्दा च महानन्दा शुभङ्करी ।
वीतरागा-महोत्साहा जितरागा मनोरमा ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
मनोन्मनी मनःक्षोभा मदोन्मादा मदाकुला ॥
मदोद्भर्भा मदारामा कामानन्दा सुविह्वला ।
महावेगा सुवेगा च महाभोगा क्षयावहा ॥
क्रमणी क्रामिणी चक्रा द्वितीयावरणे स्मृताः ।
कथितं तव भीमायीव्यूहं परमशोभनम् ॥
शाकुनं कथाम्यद्य व्यूहं परमशोभनम् ।
योगावेगा सुवेगा च अतिवेगा सुवासिनी ॥
देवी मनोरथावेगा रुद्रावर्तवती मतिः ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
रोधनी क्षोभणी वाला चातिघोषा सुघोषिणी ।
विद्युता त्रासनी देवी मनोवेगा च चापला ॥
विद्युज्जिह्वा महाजिह्वा भ्रुकुटीकुटिलानना ।
स्फुरज्ज्वाला महाज्वाला सुज्वाला च क्षयान्तिका ।
शाकुनं कथितं व्यूहं शाकुनार्यीं शृणुष्व मे ।
ज्वालिनी चैव भस्माङ्गी तथा भस्मान्तकान्तका ॥
भाविनी च प्रजा विद्या ख्यातिश्चैवाष्टमी स्मृता ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
उल्लेखा च पताका च भोगा भोगवती खगा ।
योगव्रता योगमाता योगाख्या योगपारगा ।

१ जलावर्ता च धीमती इत्यपि पाठः ।

ऋद्धिर्बुद्धिर्धृतिः कान्तिः स्मृतिः साक्षाच्छ्रुतिर्धरा ॥
शाकुनाख्या महाव्यूहं कथितं कामदायकम् ।
स्वायम्भुव तथा व्यूहं सुमताख्यं सुशोभनम् ॥
परेष्टा च परादित्या ह्यमृता फलनाशिनी ।
हरिणाक्षी सुवर्णाक्षी देवी साक्षात्कपिञ्जला ॥
कामरेखा च कथितं प्रथमावरणं शुभम् ।
रत्नद्वीपा वसुद्वीपा रत्नदा रत्नमालिनी ॥
रत्नशोभा सुशोभा च महाशोभा महाद्युतिः ।
शबरी शाम्बरी ग्रन्थिपादकर्णकरानना ॥
हयग्रीवा च जिह्वा च सर्वग्रासेतिशक्तयः ।
कथितं सुमतव्यूहं सुमत्या व्यूहमुच्यते ॥
सर्वाशी च महाभक्षा महादंष्ट्रातिरौरवा ।
स्फुलिङ्गा विस्फुलिङ्गा च कृतान्ता भास्करानना ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
रागा रागवती क्रोधा महाक्रोधा च रौरवा ॥
क्रोधनी सूदनी चैव कलहा कलहावती ।
कलान्तिका चतुर्भेदा दुर्गा वै दुर्गमानगा ॥
नाली कुनाली सौम्या च इत्येवं कथितं मया ।
गोपाव्यूहं वदाम्यद्य शृणु स्वायम्भुवाखिलम् ॥
पाटली पाटवी चैव पाटी विटिपिटा तथा ।
कङ्कटा सुघटा चैव प्रघटा च घटोद्भवा ॥
प्रथमावरणं चात्र गोपायाः कथितं मया ।
नादाक्षी नादरूपा च सर्वकारागमागमा ॥
अग्रचारी सुचारी च चण्डनाडी सुवाहिनी ।
सुयोगा च वियोगा च हंसाक्षी च विलासिनी ॥

सर्वगा सुविरावा च बन्धनी चेति शक्तयः ।
गोपाव्यूहं मया ख्यातं गोपार्यीव्यूहमुच्यते ॥
भेदिनी छेदनी चैव सर्वकारी क्षुधाशनी ।
उच्छुष्मा चैव गान्धारी भस्माशी वडवानला ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
अन्ववज्वालिनी ज्वाला दीपाक्षामा तथैव च ॥
अन्तरीक्षा च हृल्लेखा हृद्रमा मायिकापरा ।
आमयासादिनी भिल्ली सह्यासह्या सरस्वती ॥
रुद्रशक्तिर्महाशक्तिर्महामोहा च रोदिनी ।
गोपाख्याः कथितं व्यूहं नन्दाव्यूहं वदामि ते ॥
नन्दिनी च निवृत्तिश्च प्रतिष्ठा च यथाक्रमम् ।
विद्यानाशी खग्रसनी चामुण्डा प्रियदर्शनी ॥
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ।
गुह्या नारायणी मोहा प्रज्ञा देवी च वज्रिणी ॥
कङ्कटा च तथा काली शिवा घोषा ततः परम् ।
वीरा माया च कामेशी वह्निनी भीषणी तथा ॥
स्वर्गा माला च निर्दिष्टा द्वितीयावरणे स्मृताः ।
नन्दाव्यूहं समाख्यातं नन्दार्यीव्यूहमुच्यते ॥
विनायकी पूर्णिमा च रङ्गिणी[1] कूर्दनी तथा ।
इच्छा कपालिनी चैव दीपनी च जयन्तिका ॥
प्रथमावरणे चाष्टौ शक्तयः परिकीर्त्तिताः ।
पावनी चाम्बिका चैव सर्वाशा पूतना तथा ॥
छागली मोदिनी साक्षाद्देवी लम्बोदरी शुभा ।
संहारी कालिनी चैव कुसुमा च यथाक्रमम् ॥

---

१ रङ्कारी कुण्डली तथा इत्यपि पाठः ।

शुक्ला तारा तथाज्ञाना क्रिया गायत्रिका तथा ।
सावित्री चेति विधिना द्वितीयावरणे स्मृताः ॥
नन्दाद्ययाः कथितं व्यूहं पैतामहमतः शृणु ।
दन्तुरी चैव फेत्कारी क्रोधहासा पडङ्गुला ॥
आनन्दा च सुदुर्गा च संहारी ह्यमृताष्टमी ।
प्रथमावरणं प्रोक्तं द्वितीयावरणं शृणु ॥
कुलान्तिकाऽनला चैव प्रचण्डा मर्दनी शुभा ।
सर्वभूताभया चैव देवी च वडवामुखी ॥
लम्पटा पन्नगा देवी कुसुमा विपुलान्तिका ।
केदारा च तथा कूर्मा दुरिता मन्दरोदरी ॥
खड्गचण्डेति विधिना द्वितीयावरणं स्मृतम् ।
व्यूहं पैतामहं प्रोक्तं धर्मकामार्थमोक्षदम् ॥
पितामहायीव्यूहं च शृणुष्व कथयामि ते ।
वज्रा च मन्मथा चोरा विकारा रिपुभेदिनी ॥
रूपा चतुर्भुजा योगा प्रथमावरणे स्मृताः ।
भूताभया महावाला खर्परा च ततः परम् ॥
भस्मा कान्ता तथा सृष्टिर्द्विभुजा ब्रह्मरूपिणी ।
सद्यःफेत्कारिका नाम कर्णमोटी तथापरा ॥
महामोहा महामाया गान्धारी पुष्पमालिनी ।
शब्दार्यी च महाघोषा षोडशैतास्तथान्तिमे ॥
सर्वाश्च द्विभुजा देव्यो बालभास्करसन्निभाः ।
पद्मशङ्खधराः शान्ता रक्तस्रग्वस्त्रभूषणाः ।
सर्वाभरणसम्पूर्णा मुकुटाद्यैरलङ्कृताः ॥

---

१ नन्दिनी इत्यपि पाठः ।
२ खड्गचक्रेत्यपि पाठः ।

मुक्ताफलमयैर्दिव्यै रत्नचित्रैर्मनोरमैः ।
भूषिता हारकेयूरैर्गौरा ध्येयाः पृथक् पृथक् ॥
एवं सहस्रकलशं ताम्रजं मृन्मयं तु वा ।
पूर्वोक्तदक्षिणायुक्तं रौद्रक्षेत्रे प्रतिष्ठितम् ॥
भवाद्यैर्विष्णुना प्रोक्तैर्नाम्नां चैव सहस्रकैः ।
सम्पूज्य विन्यसेदग्रे सेचयेद्वाणविग्रहम् ॥
अभिषिच्य च विज्ञाप्य सेचयेत्पृथिवीपतिम् ।
एवं सहस्रकलशं सद्यःसिद्धिफलप्रदम् ॥
चत्वारिंशन्महाव्यूहं सर्वलक्षणलक्षितम् ।
सर्वेषां कलशं प्रोक्तं पूर्ववद्धेमनिर्मितम् ॥
सर्वे गन्धोदकैः पूर्णास्तीर्थतोयसमन्विताः ।
तथा कनकसंयुक्ता देवस्य घृतपूरिताः ॥
क्षीरेण वाथ दध्ना वा पञ्चगव्येन वा पुनः ।
ब्रह्मकूर्चेन वा मेध्यमभिषेको विधीयते ॥
रुद्राध्यायेन रुद्रस्य नृपतेः शृणु सुव्रत ॥
अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्वेभ्यः सर्वसर्वेभ्यो नमस्तेऽस्तु रुद्ररूपेभ्यः ॥
मन्त्रेणानेन राजानं सेचयेदभिषेचितम् ।
होमं च मन्त्रेणानेन अघोरेणाघहारिणा ॥
प्रागाद्यं देवकुण्डे वा स्थण्डिले वा घृतादिभिः ।
समिदाज्यचरुं लाजशालिनीवारतण्डुलैः ॥
अष्टोत्तरशतं हुत्वा राजानमधिवासयेत् ।
पुण्याहं स्वस्तिरित्याद्यैः कौतुकं हेमनिर्मितम् ॥

---

१ पूर्वोक्तलक्षणैर्युक्तामिति च पाठः ।
२ स्वस्तिरुद्राय इत्यपि पाठः ।

भसितं च मृदो चैव बन्धयेद्दक्षिणे करे ।
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम् ॥
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ।
मन्त्रेणानेन राजानं सेचयेद्वाथ होमयेत् ॥
सर्वद्रव्याभिषेकं च होमद्रव्यैर्यथाक्रमम् ।
प्रागाद्यं ब्रह्मभिः प्रोक्तं सर्वद्रव्यैर्यथाक्रमम् ॥
तत्पुरुषाय विद्महे महादेवाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ॥
स्वाहान्तं पुरुषेणैवं प्राक्कुण्डे होमयेद्द्विजः ।
अघोरेण च याम्येऽथ होमयेत्कृष्णवाससा ॥
वामदेवाय नमोज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः ।
इत्याद्युक्तक्रमेणैव जुहुयात्पश्चिमे पुनः ॥
सद्येन पश्चिमे होमः सर्वद्रव्यैर्यथाक्रमम् ।
सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ।
भवे भवे-नातिभवे भवस्व मां भवोद्भवाय नमः ॥
स्वाहान्तं जुहुयादग्नौ मन्त्रेणानेन बुद्धिमान् ।
आग्नेय्यां च विधानेन ऋचा रौद्रेण होमयेत् ॥
जातवेदसे सुनवामसोममित्यादि ।
नैर्ऋते च तथा द्रव्यैः सर्वैर्होमो विधीयते ॥
मन्त्रेणानेन दिव्येन सर्वसिद्धिकरेण च ।
निशि निशि जय स्वाहा खड्ग राक्षसभेदन ॥
रुधिराज्यार्द्रनैर्ऋत्यै स्वाहा नमः स्वधा नमः ।
यथेदं विधिना द्रव्यैर्मन्त्रेणानेन होमयेत् ॥

---

१ मृणालेन इत्यपि पाठः ।

याम्यायां[1] विविधैर्द्रव्यैरीशानेन द्विजोत्तमः ।
समीर समीर स्वाहा स्वधा नमः ।
ईशान्यामथ पूर्वोक्तैर्द्रव्यैर्होमं समाचरेत् ।
ॐ ईशानाय कद्रुद्राय रुद्राय प्रचेतसे त्र्यम्बकाय शर्वाय । तन्नो रुद्रः प्रचोदयात् ॥
प्रधानं पूर्ववद्द्रव्यैरीशाने च द्विजोत्तमः ।
प्रतिद्रव्यं सहस्रेण जुहुयान्नृपसन्निधौ ॥
स्वयं वा जुहुयादग्नौ पुरोहितमुखेन वा ।
ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् । ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शिवोम् ॥
प्रायश्चित्तमघोरेण शेषं सामान्यमाचरेत् ।
कृताधिवासं राजानं शङ्खभेर्यादिनिःस्वनैः ॥
जयशब्दरवैर्दिव्यैर्वेदघोषैः सुशोभनैः ।
सेचयेत्कूर्चतोयेन प्रोक्षयेद्वा नृपोत्तमम् ॥
रुद्राध्यायेन विधिना रुद्रभस्मप्रभारुणम् ।
शलाकाशतसम्पन्नं छत्रं चन्द्रसमप्रभम् ॥
शिविकां वैजयन्तीं च साधयेन्नृपतेः समम् ।
राज्याभिषेकयुक्ताय क्षत्रियायेश्वराय वा ॥
नृपचिह्नानि यान्येषां क्षत्रियाणां विधीयते ।
वेदीप्रमाणं सर्वेषां द्वादशाङ्गुलमुच्यते ।
पलाशोदुम्बराश्वत्थवटाः पूर्वादितः क्रमात् ॥
तोरणाद्यानि वै तत्र पट्टमात्रेण पट्टिका ।
अष्टमाङ्गुलसंयुक्तदर्भमालासमावृतम् ॥

---

१ यमयतीति यमः सर्वनियन्ता वायुस्तद्धिता याम्या वायव्येत्यर्थः । तस्याम् ईशानेन तन्मन्त्रेणेत्यर्थः ।

दिग्ध्वजाष्टकसंयुक्तं द्वारकुम्भैः सुशोभिम् ।
हेमतोरणकुम्भैश्च भूषितं स्नापयेन्नृपम् ॥
चर्मोपरिसमासीनं शिवकुम्भेन सेचयेत् ।
तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि ॥
तन्नः शिवः प्रचोदयात् ।
मन्त्रेणानेन विधिना वर्द्धन्या गौरीर्गीतया ॥
रुद्राध्यायेन वा सर्वमघोरेणापि वा पुनः ।
दिव्यैराभरणैः शुक्लैर्मुकुटाद्यैः सुकल्पितैः ॥
क्षौमैर्वस्त्रैश्च राजानं भूषयेन्नियतः शुभैः ।
अष्टपष्टिपलेनैव हैमं कृत्वा सुरद्रुमम् ॥
नवरत्नैरलङ्कृत्य दद्याद्वै दक्षिणां गुरोः ।
दश धेनूः सवस्त्राश्च दद्यात्क्षेत्रं सुशोभनम् ॥
शतद्रोणं तिलं चैव शतद्रोणं च तण्डुलान् ।
शयनं वाहनं छत्रं शय्यां सोपस्करां शुभाम् ॥
श्रोतृणां चैव सर्वेषां त्रिंशत्पलमुदाहृतम् ।
अध्येतृणां तदर्द्धेन ब्राह्मानां च तदर्द्धतः ॥
महापूजां ततः कुर्यान्महादेवस्य वै नृपः ।
एवं समासतः प्रोक्तं जयसेचनमुत्तमम् ॥
एवं पुराभिषिक्तस्तु शक्रः शक्रत्वमागतः ।
ब्रह्मा ब्रह्मत्वमापन्नो विष्णुर्विष्णुत्वमागतः ॥
अम्बिका चाम्बिकात्वं च सौभाग्यमतुलं तथा ।
सावित्री च धरा लक्ष्मीर्देवी कात्यायनी तथा ॥
नन्दिना च पुरा मृत्यू रुद्राध्यायेन वै द्विज ।
अभिषिक्तोऽसुरैः पूर्वं तारकाख्यो महाबलः ॥
विद्युन्माली हिरण्याक्षो विष्णुना वै विनिर्जितः ।

नृसिंहेन पुरा दैत्यो हिरण्यकशिपुर्हतः ॥
स्कन्देन तारकाद्याश्च कौशिक्या च पुराम्बया ।
सुन्दोपसुन्दतनयौ जितौ देवेन्द्रपूजितौ ॥
वसुदेवसुदेवौ तु निहतौ कृतकाम्यया ।
पुरा स्नानविधानेन ब्रह्मणा निर्मितेन तु ॥
देवासुरे दितिसुता जिता देवैरनेकशः ।
स्नात्वैवं सर्वभूपैश्च तथान्यैरपि भूसुरैः ॥
प्राप्ताश्च सिद्धयो दिव्या नात्र कार्या विचारणा ।
अहोऽभिषेकमाहात्म्यमहो सुष्ठु सुभाषितम् ॥
येनैवमभिषिक्तेन सिद्धैर्मृत्युर्जितस्त्विति ।
कल्पकोटिशतेनापि यत्पापं समुपार्जितम् ॥
स्नात्वैवं मुच्यते राजा सर्वपापान्न संशयः ।
व्याधितो मुच्यते राजा क्षयकुष्ठादिभिः पुनः ॥
नित्यं च विजयी भूत्वा पुत्रपौत्रादिभिर्वृतः ।
जनानुरागसम्पन्नो देवराज इवापरः ॥
मोदते पापहीनश्च क्रियाधर्मे च निष्ठया ।
उद्देशमात्रं कथितं फलं परमशोभनम् ॥
नृपाणामुपकाराय स्वायम्भुव मनो मया । इत्यादि ।

अयं च जयाभिषेकः त्रैवर्णिकेन नृपेणापमृत्युजयार्थं सर्वशत्रुजयार्थं वैरिविशेषेण युद्धोपस्थितौ यात्रातः पूर्वं तज्जयार्थं च कर्तव्यः । तत्र सम्भाराः । राजाभिषेककलशस्थापनार्थं नवकुण्डहोमार्थं च मण्डपः प्रपा कूटो वा । बहुस्तम्भः सभाकारः समशीर्षकसन्निवेशः प्रपा । सैव मध्योन्नता वंशावलम्बितपटलद्वयान्विता मण्डपः । स एव गिरिशृङ्गाकारो मध्ये समन्ततोऽवलाम्बितचतुष्पटलः कूटः । ते च मण्डपादयः पञ्चस-

प्रतिहस्तायामविस्तारास्तावदर्थाद्भवन्ति ।

लिङ्गपुराणे,

विधिना मण्डपं कृत्वा प्रपां वा कूटमेव च ।
नवधा स्थापयेद्वह्निं ब्राह्मणो वेदपारगः ॥
ततः सर्वाभिषेकार्थं सूत्रपातं च कारयेत् ।

इत्यभिधानात्, चकारेण मण्डपादिमध्य एव मण्डलरचनाप्रतीतेः, मण्डलरचनायाश्च सर्वतडागोत्सर्गादौ मण्डपप्रागपरदक्षिणोत्तरसूत्रयोस्त्रेधाविभक्तयोर्मध्यमतृतीयभागाश्रितवेद्यधिकरणकत्वदर्शनात् अत्रत्यमण्डलप्रकृतिपञ्चाशद्रेखाणां च पदानां द्वादशाङ्गुलप्रमाणत्वोक्त्या प्रत्येकं तावदन्तरत्वात् । तथा च प्रत्येकद्वादशाङ्गुलान्तरालपञ्चाशद्रेखानिर्वर्त्यमण्डलसिद्ध्यर्थंशुक्लरक्तकृष्णतत्परिधिरेखासिद्ध्यर्थं च वेदियोग्यः पञ्चविंशतिहस्तस्तावन्मण्डपादिमध्यतृतीयभागोपेत इति मण्डपादेः पूर्वोक्तपरिमाणसिद्धिः । ततश्च तदनुरूपा स्तम्भपरिमाणविवृद्धिः । पटलनिवेशनार्थं तिर्यक्काष्ठनिवेशनार्थं चार्थात्स्तम्भविवृद्धिरपि कल्प्या मण्डपकूटयोः । तत्र मध्यस्तम्भास्तावन्मण्डपविस्तारदलोच्चा एव, प्रान्तस्तम्भाश्च पञ्चहस्ता एव, अन्यत्र तथादर्शनात् । आर्थिकमध्यस्तम्भास्त्वार्थिकपरिमाणा एवेति दिक् ।

अस्मिंश्च मण्डपादौ प्रागपरदक्षिणोत्तरमध्यसूत्रत्रेधाविभागेन नवभागे कृतेऽष्टसु दिग्भागेषु अष्टौ पूर्वैशान्यन्तराले चैकमिति नव कुण्डानि स्थण्डिलानि वा । तानि च तत्तदाकृतिकानि वर्णभेदेन चतुरस्रादीन्येव वा । मध्यमभागे च वेदिरायामतृतीयांशोच्चा । तत्र च राजाभिषेककलशस्थापनार्थं मण्डलम् । तद्यथाप्रागपरायताः प्रत्येकं द्वादशाङ्गुलान्तरालाः पञ्चाशद्रेखा लिखित्वा तादृशीभिरेव दक्षिणोत्तराभिः पञ्चाशद्रेखाभिस्ता भेद-

येत् । ततः प्रागपरायतासु दक्षिणोत्तरायतासु च रेखासु उपान्त्यरेखामारभ्य षड्रेखाः सङ्गृह्य सप्तमीं सप्तमीं रेखां परिमार्जयेत् । तथा च प्रागपरायता अष्टौ तत्सम्भिन्नाश्च दक्षिणोत्तरायता अष्टौ एवं षोडशान्तरा वीथ्यः सम्पद्यन्ते । ततश्च तन्मध्यवर्त्तिनः प्रत्येकं पञ्चविंशतिकोष्ठका एकोनपञ्चाशद्व्यूहा भवन्ति । तेषु मध्यगतं व्यूहनवकं परिमृज्याष्टदलं कमलं कार्यम् । तत्समन्तान्नाभिवीथीमध्यस्थपद्मदलेषु परिशिष्टेषु चत्वारिंशद्व्यूहेषु च प्रतिकोष्ठकमलानि । तत्र मध्यकोष्ठेषु मुख्याः शक्तयः सुभद्राद्या दाक्षाद्याश्च शिवस्य द्वितीयतृतीयावरणयोः । तत्प्रथमावरणे तु वामादिमिथुनाष्टकं केसरदलेषु प्रधानकमलस्य । मध्यमकोष्ठेभ्यो वहिरष्टकोष्ठकं प्रथमावरणं षोडशषोडशकोष्ठकं द्वितीयं प्रत्येकं शक्तीनाम् ।\ तत्र नाभिवीथ्यनन्तरबाह्यषोडशव्यूहसंलग्ना पिशाचवीथी । तत्संलग्ना चतुर्विंशतिव्यूहबाह्या महावीथीति । सर्वाणि च पद्मानि शालिनीवारगोधूमाणुयवतण्डुलगौरसर्षपान्विततिलानामन्यतरेण धान्येन यथालाभं समुदितैर्वा कार्याणि । तत्र मध्यवर्त्तिनि नवव्यूहाष्टदले शालयो द्रोणमिताः, तदर्धं तण्डुलाः, आढकमितास्तिलाः, तदर्द्धं यवादयः । अन्येषु आढकमिताः शालयः, तदर्द्धं तण्डुलाः, तदर्धं यवतिलादयः । प्रधानकमलं च हस्तमात्रमष्टाङ्गुलप्रमाणसुवर्णकर्णिकं चतुरङ्गुलकेसरस्थानमवशिष्टपत्रस्थानं कार्यम् । अन्यानि द्वादशाङ्गुलेषु कोष्ठेषु यथासम्भवम् । प्रधानकमलकेसराष्टकदलाष्टकचत्वारिंशद्व्यूहान्तर्गतसहस्रपदेषु च स्थापनीयं षोडशाधिकं कलशसहस्रम् । तच्च द्वादशाङ्गुलायामोदरं षडङ्गुलवर्त्तितनाभिकं त्र्यङ्गुलोत्सेधचतुरङ्गुलविस्तारकण्ठं त्र्यङ्गुलोत्सेधनिर्गमौष्ठं कार्यम् । प्रधानकमल-

कर्णिकायां स्थापनीयश्चैकः । स चोदरादिषु पूर्वोक्तद्विगुणपरिमाणः । तन्तूनां परस्परान्तरालं यवमात्रं यथा स्यात्तथा जालवद्वेष्टनीयश्च । तद्वामभागस्थाप्या करकापरपर्याया चैका वर्धनी । सर्वे चैते हैमा राजतास्ताम्रमया वा । सर्वेषां पूरणार्थं गन्धोदकं, तन्मध्ये च निक्षेप्याणि पञ्चरत्नानि कनकशकलानि ब्रह्मकूर्चाश्च । साधारणानि च पञ्चपल्लवसप्तमृदादीनि । शिवकुम्भोपरिस्थाप्यं चाग्नेयादिकोणेषु क्रमेण सितरक्तपीतकृष्णवर्णसिंहयुक्तं पूर्वादिदिक्षु सुवर्णवर्णगात्रयुतं सुवर्णादिमयं सिंहासनं, सर्वेषां प्रत्येकं वेष्टनार्थानि वस्त्रयुग्मानि, प्रच्छादनार्थानि च हैमानि रत्नचित्राणि कमलानि, शिवप्रतिमा देवीप्रतिमा । तयोर्लक्षणमुक्तम्—

मत्स्यपुराणे,

पञ्चवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनम् ।
कपालशूलखट्वाङ्गी चन्द्रमौलिः सदा शिवः ॥
अक्षसूत्रं च कमलं दर्पणं च कमण्डलुम् ।
उमा बिभर्ति हस्तेषु पूजिता त्रिदशैरपि ॥ इति ।
अष्टाधिकं सहस्रमन्यप्रतिमा । तत्र स्त्रीप्रतिमाः—
सर्वाश्च द्विभुजा देव्यो बालभास्करसन्निभाः ।
पद्मशङ्खधराः शान्ता रक्तस्रग्वस्त्रभूषिताः ॥
सर्वाभरणसम्पूर्णा मुकुटाद्यैरलङ्कृताः ।
मुक्ताफलमयैर्दिव्यै रत्नचित्रैर्मनोरमैः ॥
भूषिता हारकेयूरैर्यावद्देव्यः पृथक्पृथक् ।

इतिलिङ्गपुराणोक्तलक्षणलक्षिताः कार्याः । पुम्प्रतिमाश्च रुद्ररूपाः । बाणलिङ्गं, तदभिषेकार्थं चान्यत्कलशसहस्रं ताम्रमयं

मृन्मयं वा पूर्वोक्तलक्षणलक्षितं हैमकमलाच्छादितं रुद्रक्षेत्रे स्थापनीयम् । रुद्रक्षेत्राभावे तदर्थमप्येको मण्डपः कार्यः । तत्कलशपूरणार्थं घृतं क्षीरं दधि पञ्चगव्यं वा । घृतपलाशसमिदाज्यचरुलाजशालिनीवारतण्डुलरूपाण्यष्टौ होमद्रव्याणि प्रतिकुण्डम् । घृतं लौकिकमाज्यं संस्कृतमिति भेदः । प्रतिकुण्डं होता ब्रह्मा चेति द्वौ द्वौ ब्राह्मणौ । तत्र याम्ये कृष्णवासा होता । ऐन्द्रेशान्यन्तरालगते प्रधानकुण्डे आचार्यो नृपः पुरोहितो वा होता । द्वारजापकाश्चाष्टौ । रुद्राभिषेककर्त्ता तु पुरोहित एव । अनुक्तान्यकर्तृकेषु राजसम्बन्धिकार्येषु तस्यैव कर्तृत्वदर्शनात् । साहाय्यार्थं चान्येऽपि यथासम्भवम् । हैमं मृणालभासितं कौतुकम् । द्वारदेशात्पदमात्रे निखातैः पूर्वादिक्रमेण पलाशोदुम्बराश्वत्थवटमयैर्हेमकुम्भान्वितैस्तोरणैर्युक्तं दर्भमालासमावृतं द्वारदेशादौ निक्षिप्ताष्टमङ्गलद्रव्यमावाहितदिग्गजाष्टकं द्वारकुम्भभूषितं राजाभिषेकमण्डपं दशहस्तं कुर्यात् । तन्मध्ये वेदिकायां भद्रासनम्, अष्टमङ्गलानि च—

> इक्षवः स्तवराजं च निष्पावाजाजिधान्यकम् ।
> विकारवच्च गोक्षीरं कुसुम्भकुसुमं तथा ॥
> लवणं चाष्टमं तत्र सौभाग्याष्टकमुच्यते ॥

इति मत्स्यपुराणोक्तानि । भद्रासनं च सौवर्णं रौप्यं ताम्रमयं क्षीरिवृक्षजं वा माण्डलिकानन्तरजिन्महाराजानां क्रमेणैकसपादसार्द्धहस्तोच्छ्रायं तावदायामं राजाभिषेकप्रकरणे विष्णुधर्मोत्तरोक्तं ग्राह्यम्, आकाङ्क्षितत्वादवान्तरसामान्येन च बुद्धिस्थत्वात् । राज्ञो धारणार्थमाहवनीयादिजं भस्म । श्वेतच्छत्रशिविकावैजयन्तीशङ्खचामरभेर्यादीनि नृपचिह्नानि राजभूषणानि च प्रभूतानि । अभिषेककाले च नानाविधानि वा-

यानि। दक्षिणाद्रव्याणि च यथा—अष्टपष्टिपलहेमनिर्मितो नवरत्नालङ्कृतः सुरद्रुमो, दशधेनुशतानि, सुशोभनं क्षेत्रं, शतद्रोणमितास्तिलास्तण्डुलाश्च, सोपधानं शयनं, वाहनमश्वादि, यानं रथादि च गुरवे। परिमाणतो मूल्यतश्चैतदर्धमितानि सुरद्रुमादीनि सर्वाणि मिलितेभ्यः सर्वेभ्यो होतृभ्यः। तथैव तदर्द्धमितानि सर्वाणि मिलितेभ्यो द्वारजापकेभ्यः। तदर्धमितानि ब्रह्मभ्यः। अन्यब्राह्मणदीनानाथादिभ्यो भूयसी यथाशक्ति। ब्राह्मणभोजनं च सहस्रावरं यथाशक्ति। महादेवमहापूजासामग्री राजोपचारादि।

पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम्।
पलं च कुडवः प्रस्थ आढको द्रोण एव च॥
धान्यमानेषु बोद्धव्याः क्रमशोऽमी चतुर्गुणाः।

इत्यसाधारणाः। साधारणाश्च मण्डपकाष्ठध्वजपताकादि तत्तद्देवतापूजासामग्री द्वारतोरणकलशादि कुण्डोपयोगीष्टकादि नवग्रहपीठतत्प्रतिमातत्पूजोपकरणादि मण्डपवास्तूपशमनसामग्री ब्राह्मणवरणसामग्र्यादिकाः सम्भारा उपकल्पनीयाः।

## अथ प्रयोगः।

उपकल्पितपूर्वोक्तसमस्तोपकरणः सपत्नीको राजा मौहूर्त्तिकेभ्योऽनन्तरसंलग्नदिनद्वयातिशुद्धिं विदित्वा पूर्वदिने पुरोहितमाचार्यर्त्विगादीन्मौहूर्त्तिकादींश्च सन्निवेश्य रङ्गवल्ल्यादियुक्ते शुचौ देशेऽन्तर्जानुकर उपविश्य इष्टदेवगुरुद्विजकुलज्येष्ठान्नत्वा तैरनुज्ञातः सदर्भपाणिराचम्य प्राणानायम्य तिथ्यादि सङ्कीर्त्य अपमृत्युजयार्थं सर्वशत्रुजयार्थं शत्रुविशेषजयार्थं वा लिङ्गपुराणोक्तविधिना जयाभिषेकं सपत्नीकोऽहममुकवर्मा

करिष्ये, तत्र निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं स्वस्तिवाचनमातृकापूजनाभ्युदयिकश्राद्धग्रहयज्ञमण्डपवास्तूपशमनाचार्यादिवरणानि च तत्पूर्वाङ्गानि करिष्य इति सङ्कल्प्य, यथाविभवं षोडशोपचारैर्गणपतिमभ्यर्च्य, यथास्वगृह्यं स्वस्तिवाचनमातृकापूजनाभ्युदयिकश्राद्धानि विधाय, याज्ञवल्क्याद्युक्तप्रकारेण यथाविभवं नवग्रहमखं च कृत्वा, वास्तुशान्त्यर्थमाचार्यब्रह्मर्त्विजः कृत्वा, मण्डपनैर्ऋत्यभागे कुण्डं निर्माय, एकाशीतिपदवास्तुमण्डलनिर्माणपुरःसरं मण्डपवास्तुशान्तिं विधाय, जयाभिषेकार्थं पुरोहितमाचार्यं ब्रह्माणमष्टसु कुण्डेषु प्रतिकुण्डं होता ब्रह्मा चेति द्वौ द्वौ ब्राह्मणान् वृणुयात् । तत्र—

आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ।
तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥
इत्याचार्यवरणे मन्त्रः ।
यथा चतुर्मुखो ब्रह्मा सर्ववेदधरः प्रभुः ।
तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा द्विजपते भव ॥
इति ब्रह्मवरणे ।
अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ।
सुप्रसन्नाः प्रकुर्वन्तु स्वकार्यं विधिपूर्वकम् ॥

इत्यन्येषाम् । सर्वांश्च प्रत्येकमभ्यर्च्य शाखानुसारेण यथाविभवं मधुपर्केणार्हयेत् । द्वारजापकांश्च तत्तत्काले वरणार्थमुपकल्पयेत् । यथासम्भवमन्यांश्च साहाय्यार्थम् । सर्वांश्च यथाविभवं वस्त्रालङ्कारादिभिः पूजयेत् । शिल्पिमौहूर्त्तिकादींश्च । तत आचार्यो यजमानेन सपत्नीकेन सब्राह्मणेन जलपूर्णकलशहस्तेन भद्रं कर्णेभिरित्यादिमन्त्रघोषेण मण्डपप्रवेशे पश्चिमतः कृते मण्डपान्तः पश्चिमत उपविश्याचम्य प्राणानायम्य यजमाना-

सुस्नातो मण्डपदेवतास्थापनायाचार्यकर्म करिष्य इति सङ्कल्प्य, मण्डपान्तः सर्वतः सर्षपविकिरणेन "यदत्र संस्थितं भूतम्" इत्यादिभिर्भूतान्युत्सार्य आपोहिष्ठेत्यादिभिरब्लिङ्गैः शुची वो-हन्येत्यादिभिः शुद्धिलिङ्गैश्च मन्त्रैः सर्वतः कुशोदकेनाभ्युक्ष्य सर्वसाधारणेन प्रकारेण पूर्वादिक्रमेण तोरणपूजां तत्रत्यकलशस्थापनं पूर्वादिद्वाराग्नेयादिकोणगतकलशस्थापनं तत्रत्यदेवतापूजां द्वारेषु च ऋग्वेदाद्यध्येतृब्राह्मणयुगलचतुष्टयवरणं यथाविभवं तत्पूजाम् इन्द्रादिलोकपालदशकावाहनध्यानपूजनानि पताकाध्वजोच्छ्रायणानि माषभक्तबलिदानं च तत्तदुद्देशेन महाध्वजस्थापनं तत्र ब्रह्मपूजनं मण्डपस्तम्भवंशगतदेवतापूजनं मण्डपपूर्वदिग्गतदेवतावाहनपूजनबलिदानानि च समन्त्रकं कुर्यात् । प्रतिष्ठाप्रकाशे उक्तत्वाद्विस्तरापत्तेश्च स प्रकारो नोच्यते । ततो वेद्यां पूर्वोक्तप्रकारेण लिखिते राजाभिषेककलशस्थापनार्थे मण्डले मध्यगते व्यूहनवके अवशिष्टचत्वारिंशद्व्यूहगतकोष्ठेषु च सर्वमण्डलानां सर्वतोभद्रप्रकृतिकत्वात्तदुक्तप्रकारेण ब्रह्मादिमण्डलदेवतानामावाहनं यथाविभवं तत्पूजनं ताभ्यश्च बलिदानं विधाय सर्वाणि पद्मानि प्रणवेनाम्भसाभ्युक्ष्य तेषु सर्वेषु प्रणवं विन्यस्य कुशानास्तीर्य प्रधानपद्ममध्ये पूर्वोक्तलक्षणं तन्तूनां परस्परान्तरालं यवमात्रं यथा स्यात्तथा जालान्तरवद्वेष्टितं शिवकुम्भं संस्थाप्य तद्वामभागे करकसंज्ञां वर्धनीं स्थापयेत् । ततस्तस्यैव पद्मस्य केसरेषु वामाद्यष्टशक्तीनां ततो दलेषु वामदेवाद्यष्टरुद्राणामुक्तलक्षणाः कुम्भाः स्थाप्याः । ततः पञ्चविंशतिकोष्ठकचत्वारिंशद्व्यूहगतमध्यमध्यकोष्ठेषु सुभद्रादिचत्वारिंशद्व्यूहेश्वराणां ततस्तत्संलग्नाष्टाष्टकोष्ठेषु तत्प्रथमावरणदेवतानां ततस्तत्सं-

लग्नषोडशकोष्ठेषु तद्वद्द्वितीयाद्यावरणदेवतानां कुम्भाः स्थापनीयाः। सर्वे चैते "मही द्यौः" इत्यादिमन्त्रैर्भूमिस्पर्शादिपूर्वकं प्रसिद्धकलशस्थापनप्रकारेण पदार्थानुसमयेन स्थाप्याः। ततः सर्वेषु प्रणवेन गन्धोदकपूरणं मध्ये च पञ्चरत्नकनकशकलब्रह्मकूर्चानां साधारणानां च पञ्चपल्लवसप्तमृत्तिकादीनां प्रक्षेपः। बहिश्च चन्दनपुष्पमालाकण्ठवेष्टनसूत्रैरलङ्करणं वस्त्रयुग्मवेष्टनं हैमरत्नचित्रकमलप्रच्छादनं च प्रत्येकं पदार्थानुसमयेनैव ससहायेनाचार्येण कार्यम्। ततः सिंहासनसन्निहितानां सर्वप्रतिमानामग्न्युत्तारणं विधाय शिवकुम्भोपरि सिंहासनं स्थापयित्वा तस्याग्नेयादिकोणगतेषु सितरक्तहिरण्याभकृष्णवर्णेषु चतुर्षु सिंहाकारेषु पादेषु धर्मज्ञानवैराग्यैश्वर्याणि प्रणवेनावाह्य तत्तद्वर्णाकाराणि ध्यात्वा तस्यैव पूर्वादिदिग्गतेषु सुवर्णवर्णेषु चतुर्षु गात्रेषु अव्यक्तं नियतिं कालं कालीं च प्रणवेनैवावाह्य तत्तद्वर्णाकारान्ध्यात्वा सर्वान्प्रणवेनैव यथाविभवं सम्पूज्य सिंहासनमध्यगते कमले पट्टवस्त्रासने उक्तलक्षणां शिवप्रतिमां कमलमध्ये आधारशक्तिं तदुपरि कलां तदुपरि जगत्कारणं बिन्दुं तदुपरि नादं तदुपरि च प्रणवाख्यं जगद्गुरुं शिवं स्थापयामीति भावयन् प्रणवपूर्वया, तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयादितिशिवगायत्र्या स्थापयित्वा शिवपादमूले कर्णिकायां मनोन्मनीं मनोन्मनाख्यमहादेवं च "मनोन्मनाय देवाय मनोन्मन्यै नमो नम" इति मन्त्रेण स्थापयेत्। एतासां देवतानां पूजनेऽप्येत एव मन्त्राः। वक्ष्यमाणदेवतानां तु प्रणवपूर्वैर्नमोऽन्तैश्चतुर्थ्यन्तैः स्वस्वनामभिरेव स्थापनं पूजनं च। ततः प्रधानकमलकेसरेषु प्रागादिक्रमेण वामा, ज्येष्ठा, रौद्री, काली, कलाविकरणी, बला, बलप्रमथनी, सर्वभूत-

दमनी चेत्यष्टौ शक्तयः। ततस्तस्यैव दलेषु तेनैव क्रमेण वामदेवः, ज्येष्ठः, रुद्रः,कालः,कलाविकरणः,बलः,बलप्रमथनः,सर्वभूतदमनश्चेत्यष्टौ रुद्राः स्थाप्याः। इदं च वामादिमिथुनाष्टकं प्रथमावरणं शिवस्य। एवमग्रेऽपि प्रागादिक्रम एव द्रष्टव्यः। ततो नाभिवीथ्यनन्तरबाह्यषोडशव्यूहमध्यमकोष्ठेषु सुभद्रादिकाः शिवस्य द्वितीयावरणदेवताः स्थाप्याः। तत्र पूर्वे सुभद्रा, आग्नेये भद्रा, दक्षिणे कनका,नैर्ऋते अम्बिका, पश्चिमे श्रीदेवी, वायव्ये वागीशा, उत्तरे गोमुखी, ऐशाने भद्रकर्णी, पूर्वाग्नेयमध्ये अणिमा, आग्नेयदक्षिणमध्ये लघिमा, दक्षिणनैर्ऋत्यमध्ये महिमा, नैर्ऋत्यपश्चिममध्ये प्राप्तिः, पश्चिमवायव्यमध्ये प्राकाम्यं, वायव्योत्तरमध्ये ऐश्वर्यम्,उत्तरैशानमध्ये वशित्वं,पूर्वैशानमध्ये कामावसायिका। पिशाचवीथ्यनन्तरबाह्यचतुर्विंशतिव्यूहमध्यमकोष्ठेषु प्रागादिक्रमेण दाक्षाद्याः शिवस्य तृतीयावरणदेवताः स्थाप्याः। ता यथा-दक्षा, दक्षायिका, चण्डा, चण्डायिका, हरा, हरायिका, शौण्डा, शौण्डायिका, प्रथमा, प्रथमायिका, मन्मथा, मन्मथायिका, भीमा, भीमायिका, शकुनी, शकुनायिका, सुमती, सुमत्यायिका, गोपा, गोपायिका, नन्दा, नन्दायिका, पितामही, पितामहायिका २४। ततः सुभद्रादिशिवद्वितीयावरणदेवतानां प्रथमद्वितीयावरणदेवतास्तत्कोष्ठबाह्याष्टतद्बाह्यषोडशकोष्ठेषु स्थाप्याः। ता यथा-बिन्दुका, बिन्दुगर्भा, नादिनी, नादगर्भजा, शक्तिका,शक्तिगर्भा,परा,परापरा, सुभद्राप्रथमावरणम्१। चण्डा, चण्डमुखी, चण्डवेगा, मनोजवा, चण्डाक्षी, चण्डनिर्घोषा, भ्रुकुटी, चण्डनायिका, महोत्सवा, मनोध्यक्षा, मानसी, माननायिका, मनोहारी, मनोह्लादी, मनःप्रीतिः, मनेश्वरी १६ सुभद्राद्वितीयावरणम्१। ऐन्द्री, हौताशनी, याम्या, नैर्ऋती, वारुणी, वाय-

न्या, कौवेरी, ऐशानी८। भद्राप्रथमात्र०२। हरिणी,सुवर्णा, काञ्च॰नी, हाटकी, रुक्मिणी,वामनाख्या सुभगा,जम्बुनायिका,वाग्भवा, वाक्पथा, वाणी,भीमा,चित्ररथा, सुधीः, वेदमाता, हिरण्याक्षी, १६ भद्राद्वि०२। वज्रं, शक्तिः, दण्डः,खड्गः,पाशः, ध्वजः, गदा, त्रिशूलम् ८ कनकाप्र०३। बुद्धा, प्रबुद्धा, चण्डा, मुण्डा, वलिनी, कपालिनी, मृत्युहन्त्री, विरूपाक्षी, कपर्दी, कमलासना, दंष्ट्रिणी, रङ्गिणी, लम्बाक्षी, कङ्कभूषणी, सम्भावा, भाविनी १६। कनकाद्वि० ३। खेचरी, आत्मनामा, भवानी, वह्निरूपिणी, वलिनी, वह्निनामा, महिमा, अमृतलालसा ८ अम्बिकाप्र०.४। शङ्खिनी, शिखरा देवी, मृदुरवा, सुशीतला, छाया, भूतपत्नी, धन्या, इन्द्रमाता, वैष्णवी, तृष्णा, रागवती, मोहा, कामकोपा, मदोत्कटा, इन्द्रा, वधिरा१६ अम्बिकाद्वि०४। स्पर्शः, रसः, गन्धः, प्राणः,अपानः,समानः,उदानः, व्यानः८ श्रीदेवीप्र०५। तमोहता, प्रभा, अमोघा, तेजनी, दहनी, भीमास्या, ज्वालिनी, शोषा, शोषिणी, रुद्रनायिका, वीरभद्रा, गणाध्यक्षा, चन्द्रहासा, गह्वरा, गणमाता, अम्बिका१६ श्रीदेवीद्वि०५। धारा, वारिधरा,वाहिकी, वायसी, मर्त्यातीता, महामाया, वज्रिणी, कामधेनुका ८ वागीशाप्र०६। पयोष्णी, वारुणी शान्ता, जयन्ती, वरप्रदा, प्लाविनी, जलमाता, पयोमाता, महाम्बिका, रक्ता, कराली, चण्डाक्षी, महोच्छुष्मा पयस्विनी, महाविद्येश्वरी, काली, कालिका १६ वागीशाद्वि० ६। शङ्खिनी, ललिता, लम्बकर्णी,कालिकनी,यक्षिणी, मालिनी,वामनी,वरमानिनी८ गोमुखीप्र०७। चण्डा,घण्टा,महानादा सुमुखी, दुर्मुखी, बला, रेवती, प्रथमा, घोरा, सौम्या, भीमा, महाबला, जया, विजया, अजिता, अपराजिता १६ गोमुखीद्वि० ७। महाघण्टा, विरूपाक्षी, शुष्काङ्गी, काममातृका, संहारी,

जातहारी, दंष्ट्राली, शुष्करेवती ८ भद्रकर्णीप्र०। पिपीलिका, पुष्पहारी, अशनी, सर्वहारिणी, भद्रहारी, शुभाचारी, हेमा, योगेश्वरी, चित्रा, भानुमती, छिद्रा, सैंहिकी, सुरभी, समा, सर्वभव्या, वेगाख्या १६ भद्रकर्णीद्वि० ८। ऐन्द्री, चित्रभानुः, वारुणी, दण्डिः, प्राणरूपी, हंसः, स्वात्मशक्तिः, पितामहः ८ अणिमाप्र० । केशवः, रुद्रः, चन्द्रमाः, भास्करः, बाह्यात्मा, अन्तरात्मा, आत्मा, महेश्वरः, परमात्मा, अणुजीवः, पिङ्गलः, पुरुषः, पशुः, भोक्ता, भूतपतिः, भीमः १६। अणिमाद्वि०९। श्रीकण्ठः, अन्तः, सूक्ष्मः, त्रिमूर्त्तिः, शशकः, अमरेशः, स्थितीशः, भारभूतः ८ लघिमाप्र०। स्थाणुः, हरः, चण्डेशः, भूतीशः, सद्योजातः, गुहेशः, क्रूरसेनः, सुरेश्वरः, क्रोधीशः, चण्डः, प्रचण्डः, शिवः, एकरुद्रः, कूर्मः, एकनेत्रः, चतुर्मुखः १६ लघिमाद्वि० १०। अजेशः, क्षेमरुद्रः, सोमेशः, लाङ्गली, चण्डारुः, अर्धनारीशः, एकान्तः, अन्तः ८ महिमाप्र०। शिखीशः, शकलः, चण्डः, द्विरण्डः, कलः, पाली, भुजङ्गः, पिनाकी, खड्गिः, कामः, ईशः, श्वेतः, भृगुः, महिमाद्वि० ११। संवर्त्तः, नकुलीशः, वाडवः, हस्तिः, चण्डयक्षः, गणपतिः, महाभृगुः, अजः ८ प्राप्तिप्र० । त्रिविक्रमः, महाजिह्वः, ध्वाङ्क्षः, श्रीभद्रः, महादेवः, दधीचः, कुमारः, परावरः, महादंष्ट्रः, करालः, सूचकः, सुवर्धनः, महाध्वाङ्क्षः, महानन्दी, नण्डी, गोपालकः १६ प्राप्तिद्वि० १२। पुष्पदन्तः, महानन्दः, विपुलानन्दकारकः, शुक्लः, विशालः, कमलः, बिल्वः, अरुणः ८ प्राकाम्यप्र० । रतिप्रियः, सुरेशानः, चित्राङ्गः, सुदुर्जयः, विनायकः, क्षेत्रपालः, महामोहः, जाङ्गलः, वत्सपुत्रः, महापुत्रः, ग्रामाधिपः, देशाधिपः, सर्वस्थानाधिपः, मेघनादः, प्रचण्डकः, कालदूतः १६ प्राकाम्यद्वि० १३। मङ्गला, चर्चिका, योगेशा, हरदायिका, भासुरा,

सुरमाता, सुन्दरी, मातृका८। ईशित्वप्र० । गणाधिपः, मन्त्रज्ञः, वरदेवः, षडाननः,विदग्धः,विचित्रः,अमोघः, मोघः,अस्त्रः, रुद्रः, सोमेशः, उत्तमोदुम्बरः, नारसिंहः, विजयः, इन्द्रगुहः, अपाम्पतिः१६ ईशित्वद्वि०१४। गगनः,भवनः,विजयः,अजयः,महाजयः अङ्गारः, व्यङ्गारः, महायशाः८ वशित्वप्र० । महाहर्षः, प्रचण्डेशः, महावर्णः, महासुरः, महारोमा, महागर्भः, प्रथमः, कनकः, खरजः,गरुडः,मेघनादः,गर्जकः, गजत्वक्छेदकः,वाहः,त्रिशिखः, मारिः १६ वशित्वद्वि० १५। विनादः, विकटः, वसन्तः, अभयः, विद्युत्, महाबलः, कमलः, दमनः ८ कामावसायिकाकाप्र० । घर्मः, अतिबलः, सर्पः, महाकायः, महाहनुः, सबलः, भस्माङ्गी, दुर्जयः, दुरतिक्रमः, वेतालः, रौरवः, दुर्धराभोगः, वज्रः, कालाग्निरुद्रः, सिंहनादः, महागुहः १६ कामावसायिकाद्वि० १६। ततो दाक्षादिशिवतृतीयावरणदेवतानां प्रथमद्वितीयावरणदेवतास्तत्कोष्ठबाह्याष्टतद्बाह्यषोडशकोष्ठेषु स्थाप्याः । ता यथा–मनोहरा, महानादा, चित्रा, चित्ररथा, रोहिणी, चित्राङ्गी, चित्ररेखा, विचित्रिका ८ दाक्षाप्र० चित्रा, विचित्ररूपा, शुभदा, कामदा, शुभा, क्रूरा, पिङ्गलादेवी, खड्गिका, लम्बिका, सती, दंष्ट्राली, राक्षसी, ध्वंसी, लोलुपा, लोहितामुखी १६ दाक्षाद्वि०१। सर्वाशिनी, विश्वरूपा, लम्पटा, आमिषप्रिया, लम्बोष्ठी, दीर्घदंष्ट्रा, लम्बजानुः, महारिणी ८ दाक्षायिकाप्र० । गजकर्णा, अश्वकर्णा, महाकाली, सुभीषणा, वातवेगरवा, घोरा, घना, घनरवा, घोरघोषा, महाघण्टा, सुघण्टा, घण्टिका, घण्टेश्वरी, महाघोरा, अघोरा, अतिघोरिका १६ दाक्षायिकाद्वि०२ । अतिघण्टा, अतिघोरा, कराला, करभा, विभूतिः, भोगदा, कान्तिः, शङ्खि-

नी८ चण्डाप्र०। पत्रिणी, गान्धारी, योगमाता, सुपीवरा, उत्तालका, उल्मुका, वीरा, संहारी, रमणी, फलहारी, जीवहारी, स्वेच्छाहारी, तुण्डिका, रेवती, रङ्गिणी, सङ्गा १६ चण्डाद्वि० ३। चण्डी, चण्डमुखी, चण्डा, चण्डवेगा, महारवा, भ्रुकुटी, चण्डरूपा, चण्डभूः ८ चण्डायिकाप्र० । चण्डघ्राणा, चला, चलजिह्वा, चलेश्वरी, चलवेगा, महाकाया, महामाया, विद्युता, कङ्काली, कृशाङ्गी, किंशुका, चण्डघोपिका, महाहासा, महारावा, चण्डभा, अनङ्गचण्डिका १६ चण्डायिकाद्वि० ४। चण्डाक्षी, कामदा, शूकरा, कुक्कुटानना, गान्धारी, दुन्दुभिः, दुर्गा, सौमित्रा, ८ हराप्र० । अमृतोद्भवा, महालक्ष्मीः, वर्णदा, जीवरक्षिणी, हरिणी, क्षीणजीवा, चन्द्रवक्त्रा, चतुर्भुजा, व्योमचारी, व्योमरूपा, व्योमव्यापी, शुभोदया, गृहचारी, सुचारी, विपाहारी, विपान्तिका१६ हराद्वि०५। जम्भा, अच्युता, कङ्कारी, देविका, दुर्धरा, वहा, चण्डिका, चपला ८ हरायिकाप्र० । चण्डिका, चामरी, भण्डिका, शुभानना, पिण्डिनी, मुण्डिनी, मुण्डा, शाकिनी, शाङ्करी, कर्तरी, हर्त्तरी, भामिनी, यज्ञदायिनी, यमदंष्ट्रा, महादंष्ट्रा, कराला १६ हरायिकाद्वि० ६ । विकराली, कराली, कालजङ्घा, यशस्विनी, वेगा, वेगवती, विद्या, वेदाङ्गा,८ शौण्डाप्र०। वज्रा, शङ्खवती, शङ्खा, अवला, एकवला, वला, अतिवला, लोला, कुम्भिनी, स्तम्भिनी, अञ्जनी, मोहिनी, माया, विकटाङ्गी, नली, कल्लोला १६ शौण्डाद्वि० ७। दन्तुरा, रौद्रभागा, अमृता, सुकुला, चलजिह्वा, अर्धनेत्रा, रूपिणी, दारिका ८शौण्डायिकाप्र०। खादका, रूपनाशा, संहारी, अक्षया, अन्तका, कण्डनी, पेषणी, महाग्रासा, कृतान्तिका, दण्डिनी, किङ्करी, विम्बा, वर्णिनी, अमलाङ्गिनी,

विद्राणी, द्राविणी, १६ शौण्डायिकाद्वि० ८। प्लवनी, प्लावनी, शोभा, मन्दा, मदोत्कटा, मदा, क्षया, महादेवी ८ प्रमथाप्र०। कामसन्दीपनी, अतिरूपा,मनोहरा, महावशा,मदग्राहा, विह्वला, मदविह्वला, अरुणा, घोषणी, दिव्या, रेवती, भाण्डनायिका, स्तम्भनी, घोररक्ताक्षी, घोररूपा, सुघोषणा १६ प्रमथाद्वि० ९। घोरा, घोरतरा, अघोरा, अतिघोरा, अघनायिका, धावनी, क्रोष्टुकी, मुण्डा ८ प्रमथायीप्र० । भीमा, भीमतरा, अभीमा, शास्त्री, सुवर्चला, स्तम्भनी, मोहनी, रौद्री, रुद्रवती, अचलाचला, महाबला, महाशान्तिः, शिवाशीला, शिवाशिवा, बृहत्कुक्षी, महानासा १६ प्रमथायीद्वि० १०। कालकर्णी, कराला, कल्याणी, कपिला, शिवा, इष्टिः, तुष्टिः, प्रतिष्ठा ८ मन्मथाप्र०। शान्तिः,तुष्टिकरी, पुष्टिः, जया, श्रुतिः, धृतिः, कामदा, शुभदा, सौम्या, तेजनी, कामतन्त्रिका, धार्मिकी, धर्मिणी, शीला, पापहा, धर्मवर्धनी १६ । मन्मथाद्वि ११ । धर्मरक्षा, विधाता, धर्मा, धर्मवती,सुमतिः, दुर्मतिः, मेधा, विमला ८ मन्मथायिकाप्र० । शुद्धिः, बुद्धिः, मतिः,कान्तिः, वर्तुला, मोहवर्धनी, बला, अतिबला, भीमा, प्राणवृद्धिकरी, निर्लज्जा, निर्घृणा, मन्दा, सर्वपापक्षयङ्करी,कपिला,अतिविधुरा १६ मन्मथायिकाद्वि० १२। रक्ता, विरक्ता, उद्वेगा, शोकवर्धनी, कामा, तृष्णा, क्षुधा, मोहा ८ भीमाप्र० । जया, निद्रा, अभया, आलस्या, सुतृष्णा, रोदनी, दरा, कृष्णाकृष्णाङ्गिनी, वृद्धा, अशुद्धोच्छिष्टाशनी, वृषा, कामदा, भोगिनी, दग्धा, दुःखदा, सुखदा १६ भीमामाद्वि० १६ । आनन्दा, सुनन्दा, महानन्दा, शुभङ्करी, वीतरागा, महोत्साहा, जितरागा, मनोरमा ८भीमायिकाप्र०। मनोन्मनी, मनःक्षोभा, मदा, उन्मादा, मदाकुला, मदोद्भर्मा,

मदारामा, कामानन्दा, सुविह्वला, महावेगा, सुवेगा, महाभोगा, क्षयावहा, क्रमणी, क्रामणी, चक्रा १६ भीमायिकाद्वि० १४। योगावेगा, सुवेगा, अतिवेगा, सुवासिनी, देवी, मनोरथावेगा, रुद्रावर्त्तवती, मतिः ८-शकुनाप्र०। रोधनी, क्षोभणी, वाला, अतिघोषा, सुघोषिणी, विद्युता, त्रासिनी, मनोवेगा, सुचापला, विद्युज्जिता, महाजिह्वा, भ्रुकुटीकुटिलानना, स्फुरज्ज्वाला, महाज्वाला, सुज्वाला, क्षयान्तिका १६ शकुनाद्वि० १५। ज्वालिनी, भस्माङ्गी, भस्मान्तका, अन्तका, भाविनी, प्रजा, विद्या, ख्यातिः ८ शकुनायिकाप्र० । उल्लेखा, पताका, भोगा, भोगवती, खगा, योगव्रता, योगमाता, योगाख्या, योगपारगा, ऋद्धिः, बुद्धिः, धृतिः, कान्तिः, स्मृतिः, साक्षाच्छ्रुतिः, धरा १६ शकुनायिकाद्वि० १६। परेष्टा, परादित्या, अमृता, फलनाशिनी, हिरण्याक्षी, सुवर्णाक्षी, कपिञ्जला, कामरेखा ८ सुमतीप्र० । रत्नद्वीपा, वसुद्वीपा, रत्नदा, रत्नमालिनी, रत्नशोभा, सुशोभा, महाशोभा, महाद्युतिः, शबरी, शाम्बरी, ग्रन्थिपादा, ग्रन्थिकर्णा, ग्रन्थिकरानना, हयग्रीवा, हयजिह्वा सर्वग्रासा १६ सुमतीद्वि० १७। सर्वाशी महाभक्षा, महादंष्ट्रा, अतिरौरवा, स्फुलिङ्गा, विस्फुलिङ्गा, कृतान्ता, भास्करानना, ८ सुमत्यायिकाप्र० । रागा, रागवती, क्रोधा, महाक्रोधा, रौरवा, क्रोधनी, सूदनी, कलहा, कलहावती, कलान्तिका, चतुर्भेदा, दुर्गा, दुर्गमानगा, नाली, कुनाली, सौम्या, १६ सुमत्यायिकाद्वि० १८। पाटली, पाटवी, पाटी, विटिपिटा, कङ्कटा, सुघटा, प्रघटा, घटोद्भवा ८ गोपाप्र० । नादाक्षी, नादरूपा, सर्वाकारा, सर्वागमा, सर्वगमा, अग्रचारी, सुचारी, चण्डनाडी, सुवाहिनी, सुयोगा, वियोगा, हंसाक्षी, विलासिनी, सर्वगा, सुविरावा,

वन्धनी १६ गोपाद्वि० १९। भेदिनी,छेदिनी,सर्वकारी,क्षुधाशनी, उच्छुष्मा, गान्धारी,भस्माशी, वडवानला ८ गोपायिकाप्र०। अन्ववज्वालिनी, ज्वाला, दीपा, क्षामा, अन्तरिक्षा, हृल्लेखा, हृद्गमा, मायिकापरा, आमयासादिनी, भिल्ली, सद्यासद्या, सरस्वती, रुद्रशक्तिः, महाशक्तिः, महामोहा, रोदिनी १६ गोपायिकाद्वि० २०। नन्दिनी, निवृत्तिः, प्रतिष्ठा, विद्यानाशी, खग्रसिनी, चामुण्डा, प्रियदर्शिनी ८ नन्दाप्र० । गुह्या, नारायणी, मोहा, प्रज्ञा, वज्रिणी, कङ्कटा, काली, शिवा, घोषा, वीरा, माया, कामेशी, वाहिनी, भीषणा, स्वर्गा, माला १६ नन्दाद्वि० २१ । विनायकी, पूर्णिमा, रङ्गिणी, कूर्दनी, इच्छा, कपालिनी, दीपनी, जयन्तिका ८ नन्दायिकाप्र० । पावनी, अम्बिका, सर्वाशा, पूतना, छागली मोदिनी, लम्बोदरी, संहारी, कालिनी, कुसुमा, शुक्रा, तारा, ज्ञाना, क्रिया, गायत्रिका, सावित्री १६ नन्दायिकाद्वि० २२। दन्तुरी, फेत्कारी, क्रोधहंसा, षडङ्कुला, आनन्दा, सुदुर्गा, संहारी, अमृता८पितामहीप्र० । कुलान्तिका, अनला, प्रचण्डा, मर्दिनी, शुभा, सर्वभूताभया, वडवामुखी, लम्पटा, पन्नगा, कुसुमा, विपुलान्तिका, केदारा, कूर्मा, दुरिता, मन्दरोदरी, खड्गचण्डा १६ पितामहीद्वि० २३ । वज्रा, मन्मथा, चोरा, विकारा, रिपुभेदिनी, रूपा, चतुर्भुजा, योगा, ८ पितामहायिकाप्र० । भूताभया, महाबाला, खर्परा, भस्मा, कान्ता, सृष्टिः, द्विभुजा, ब्रह्मरूपिणी, सद्यःफेत्कारिका, कर्णमोटी, महामोहा, महामाया, गान्धारी, पुष्पमालिनी, शब्दार्थी, सुमहाघोषा १६ पितामहायिकाद्वितीयावरणमिति २४ । एवं सर्वा देवताः प्रतिष्ठाप्य शिवमनोन्मनीमनोन्मनदेवानां पूर्वोक्तमन्त्रैरन्यासां नाममन्त्रैरावाहनपूर्वोक्तध्यानपूर्वकं षोडशो-

पचारैः छत्रचामरादर्शादिराजोपचारैश्च यथाविभवं स्थापन-क्रमेण काण्डानुसमयेन पदार्थानुसमयेन वा यथाशक्ति पूजनं कृत्वा सपत्नीकयजमानसहितः पुष्पाञ्जलिं दत्त्वा नमोऽन्तै-र्नाममन्त्रैः प्रत्येकं पायसबलिं च दत्त्वा दण्डवत्प्रणमेदाचा-र्यः । अस्मिन्नेव च समये कैश्चित्सहायैः सहितः पुरोहितो रुद्रक्षेत्रे तदभावे रुद्राभिषेकार्थमेव कृते प्रतिष्ठापितमण्डपदेवते मण्डपे बाणलिङ्गमूर्त्तिं महादेवं लिङ्गपुराणगतेन विष्णुप्रोक्तेन भवादिशिवनामसहस्रेण यथाविभवं सम्पूज्य सपत्नीकयजमा-नसहितः पुष्पाञ्जलिं दत्त्वा क्षीरेण दध्ना पञ्चगव्येन वा पूरितं ताम्रमयं मृन्मयं वा कलशसहस्रं पूर्वोक्तविधिना तदग्रे स्थापयित्वा सर्वेषु कलशेषु ब्रह्मकूर्चान्निक्षिप्य तत्कलशस्थितक्षी-रादिना ब्रह्मकूर्चैस्तमेव महादेवं रुद्राध्यायं पठन्नभिषेचये-त् । ततो महादेवस्यानुज्ञया तदभिषेकावशिष्टेन क्षीरादिना "ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः शर्वस-र्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः"इत्यघोरमन्त्रेण,"त्र्यम्बकं यजा-महे सुगन्धिं पुष्टिवर्द्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमा-मृतात्"इति त्र्यम्बकमन्त्रेण वा राजानमभिषिञ्चेत्पुरोहित एव । अघोरमन्त्रस्य संहितीर्देवता उपनिषद ऋषयः रुद्रो देवता स्वरा-डनुष्टुप्छन्दः राज्ञोऽभिषेके विनियोगः । त्र्यम्बकमन्त्रस्य वसिष्ठ ऋषिर्मृत्युञ्जयरुद्रो देवताऽनुष्टुप् छन्दः । विनियोगः स एव । ततः प्रधानमण्डपे पूर्वाग्नेयादिदिग्विदिग्गतेष्वष्टसु कुण्डेषु स्थण्डि-लेषु वा ब्रह्मसहिता होतारोऽष्टौ पूर्वैशान्यन्तरालगते कुण्डे स्थ-ण्डिले वा आचार्यो नृप एव पुरोहितो वा ब्रह्मसहितो यथास्वगृह्य-मग्निप्रतिष्ठादिप्रधानहोमप्राचीनमङ्गकाण्डं कृत्वा प्रधानहोमसमये अघोरमन्त्रेण त्र्यम्बकमन्त्रेण वा घृतपलाशसमिदाज्यचरुलाजशा-

लिनीवारतण्डुलैः प्रतिद्रव्यमष्टोत्तरसहस्रमष्टोत्तरशतं वाऽऽहुनीर्जुहुयुः। मन्त्रगांर्षिदेवताच्छन्दांस्युक्तान्येव। जयाभिषेकाङ्गहोमे विनियोग इति विशेषः। अन्ते च स्वाहाकारः । एवं सर्वत्र । तत्र याम्ये होत्रा कृष्णवाससा भवितव्यम्। तत्तद्वेदशाखागतान्यग्निमुखानि तुलादानादिप्रयोगेषु द्रष्टव्यानि विस्तरभयान्नोच्यते। होमसमये द्वारजापकजप्यानि तत्तद्वेदगतानि शान्तिसूक्तान्यपि तत्रैव द्रष्टव्यानि। यद्वा प्रतिकुण्डं भिन्नभिन्नाः प्रधानहोममन्त्राः। यथा—"ॐतत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्" इतिपुरुषमन्त्रः प्राक्कुण्डे। अस्य सांहितीर्देवता उपनिषद ऋषयः,रुद्रो देवता, गायत्रीछन्दः, विनियोगः प्राग्वत्। एवमग्रेऽपि। "ॐजातवेदसे सुनवामसोममरातीयतो निदहाति वेदः। स नः पर्षदतिदुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः"इत्याग्नेये "रुद्रो वा एष यदग्निः"इति श्रुतेश्च रौद्रो मन्त्रः । अस्य काश्यपो जातवेदा अग्निस्त्रिष्टुप् । अघोरेभ्य इत्यादिघोरमन्त्रः प्रागुक्त एव दक्षिणे । "ॐनिशि निशि जय स्वाहा खड्गराक्षसभेदन। रुधिराज्यार्द्रनिर्ऋत्यै स्वाहा नमः स्वधा नमः" इति पौराणो नैर्ऋतो मन्त्रो नैर्ऋत्ये।

"ॐ नमोऽस्तु वामदेवाय नमो ज्येष्ठाय शूलिने।
रुद्राय कालरूपाय कलाविकरणाय च॥
बलाय बलप्रमथनाय सर्वभूतदमनाय च।
मनोन्मनाय देवाय मनोन्मन्यै नमोनमः॥"

इतिमन्त्रः पौराणः पश्चिमे । ॐसमीर समीर स्वाहा स्वधा नमो नमः" इति पौराणो मन्त्रो वायव्ये। "ॐसद्योजातं प्रपद्यामि सद्योजाताय वै नमः। भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः" इति मन्त्र उत्तरे।

अस्य सांहिती देवता उपनिषदो रुद्रो बृहती। "ॐईशानाय कद्रुद्राय रुद्राय प्रचेतसे त्र्यम्बकाय शर्वाय। तन्नो रुद्रः प्रचोदयात्" इत्यैशान्ये। अस्य अघोरः कण्वो रुद्रो गायत्री। "ॐईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम्। ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदा शिवोम्" इति पूर्वैशान्यन्तरालगते प्रधानकुण्डे। अस्य सांहिती देवता उपनिषदो रुद्रो गायत्री। एवं प्रधानहोमं कृत्वा स्वाहान्तैर्नामभिः प्रत्येकमाज्येनैकैकामाज्याहुतिं स्वकुण्डे जुहुयादाचार्यः पूर्वोक्तमण्डलदेवताभ्यः। ततः स्विष्टकृदादि। अघोरमन्त्रेण प्रायश्चित्ताहुतिपुरःसरं सर्वे पूर्णाहुतिप्राचीनमुत्तराङ्गकाण्डं कृत्वा राज्ञा दिक्पालादिभ्यो बलिदाने कृते सर्वैश्वशिष्टैर्होमद्रव्यैः पुनः राजानम् अघोरमन्त्रेण त्र्यम्बकमन्त्रेण वाभिषिञ्चेयुः। ततोऽभिषिक्तेन राज्ञा यथास्वगृह्यं पुण्याहवाचने कृते, त्र्यम्बकमन्त्रेण हेममयं मृणालयुक्तं कौतुकं राज्ञो दक्षिणकरे बध्नीयादाचार्यः। ततस्तत्रैव महामण्डपे राजानमधिवासयेत्। राज्ञा च मूत्रोत्सर्गाद्यावश्यकवर्जं तत्रैवाधिवस्तव्यम्। ऋत्विग्भ्यश्चाधिवासनदक्षिणा यथाशक्ति देया। गीतवादित्रपुराणादिभिश्च तस्यां रात्रौ जागरणं कार्यम्। उपोषणं च तद्दिने सर्वेषाम्। अशक्तस्य हविष्याशनम्। ततोऽपरेद्युः प्रातरुत्थाय नित्यकर्म कृत्वा सर्वे स्वस्वकुण्डे यथाशाखं पूर्णाहुतिं जुहुयुः। अथाचार्यः पुरोहितर्त्विगादिसहितः प्रधानमण्डपादुत्तरतः कृते द्वारदेशात्पदमात्रे निखातैः प्रागादिक्रमेण पलाशोदुम्बराश्वत्थवटमयैस्तोरणैर्युक्ते दशहस्ते राजाभिषेकमण्डपे तोरणेषु हेमकुम्भान्निधाय दिग्गजाष्टकं चावाह्य सर्वतो दर्भमाला आवध्य द्वारदेशे कुम्भान् संस्थाप्य द्वारादिप्रदेशेषु इक्षुस्तवराजनिष्पावाजाजिधान्यकविकारव-

द्रोक्षीरकुसुम्भपुष्पलवणाख्यान्यष्टमङ्गलद्रव्याणि प्रकीर्य साधारणविधया च मण्डपप्रतिष्ठां कृत्वा तन्मध्यस्थायां रचितस्वस्तिकादिमण्डलायामास्तृतदर्भायां विकीर्णाष्टमङ्गलद्रव्यायां वेद्यां सुवर्णरूप्यताम्रान्यतरमयं क्षीरिवृक्षजं वा माण्डलिकानन्तरजिन्महाराजानां क्रमेणैकसपादसार्द्धहस्तोच्छ्रायायामं भद्रासनं संस्थाप्य तदुपरि परिहितनववस्त्रं सायुधमलङ्कृतं शुद्धभस्मोद्धूलितसर्वाङ्गं राजानमुपवेश्य तद्वामतस्तत्पत्नीं चोपवेश्य "तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि । तन्नः शिवः प्रचोदयात् ॥" इतिशिवगायत्र्या शिवकुम्भेनाभिषिच्य पूर्वोक्तया गौरीगायत्र्या वर्धन्या चाभिषिच्य शेषकलशैः स्थापनक्रमेण रुद्राध्यायं पठन्नभिषिञ्चेत्, अघोरमन्त्रेण वा । तदा च प्रतिकलशं तदावृत्तिः । अभिषेकश्च कलशनिहितान् कूर्चान् कलशमुखेष्वानीय तद्द्वारा राजमूर्धनि यथोदकं पतति तथा कार्यः, कूर्चैः प्रोक्षणं वा । तदा चेतरेऽपि ब्राह्मणाः स्वस्वशाखागतान् "सुरास्त्वामभिषिञ्चन्तु" इत्यादिपौराणांश्चाभिषेकमन्त्रान् पठेयुः । शङ्खभेर्यादिनानावाद्यशब्दश्च विधेयः । मन्त्र्यादयो राजसेवकाः पौरादयश्च जयादिशब्दैः राजानं वर्धयेयुः । ततः कलशान्तर्गतपिष्टौषधिलेपपूर्वकं राजा शुद्धोदकेन स्नात्वा क्षौमे वाससी परिधाय धृतप्रभूतशुक्लमणिखचितमुकुटादिदिव्यभूषणनृपचिह्न आचार्यादिभिः प्रणीतानिनयनादौ कर्मशेषे समापिते यथाचारं भस्मधारणं कुर्यात् । नृपचिह्नानि च नवोपकल्पितानि शिबिकावैजयन्तीचन्द्रसमप्रभच्छत्रशङ्खचामरभेर्यादीन्युत्तमानि भूषणानि च प्रभूतान्याचार्यो राज्ञे दद्यात् । ततः कृतजयाभिषेकप्रतिष्ठासिद्ध्यर्थम् अष्टषष्टिपलहेमनिर्मितं नवरत्नालङ्कृतं सुरद्रुमं

दशधेनुशतानि सुशोभनं क्षेत्रं प्रत्येकं शतद्रोणमितांस्तिलांस्तण्डुलांश्च सोपधानतूलिकाद्युपस्करां शय्याम् अश्वादिवाहनं रथादियानं च आचार्यायामुकशर्मणे दक्षिणामहं सम्प्रददे न ममेति गुरवे दक्षिणां दद्यात् । परिमाणतो मूल्यतश्चैतदर्धमितानि सुरद्रुमादीनि मिलितेभ्यः सर्वेभ्यो होतृभ्यस्तथैव तदर्धमितानि सर्वाणि मिलितेभ्यो द्वारजापकेभ्यस्तदर्धमितानि ब्रह्मभ्यो गुरुवदेव दद्यात् । सर्वे च स्वस्त्युक्तिकामस्तुत्यादिपूर्वकं प्रतिगृह्णीयुः । पुरोहिताय च जयाभिषेकाङ्गभूतरुद्राभिषेकप्रतिष्ठासिद्ध्यर्थं यथाशक्ति सुवर्णादूर्ध्वं हिरण्यं दक्षिणां दद्यात् । रुद्राभिषेकोपस्करं च बाणलिङ्गकलशमण्डपादिकं प्रतिपादयेत् । तत इतरसहायभूतब्राह्मणेभ्योऽपि यथाशक्ति सुवर्णं दक्षिणां दद्यात् । दीनानाथादिभ्यश्च यथाशक्ति भूयसीम् । ब्राह्मणभोजनं च सहस्रावरं यथाशक्ति सङ्कल्पयेत् । ततः स्थापितदेवतानामुत्तरपूजां कृत्वा सर्वाः प्रतिमाः कलशादिसर्वोपस्करयुताः सोपस्करं च मण्डपद्वयमाचार्यहस्ते प्रतिपादयेत् । होमोपकरणानि स्रुगाज्यचरुस्थाल्यादीनि तत्तद्धोतृहस्ते, हविःशेषांश्च तत्तद्ब्रह्महस्ते प्रतिपादयेत् । ततस्तत्तत्कुण्डस्थितानग्नीन् यथाविभवं गन्धादिदक्षिणान्तोपचारैः सम्पूज्य नमस्कृत्य सर्वान् प्रदक्षिणीकृत्य "गच्छ गच्छ सुरश्रेष्ठ" इति सर्वान् विसर्जयेत् । तत आचार्यादिभिः कर्मणः सम्पूर्णतामच्छिद्रतां च वाचयित्वा राजा आचार्यादिसहितो महादेवस्य महतीं पूजां यथाविभवं महता सम्भारेण रुद्रमन्त्रेण कृत्वा "यस्य स्मृत्या च" इत्याद्युक्त्वा सकलस्वकीयसुहृन्मन्त्रिपरिजनादियुतो भुञ्जीत । तद्दिने च न कस्यापि निगडबन्धनादि कुर्यात्पूर्वबद्धांश्च मोचयेदिति ।

इति जयाभिषेकप्रयोगः ।

एवं षष्ठे दिने जयाभिषेकं सम्पाद्य मङ्गल्यसुस्वप्नदर्शने समीचीने च निमित्ते सति व्रजादित्युक्तम् । तत्र प्रस्थानतः सप्तमे दिने कियद्दूरे गत्वावस्थेयमित्यपेक्षायाम्—

**विष्णुधर्मोत्तरे,**

क्रोशमात्रं ततो गच्छेन्नाधिकं तु कदाचन ।
गत्वा देशे शुभे तिष्ठेत्पूजयित्वा सुरद्विजान् ॥
ततः क्रमेण गच्छेच्च परदेशं महीपतिः ।
आत्मसैन्यानुरूपेण कृतरक्षः पथा द्विज ॥

कृतरक्षः सन् आत्मसैन्यस्यानुरूपेण यवसेन्धनधान्यादि-मत्तया योग्येन पथा मार्गेण गच्छेत् ।

त्रिरात्रमुषितो गच्छेद्भूयो नक्षत्रसम्पदा ।

नक्षत्रसम्पदेति चन्द्रशुद्धिनिषिद्धयोगकरणादिराहित्योप-लक्षणम् ।

यवसेन्धनतोयानां रक्षको विषदूषणात् ।
परानभिमुखो गच्छेत्प्रभूतयवसेन्धनः ॥ इति ।

**मनुः,**

कृत्वा विधानं मूले तु यात्रिकं च यथाविधि ।
मूले, मूलभूते स्वदेशे । विधानं, तद्रक्षणार्थं सैन्यस्थापनादि ।
उपगृह्यास्पदं चैव चारान् सम्यग्विधाय च ॥
संशोध्य त्रिविधं मार्गं षड्विधं च बलं स्वकम् ।
साम्परायिककल्पेन यायादरिपुरं प्रति ॥

त्रिविधं मार्गं, जलस्थलवनरूपं मार्गम् । षड्विधं बलं, "मौलं च भृतकं चैव"इत्यादिनाभिहितम् । साम्परायिककल्पेन, युद्धकल्पेन ।

शत्रुसेविनि मित्रे च गूढे युक्ततरो भवेत् ।
गतप्रत्यागते चैव स हि कष्टतरो रिपुः ॥ इति ।
मत्स्यपुराणे तु कालविशेषेण सेनायां विशेष उक्तः—
पदातिनागबहुलां सेनां प्रावृषि योजयेत् ।
हेमन्ते शिशिरे चैव रथवाजिसमाकुलाम् ॥
खरोष्ट्रबहुलां सेनां तथा ग्रीष्मे नराधिपः ।
चतुर्विधबलोपेतां वसन्ते वा शरद्यथ ॥
सेना पदातिबहुला यस्य स्यात्पृथिवीपतेः ।
अभियोज्यो भवेत्तेन शत्रुर्विषममाश्रितः ॥
गम्ये वृक्षावृते देशे स्थितं शत्रुं तथैव च ।
किञ्चित्पङ्के तथा यायाद्बहुनागो नराधिपः ॥
रथाश्वबहुलो यायात् शत्रुं समपथाश्रयम् ।
जलाश्रयं नौबहुलस्तथा राजा रिपुं जयेत् ॥
खरोष्ट्रबहुलो राजा शत्रुं च वनसंस्थितम् ।
न वनस्थोऽभियोज्योऽरिः सदा प्रावृषि भूभुजा ॥
हिमपातयुते देशे स्थितं ग्रीष्मेऽभियोजयेत् ।
यवसेन्धनसंयुक्तं काले पार्थिव हैमने ॥
शरद्वसन्तौ धर्मज्ञ कालौ साधारणौ मतौ ।
विज्ञाय राजा हितदेशकालौ दैवं त्रिकालं च तथैव बुद्ध्वा ।
यायात्परं कालविदां मतेन सञ्चिन्त्यमानं द्विजमन्त्रविद्भिः ॥ इति ।

विष्णुधर्मोत्तरे,

राम उवाच ।

साङ्ग्रामिकमहं त्वत्तः श्रोतुमिच्छामि भूभुजाम् ।
सर्वं वेत्सि महाभाग त्वं देव परमेष्ठिवत् ॥

पुष्कर उवाच ।

द्वितीयेऽहनि सङ्ग्रामो भविष्यति यदा तदा ।
गजाश्वान् स्नापयेद्राजा सर्वौषधिजलैः शुभैः ॥
गन्धमाल्यैरलङ्कुर्यात् पूजयेच्च यथाविधि ।
नृसिंहं पूजयेद्विष्णुं राजलिङ्गान्यशेषतः ॥
छत्रं ध्वजं पताकां च वर्म चैव महाभुज ।
आयुधानि,च सर्वाणि तथा पूज्यानि भृगुजा ॥
तेषां सम्पूजनं कृत्वा रात्रौ प्रमथपूजनम् ।
कृत्वा तु प्रार्थयेद्राजा विजयायेतराय वा ॥
प्रमथांश्च सहायार्थे धरणीं च महीभुजम् ।
भिषक्पुरोहितामात्यमन्त्रिमध्ये तथा स्वपेत् ॥
संयतो ब्रह्मचारी च नृसिंहं संस्मरन् हरिम् ।
रात्रौ दृष्टे शुभे स्वप्ने समरारम्भमाचरेत् ॥
रात्रिशेषे समुत्थाय स्नातः सर्वौषधीजलैः ।
पूजयित्वा नृसिंहं तु वाहनाद्यमशेषतः ॥
पुरोधसा हुतं पश्येज्ज्वलितं जातवेदसम् ।
पुरोधाः पूर्ववत्तत्र मन्त्रांस्तु जुहुयात्पुनः ॥
दक्षिणाभिः शुचिर्विप्रान् पूजयेत्पृथिवीपतिः ।
ततोऽनुलिम्पेद्गात्राणि गन्धद्वारेति पार्थिवः ॥
चन्दनागुरुकर्पूरकान्तकालीयकैः शुभैः ।
मूर्ध्नि कण्ठे समालभ्य रोचनां च तथा शुभाम् ॥
आयुष्यं वर्चसं चैव मन्त्रेणानेन मन्त्रितम् ।
अलङ्करणमाबध्याच्छ्रियं धातुरितिस्रजम् ॥
या ओषधय इत्येवं धारयेदोषधीः शुभाः ।
नवो नवेति वस्त्रं च कार्पासं बिभृयाच्छुभम् ॥

ऐन्द्राग्नेति ततो वर्म धन्वनागेति वै धनुः ।
ततो राजा समादद्यात्सशरं त्वभिमन्त्रितम् ॥
कुञ्जरं वा रथं वाश्वमारुहेदभिमन्त्रितम् ।
आरुह्य शिविराद्राजा विनिष्क्रम्य समे शुभे ।
देशे त्वदृश्यः शत्रूणां कुर्यात्प्रकृतिकल्पनाम् ॥ इति ।

अथ पुरोहितकर्तृकमाश्वलायनोक्तं सन्नहनं राजधर्मत्वादुच्यते ।

सङ्ग्रामे समुपोढे राजानं सन्नाहयेदात्वाहार्षमन्तरेधीति पश्चाद्रथस्यावस्थाय जीमूतस्येव भवति प्रतिकमिति कवचं प्रयच्छेदुत्तरया धनुरुत्तरां वाचयेत्स्वयं चतुर्थीं जपेत्पञ्चम्येषुधिं प्रयच्छेदभिप्रवर्तमाने षष्ठीं सप्तम्याश्वानष्टमीमिषूनवेक्षमाणं वाचयत्यहिरिवभोगैः पर्येति बाहुमिति तलं नह्यमानमथैनं सारयमाणमुपारुह्याभीवर्त्तं वाचयति प्रयो वां मित्रावरुणेति च द्वे अथैनमन्वीक्षेताप्रतिरथशाससौपर्णैः प्रधारयन्तु मधुनो घृतस्येतत्सौपर्णं सर्वा दिशोऽनुपरि यायादादित्यमौशनसं वावस्थाय प्रयोधयेदुपश्वासय पृथिवीमुत द्यामिति तृचेन दुन्दुभिमभिमृशेदवसृष्टा परापतेतीषून्विसर्जयेद्यत्र बाणाः सम्पतन्तीति युध्यमानेषु जपेत्संशिष्याद्वा संशिष्याद्वा । इति । ( आ० गृ० सू० अ० ३ । कं० १२ । )

अस्यार्थः । समुपोढे उपस्थिते । सन्नाहयेत्, पुरोहित इति शेषः। आत्वेति सूक्तं,जपेदितिशेषः । पादग्रहणेन ऋग्ग्रहणे प्राप्तेऽप्यत्र सूक्तग्रहणमितिवृत्तिकृत् । जीमूतेति, अस्य सूक्तस्याद्ययेतिशेषः, राज्ञे इति च शेषः । उत्तरया "धन्वनागा"इति धनुः प्रयच्छेत् । उत्तरां "वक्ष्यन्ती वेदा"इति वाचयेत् ,राजानमितिशेषः । स्वयं पुरोहितः "ते आचरन्ति"इति जपेत् । पञ्चम्या "वह्वीनां पि-

ता"इति इषुधिं प्रयच्छेत्। इषवो धीयन्ते यत्र स इषुधिः। यथेष्टदिगभिमुखगमने "रथे तिष्ठन्"इति जपेत्। सप्तम्या"तीव्राद् घोषान्" इति अश्वाननुमन्त्रयेत। अष्टमीं "रथवाहनम्"इति इषूनवेक्षमाणं राजानं वाचयेत्। ज्यावातपरित्राणं तदुच्यते। तेन नह्यमानमेतां वाचयेत्। सारथिना सारयमाणं राजानं रथे आरूढ "अभीवर्तेन" इति सूक्तं वाचयेत्। प्रयो वामित्यृचौ च। एवं राजानमन्वीक्षेत एतैः सूक्तैः। "आशुः शिशान" इत्यप्रतिरथं सूक्तम्। "शास इत्येति" सूक्तं शासः। सौपर्णसूक्तानां बहुत्वाद्विशेषमाह–प्रधारेति। एतत्सूक्तं सौपर्णं भवति नान्यत्। अथ राजा सर्वदिशो रथेनानुक्रमेण गच्छेत्। यस्यां दिश्यादित्यस्तां दिशमास्थायाहनि चेत्, रात्रौ चेद्यस्यां दिशि शुक्रस्तां दिशं परिगृह्य योधयेद्राजा। नापि प्रत्यादित्यं नापि प्रतिशुक्रमित्यर्थः। उपव्यासयेत्यादौ राजा कर्त्ता। यत्र बाणा इत्यत्र तु पुरोहितः कर्त्ता। संशिष्याद्वा। अथ वा पुरोधा आचक्षीत एतस्मिन् काले इयमृक्तवेति। यथा आत्वा हार्षमन्तरेधीतिसूक्तं पश्चाद्रथस्यावस्थाय ब्रूहि, जीमूतस्येति कवचं गृहाणेत्येवमादि। अध्यायान्तलक्षणार्थं द्विर्वचनमिति।

मनुः,

दण्डव्यूहेन तं मार्गं यायात्तु शकटेन वा।
वराहमकराभ्यां वा सूच्या वा गारुडेन वा॥
यतः शङ्केत भयं ततो विस्तारयेद्बलम्।
पाद्मेन चैव व्यूहेन निवसेत सदा स्वयम्॥
सेनापतिबलाध्यक्षौ सर्वदिक्षु निवेशयेत्।
भयं यतो वा शङ्केत तां प्राचीं कल्पयेद्दिशम्॥

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) २

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) २

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १२

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) ६

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्तः ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्यया ऽवतरणिकया च सहितम् ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... २

(२५) स्फोटचन्द्रिका संग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानवादाधर्यौः प्रत्यक्षानुमानमाथुर्याः व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च स्फोटपत्राणि ... २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिणः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यया सहितः । प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १२

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्मामृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । .. ... २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्णं श्रीसुबोधिनीटिप्पण्योः-प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित १

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता २

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च ।

(४३) याज्ञवल्क्यस्मृतिः। बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता। ४

(४५) शास्त्रदीपिका। श्रीपार्थसारथिमिश्र प्रणीता। रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपादः । २

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्यटीकाद्वयसंवलिता। ६

(४७) व्याकरणसिद्धान्तसुधानिधिः। पर्वतीय विश्वेश्वरसूरिविरचितः। ६

(४८) वीरमित्रोदयः। लक्षणप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः। ६

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः। महेश्वरतीर्थकृतयाल्लघुसंग्रहाख्यया टीकयासमलंकृतः। ४

(५०) वीरमित्रोदयः। राजनीतिप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः। ४

पत्रादिप्रेपणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी।

August 1916.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 224.

# वीरमित्रोदयः ।

राजनीतिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा

संशोधितः ।

VÎRAMITRODAYA,

RAJNITI PRAKÂSA,

BY

MAHÂMAHOPÂDHYÂYA PANDITA MITRA MISRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. VI.

FASCICULUS IV–V

Registered According to Act XXV. of 1867.

PUBLISHED & SOLD BY THE SECRETARY,
CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.
AGENTS:-
OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,
at the Vidya Vilas Press.*
BENARES.

*Price Rupee one.*

॥ श्रीः ॥

—॰—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितसव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२२४

१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्र्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... " " १ " ०

६ मार्गव्ययः पृथग् नास्ति। ... ... ... ... ... ... ...

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला। गोपीनाथभट्टकृता खण्डे ... ... ... ... ७

(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः १०

(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम्। सम्पूर्णम्। १०

(४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २

(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः। महामहोपाध्यायश्रीगागाभट्टविरचिता। तर्कपादः (मीमांसा) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा (मीमांसा) ... २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम्। सम्पूर्णम्। (वेदान्तः) ६

(९) स्याद्वादमञ्जरी मल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्-विशिष्टाद्वैतप्रस्थाननिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्रीश्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् वेदान्तः १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः। आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिमतविभक्तिविस्तृतविचारस्वरूपः म० म० श्रीगिरिधरोपाध्यायविरचितः। सम्पूर्णः (न्यायः) ... ... ... ... ५

(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सम्पूर्णम् (मीमांसा) ... ३

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (मीमांसा) १६

April 1917.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 232.

# वीरमित्रोदयः ।

राजनीतिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा

संशोधितः ।

VÎRAMITRODAYA,

RAJNITI PRAKÂSA

BY

MAHÂMAHOPÂDHÂYA PANDITA MITRA MIŚRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. VI.

FASCICULUS V-६

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.
AGENTS:-
OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO; BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.
*Price Rupee one.*

*Registered According to Act XXV. of 1867.*

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोदितम् ॥ २ ॥

स्तवकः—२३२

१ अस्यां चौखम्बा- संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... ... " " १ " ०

६ आपणव्ययः पृथग् नास्ति । ... ... ... ... ... ...

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्ड ... ... ... ... २
(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १०
(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०
(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) २
(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १
(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः(मीमांसा) २
(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा ( मीमांसा ) २
(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णं । ( वेदान्तः ) ६
(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २
(१०) सिद्धित्रयम्–विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णं( वेदान्तः)१
(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिमतविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ... ५
(१३) विधिरसायनम् । श्रीमप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... ... २
(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १६

गुल्मांश्च स्थापयेदाप्तान् शतसङ्ख्यांस्ततस्ततः ।
स्थाने युद्धे च कुशलानभीरूनविकारिणः ॥ इति ।
शकटादिव्यूहानां लक्षणानि लक्षणप्रकाशे द्रष्टव्यानि ।

**विष्णुधर्मोत्तरे,**

कुञ्जरं वा रथं वाश्वमारुहेदभिमन्त्रितम् ।
आरुह्य शिविराद्राजा विनिष्क्रम्य समे शुभे ॥
देशे त्वदृश्यः शत्रूणां कुर्यात्प्रकृतिकल्पनाम् ।
संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून् ॥
सूचीमुखमनीकं स्यादल्पानां वहुभिः सह ।
व्यूहाः प्राण्यङ्गरूपाश्च द्रव्यरूपाश्च कल्पिताः ॥
गारुडो मकरव्यूहश्चक्रं श्येनस्तथैव च ।
अर्द्धचन्द्रश्च चन्द्रश्च शकटव्यूह एव च ॥
व्यूहश्च सर्वतोभद्रः सूचीव्यूहस्तथैव च ।
पद्मश्च मण्डलव्यूहः प्राधान्येन प्रकीर्त्तिताः ॥
व्यूहानामथ सर्वेषां पञ्चधा सैन्यकल्पना ।
द्वौ पक्षौ बन्धपक्षौ द्वावुरस्थः पञ्चमो भवेत् ॥
एकेन यदि वा द्वाभ्यां भागाभ्यां युद्धमाचरेत् ।
भागत्रयं स्थापयेत्तु तेषां रक्षार्थमेव च ॥
न व्यूहे कल्पना कार्या राज्ञो भवति कर्हिचित् ।

राज्ञो व्यूहे कल्पना, व्यूहरचनामध्ये पक्षादिका या कल्पना तत्तत्प्रदेशावस्थानरूपा सा न कार्या भवति । तत्र हेतुः—

पत्रच्छेदे फलच्छेदे वृक्षश्छेदावकल्पने ।
पुनः प्ररोहमायाति मूलच्छेदे विनश्यति ॥

छेदावकल्पने छेदकरणे ।

१ कृतसंज्ञान् समन्तत इति मुद्रितमतो पाठः ।

स्वयं राज्ञा न योद्धव्यमपि सर्वास्त्रशालिना ।
नित्यं लोके हि दृश्यन्ते शक्तेभ्यः शक्तिमत्तराः ॥
सैन्यस्य पश्चात्तिष्ठेत्तु क्रोशमात्रे महीपतिः ।
भग्नसन्धारणं तत्र योधानां परिकीर्त्तितम् ॥
प्रधानभङ्गे सैन्यस्य नावस्थानं विधीयते ।

तत्र, क्रोशमात्रावस्थिते राज्ञि । युद्धादिना परराष्ट्रग्रहणं राज्ञोऽवश्यकर्त्तव्यमित्याह—

याज्ञवल्क्यः,

य एव धर्मो नृपतेः स्वराष्ट्रपरिपालने ।
तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं नयन् ॥ इति ।

शङ्खलिखितौ, राजक्रतुरेवाश्वमेधस्तं नासार्वभौमः प्रतिपादयितुमर्हति । अश्वमेधेन यक्ष्य इति परविषयमभियायाद्देशकालशक्तिसम्पन्नः प्रभूतयवसेन्धनोदकाविच्छिन्नसाम्परायिकः पथि संविहितसर्वोपकरणो दुर्गासारामात्यदेशदण्डाक्रन्दायगुणविधिज्ञः पर्षदं प्रति नयवान् विदितमध्वानं हितमनुक्रामेत् यथाभूमिभागस्तथा विनियोगः श्रेयान् पानभोजनोपनिवेशस्थानशङ्काप्रतिविधानकुशलो भूपतिरवहितः शत्रुणा सह युद्ध्येत् । इति ।

युद्ध्यता राज्ञा किं कर्त्तव्यमित्यपेक्षायाम्—

**विष्णुधर्मोत्तरे,**

न भग्नान् पीडयेच्छत्रूनेकायनगता हि ते ।
मरणे निश्चिताः सर्वे हन्युः शत्रूंश्चमूरपि ॥
शठा भङ्गच्छलेनापि नयन्ति स्वभुवं परान् ।
तेषां स्वभूमिसंस्थानां वधः स्यात्सुकरस्तदा ॥
न संहतान्न विरलान् योधान् व्यूहे प्रकल्पयेत् ।

आयुधानां तु सम्मर्दो यथा न स्यात्परस्परम् ॥
तथा तु कल्पना कार्या योधानां भृगुनन्दन ।
भेत्तुकामः परानीकं संहतैरेव भेदयेत् ॥
भेदरक्षापरेणापि कर्त्तव्या संहता तथा ॥
स्वेच्छया कल्पयेद्व्यूहं ज्ञात्वा वाऽरिप्रकल्पितम् ।
व्यूहं भेदावहं कुर्याद्रिपुव्यूहस्य पार्थिवः ॥
गजस्य देया रक्षार्थं चत्वारस्तु रथा द्विज ।
रथस्य चाश्वाश्चत्वारश्चत्वारस्तस्य चर्मिणः ॥
चर्मिभिश्च समास्तत्र धन्विनः परिकीर्त्तिताः ।
पुरतश्चर्मिणो देया देयास्तदनु धन्विनः ॥
धन्विनामनु चाश्वीयं रथांस्तदनु योजयेत् ।
रथानां कुञ्जराश्चानु दातव्याः पृथिवीक्षिता ॥
पदातिकुञ्जराश्वानां वर्म कार्यं प्रयत्नतः ।
अवर्मयित्वा यो वाहमात्मानं वर्मयेन्नरः ॥
स राम नरकं याति सुकृतेनापि कर्मणा ।
शूराः प्राङ्मुखतो देया न देया भीरवः क्वचित् ॥
शूरान् वा मुखतो दत्त्वा स्कन्धमात्रप्रदर्शनम् ।
कर्त्तव्यं भीरुसङ्घेन शत्रुविद्रवकारकम् ॥
दारयन्ति पुरस्तात्तु विद्रुता भीरवः पुरः । इति ।

यदि च परबलं दृष्ट्वा शत्रुर्युद्धोपक्रमं न करोति आसनमेव करोति तदा किं कर्त्तव्यमित्यपेक्षायाम्—

मनुः,
उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् ।
दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥
भिन्द्याच्चैव तडागानि प्राकारपरिखास्तथा ।

समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा ॥
उपजप्यानुपजपेद्बुध्येतैव च तत्कृतम् ।
युक्ते च दैवे युद्ध्येत जयप्रेप्सुरपेतभीः ॥
उपजपेत्, भेदं कुर्यात् ।
एवं विजयमानस्य येऽस्य स्युः परिपन्थिनः ।
तानानयेद्वशं सर्वान् सामादिभिरुपक्रमैः ॥
यदि ते तु न तिष्ठेयुरुपायैः प्रथमैस्त्रिभिः ।
दण्डेनाभिप्रसह्यैतांश्छनकैर्वशमानयेत् ॥ इति ।

सामादीनुपायानभिधाय युद्धं गत्यन्तराभाव एव कर्त्तव्यमित्यभिप्रायेणोक्तम्—

श्रीरामायणे,

तत्र साम प्रयोक्तव्यमार्येषु गुणवत्सु च ।
दानं लुब्धेषु भेदश्च शङ्कितेष्विति निश्चयः ॥
दण्डस्तथैव पात्यश्च नित्यकालं दुरात्मसु । इति ।

मनौ,

साम्ना भेदेन दानेन समस्तैरुत वा पृथक् ।
विजेतुं प्रयतेतारीन्न युद्धेन कदाचन ॥
अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः ।
पराजयश्च सङ्ग्रामे तस्माद्युद्धं विवर्जयेत् ॥ इति ।

तथा,

त्रयाणामप्युपायानां पूर्वोक्तानां परिक्षये ।
तथा युद्ध्येत सम्पन्नो विजयेत रिपून् यथा ॥
संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून् ।
सूच्या वज्रेण चैवैतान् व्यूहेन व्यूह्य योधयेत् ॥

युद्ध्येत स्यन्दनाश्वेन समेऽनूपोन्नते द्विपैः ।
वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले ॥
कौरुक्षेत्रांश्च मात्स्यांश्च पाञ्चालांश्शूरसेनजान् ।
दीर्घांल्लघूंश्चैव नरानुग्रानीकेषु योजयेत् ॥
प्रहर्षयेद्बलं व्यूह्य भृशार्तांश्च परीक्षयेत् ।
चेष्टाश्चैव विजानीयादरीन् योधयतामपि ॥ इति ।

मनुः,

समोत्तमाधमै राजा त्वाहूतः समरे परैः ।
न निवर्तेत सङ्ग्रामात्क्षात्रं धर्ममनुस्मरन् ॥
आहवेषु मिथोऽन्योन्यं जिघांसन्तो महीक्षितः ।
युद्ध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥
न कूटैरायुधैर्हन्याद्युद्ध्यमानो रणे रिपून् ।
न कर्णिभिर्नापि दिग्धैर्नाग्निज्वालिततेजनैः ॥
मिथः परस्परं, स्पर्धमाना इतिशेषः । दिग्धैः विषाक्तैः ।

महाभारते,

राज्ञां नियोगाद्योद्धव्यं ब्राह्मणेन विशेषतः । इति ।
राज्ञोऽधिकमित्यनुवृत्तौ–

गौतमः,

सङ्ग्रामे संस्थानमनिवृत्तिश्च । इति ।

देवलः,

प्रजार्थं क्षत्रियो युद्ध्येत्स्वान् प्राणान् सम्परित्यजेत् ।
अश्वमेधफलं कृत्स्नं निसर्गेणाधिगच्छति ॥
शस्त्रेण निहतः सङ्ख्ये द्विपाद्भिरपराङ्मुखः ।

१ स्यन्दनाश्वैः समे युद्ध्येदनूपे नौद्विपैस्तथा । इति मुद्रितमनु पुस्तके पाठः ।

शक्रलोकमवाप्नोति स्ववीर्याद्विजितं शुभम् ॥
आहवेऽभिमुखे शूरं महितानि द्विपद्गणैः ।
भिन्द्युर्यावन्ति शस्त्राणि तावन्तः क्रतवोऽस्य ते ॥
क्षतेभ्यः प्रस्रुतं रक्तं क्षितिपांसुषु संस्पृशेत् ।
स देवलोके तावन्तं कालं तिष्ठति वै ध्रुवम् ॥
नास्ति राज्ञां समरतनुत्यागसदृशो धर्मः ।
गोब्राह्मणमित्रधनरक्षणार्थे मृतास्ते स्वर्गभाजः ॥

याज्ञवल्क्यः,

य आहवेषु युध्यन्ते भूम्यर्थमपराङ्मुखाः ।
अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ॥ इति ।

यमः,

क्षत्रियस्योरसि क्षत्रं पृष्ठे ब्रह्म प्रतिष्ठितम् ।
तस्मात्पृष्ठं रणे रक्षेन्मा भवेद्ब्रह्मघातकः ॥ इति ।
पृष्ठं रणे रक्षेदित्यनेन पलायननिषेधः ।

मनुः,

न च हन्यात्स्थलारूढं न क्लीवं न कृताञ्जलिम् ।
न मुक्तकेशमासीनं न तवास्मीति वादिनम् ॥
न सुप्तं न विसन्नाहं न नग्नं न निरायुधम् ।
नायुध्यमानं पश्यन्तं न परेण समागतम् ॥
नायुधव्यसनं प्राप्तं नार्त्तं नातिपरिक्षतम् ।
न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥ इति ।

बौधायनः,

भीतमत्तोन्मत्तप्रमत्तविसन्नाहस्त्रीबालवृद्धब्राह्मणैर्न युद्ध्येतान्यत्राऽऽततायिनः । इति ।

गौतमः,

न दोषो हिंसायामाहवेऽन्यत्राश्वसारथ्यनायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढदूतगोब्राह्मणवादिभ्यः ।

देवलः,

तृणखादी परमेप्सुरलसः शरणं गतः ।
पण्ढः परार्दितो लिङ्गी स्थविरः पतितः शिशुः ॥
न धर्मयुद्धे हन्तव्या ज्ञेया योधैरनापदि । इति ।

व्यासः,

ये हता निशितैः शस्त्रैः क्षत्रधर्मपरायणाः ।
ते गता ब्रह्मसदनं न मेऽत्रास्ति विचारणा ॥
न यज्ञैर्दक्षिणाभिर्वा न तपोभिर्न विद्यया ।
स्वर्गं यान्ति तथा मर्त्या यथा योधा रणे हताः ॥
न ह्यधर्मोऽस्ति पापीयान् क्षत्रियस्य पलायनात् ।
युद्धाद्धि धर्मः श्रेयान् वै पन्थाः स्वर्गस्य विद्यते ॥ इति ।

आपस्तम्बः,

ब्राह्मणस्वान्यपजिगीषमाणः प्रत्यानेतुमिच्छन् युद्ध्यमानो हतोऽसौ साक्षायजः । इति । (?)

धर्म इत्यर्थः । अत्र व्यासवाक्ये "योधा रणे हता" इति सामान्यत उपादानात् आपस्तम्बवाक्येऽपि "युद्ध्यमानो हत" इत्युपादानात्स्थानापत्त्या क्षत्रियातिरिक्तस्यापि क्षत्रवृत्त्या जीवतो युद्धमरणमत्यन्तं धर्मसाधनं, पलायनं सामर्थ्ये सति गोब्राह्मणादीनामसंरक्षणं चात्यन्तमधर्मसाधनमिति द्रष्टव्यम् ।

आदित्यपुराणे,

शूरस्याग्रे यदा विप्र आर्त्त उत्क्रोशते भृशम् ।
न च तं त्रायते पापाच्छूरो नरकभाग्भवेत् ॥
ब्राह्मणानां गवां चैव रक्षार्थं हन्यते यदि ।

स शूरो जीवितं हित्वा इन्दुलोकं प्रपद्यते ॥ इति ।

याज्ञवल्क्ये,

पदानि क्रतुतुल्यानिभग्नेष्व विनिवर्त्तिनाम् ।
राजा सुकृतमादत्ते हतानां विपलायिनाम् ॥ इति ।

आदित्यपुराणे,

प्रजार्थे निहता ये च राजानो धर्मतत्पराः ।
अग्निविद्युद्धता ये च सिंहव्याघ्रहताश्च ये ॥
प्राप्नुवन्ति च ते सर्वे पुरीमैरावतीमिमाम् ।

निहताः, शस्त्रादिना । अग्निविद्युद्धता इत्यादावपि प्रजार्थे इत्यनुपज्यते ।

मनौ,

यदस्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम् ।
भर्त्ता तत्सर्वमादत्ते पराङ्मुखहतस्य तु ॥ इति ।

आदित्यपुराणे,

सङ्ग्रामे प्रस्थितं भूपं भृत्यस्त्यजति यः क्षणात् ।
स तेन नृपदण्डेन मूढो नरकमृच्छति ॥
जित्वारिं भोगसम्प्राप्तिर्मृतस्य च परा गतिः ।
निष्कृतिः स्वामिपिण्डस्य नास्ति युद्धसमा गतिः ॥
शूराणां यद्विनिर्याति रक्तमाधावतां क्वचित् ।
तेनैव सह पाप्मानं सर्वं त्यजति वै मुने ॥
तथा व्रणचिकित्सायां वेदनां सहते तु याम् ।
ततो नास्त्यधिकं लोके तपः परमदारुणम् ॥
मृतस्य नास्ति संस्कारो नाशौचं नोदकक्रिया ।
कर्त्तुमिच्छति यस्येह सङ्ग्रामादधिकं हि किम् ॥
वराप्सरःसहस्राणि शूरमायोधने हतम् ।

अभिद्रवन्ति कामार्त्ता मम भर्त्ता भविष्यति ॥
यः सहायान् परित्यज्य स्वस्थः सन् गन्तुमिच्छति।
असून् हि तस्य कृन्तन्ति देवाः शक्रपुरोगमाः ॥ इति।
तथा,
तोषयित्वा नृपं युद्धे राज्ञां हत्वाग्रतः स्थितम्।
जित्वा न हरति द्रव्यं स नरः स्वर्गमाश्रितः ॥
गृह्णाति यदि राष्ट्राणि यदा न हरते धनम्।
यदि वध्येत तत्रैव स नरः स्वर्गमाश्रितः ॥
युद्धार्जितं यत् तत्किं कर्त्तव्यमित्यपेक्षायाम्—
मनुः,
रथाश्वं हस्तिनं छत्रं धनं धान्यं पशून्स्त्रियः।
सर्वद्रव्याणि कुप्यं च यो यज्जयति तस्य तत् ॥
राज्ञश्च दद्युरुद्धारमित्येषा वैदिकी श्रुतिः।
राज्ञा च सर्वयोधेभ्यो दातव्यमपृथग्जितम् ॥

सर्वद्रव्याणि, वस्त्रादीनि। कुप्यं, सुवर्णरजतान्यताम्रादि। अपृथग्जितं, योधैः सह सम्भूय जितम्। अत एव गौतमेन पृथग्जिते वाहनादौ च विशेष उक्तः—

जेता लभेत साङ्ग्रामिकं वित्तं वाहनं तु राज्ञो योद्धृंश्च पृथग्जये यथार्हं सभाजयेद्राजा। इति।

पृथग्जये, स्वयमेकाकिनैवार्जिते वित्ते। योद्धॄन् यथार्हम्, यथोचितं पूर्वकृतमानसत्कारादिकमपेक्ष्य। सभाजयेत् पूजयेत्। पूर्वशत्रुविजयानन्तरं राज्ञः कर्त्तव्यमुक्तम्—

मनुना,
जित्वा सम्पूजयेद्देवान् ब्राह्मणांश्चैव धार्मिकान्।
प्रदद्यात्परिहारांश्च ख्यापयेदभयानि च ॥

सर्वेषां तु विदित्वैषां सममेव चिकीर्षितम् ।
स्थापयेत्तत्र तद्वंश्यं कुर्याच्च समयक्रियाम् ॥
प्रमाणानि च कुर्वीत तेषां धर्मान् यथोदितान् ।
रत्नैश्च पूजयेदेनं प्रधानपुरुषैः सह ॥
आदानमप्रियकरं दानं च प्रियकारकम् ।
अभीप्सितानामर्थानां कालयुक्तं प्रशस्यते ॥

जित्वा, परराष्ट्रं जित्वा । देवान्,धार्मिकान्,ब्राह्मणांश्च, तद्देशवासिन इति शेषः । सम्पूजयेत्, यथार्हं भूमिसुवर्णदानमानादिभिः सत्कुर्यात् । परिहारान्, न मया लोभाद्यानिष्टेनास्य जयः कृतः किन्त्वयमस्मानेवमेवमपकृतवांस्ततोऽस्य मया जयः कृत इत्यादीनि स्वनिरपराधताख्यापनानि । यद्वा । परिहारान्, दानानि, लब्धं च सुवर्णादिकं मया ब्राह्मणसात्कृतमित्यादिकांश्च । तथा स्वामिदृढभक्त्यैर्यैर्ममापकृतं तेषामपराधा मया क्षान्ताः स्वस्वव्यापारमनुतिष्ठन्त्वित्यभयं च ख्यापयेत् । तदाह—

याज्ञवल्क्यः,

नातः परतरो धर्मो नृपाणां यद्रणार्जितम् ।
विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा ॥ इति ।

एषां सर्वेषां,परकीयामात्यादीनाम् । चिकीर्षितम्,अभिप्रायम् । समं,तुल्यम् । विदित्वा,ज्ञात्वा ।तद्वंश्यं,सङ्ग्रामहतस्य राज्ञो वंशे भवम् । स्थापयेत्, तत्पदेऽभिषिञ्चेत् । समयक्रियाम्, इतः परं त्वयाऽस्मास्वेवं दिशा वर्त्तितव्यमितिसमयबन्धम् । तेषाम्, परेषां राज्ञाम् । यथोदितान्, यथाकुलक्रमागतान् । धर्मान्,आचारान् । प्रमाणानि कुर्वीत,शपथरूपत्वेन कारयेत् । यदि त्वमस्मात्समयबन्धाच्च्युतो भवसि तदास्मात्कुलक्रमागताद्धर्माच्च्युतो भविष्यसीति शपथान् कारयेदित्यर्थः । अथ वा । तेषां पूर्वेषां राज्ञां, यथोदितान्

यथाकृतान्, धर्मान् प्रजारक्षणप्रकारान् ब्राह्मणामात्यप्रभृतिभ्यो वृत्तिदानानि च, प्रमाणानि अविप्लाव्यानि, कुर्वीत कारयेत्। अभीप्सितानाम्, रणहतराजवंश्यस्य राज्ञस्तदमात्यानां चापेक्षितानाम्। अर्थानां द्रव्याणाम्। आदानं ग्रहणम्। अप्रियकरम् अनिष्टकरम्। दानं च प्रियकारकं, तेषामिष्टकारकम्। यतोऽवश्यापेक्षितगजाश्वादिधनलाभे राजान्तरैरनाक्रमणीयत्वं संम्भवति, अत एव तत् कालयुक्तं नवीनराज्यलाभकाले युक्तमतः प्रशस्यते।

विष्णुः,

राजा परपुरप्राप्तौ तत्कुलीनमभिषेचयेत् न राजकुलमुच्छिन्द्यात् अन्यत्राकुलीनराजकुलात्। इति।

कात्यायनः,

दुष्टस्यापि नरेन्द्रस्य तद्राष्ट्रं न विनाशयेत्।
न प्रजानुमतो यस्मादन्यायेषु प्रवर्त्तते॥ इति।

राज्ञोऽन्यायप्रवृत्तौ यतः प्रजानामनुमतिर्नेत्यतो राष्ट्रं न पीडयेदितिसिद्धे येषाममात्यादीनामनुमत्याऽन्याये प्रवृत्तिस्तान् पीडयेदेवेति ध्येयम्। यदा च परराष्ट्रं वशे कृतं तदा तद्देशाचारादीन् न लङ्घयेदित्याह—

याज्ञवल्क्यः,

यस्मिन् देशे य आचारो व्यवहारः कुलस्थितिः।
तथैव परिपाल्योऽसौ यदा वशमुपागतः॥ इति।

यातव्यः शत्रुर्यदि युद्धं करोति तदा तं हत्वा जित्वा वा तत्पदे तद्वंश्यमभिषिञ्चेदित्युक्तम्। यदि च स विजिगीषुं प्रबलं निर्णीय युद्धोपस्थितावपि सन्धिं करोति तदा—

पुष्पैरपि न योद्धव्यं किं पुनर्निशितैः शरैः ।

इति-महाभारतोक्तेरवश्यं सन्धिरेव कार्यो न पुनर्विग्रहः । तदुक्तम्—

मनुना,

सह वापि व्रजेद्युक्तः सन्धिं कृत्वा प्रयत्नतः ।
मित्रं हिरण्यं भूमिं वा सम्पश्यंस्त्रिविधं फलम् ॥
पार्ष्णिग्राहं च सम्प्रेक्ष्य तथाऽऽक्रन्दं च मण्डले ।
मित्रादथाप्यमित्राद्वा यात्राफलवाप्नुयात् ॥ इति ।

वाशब्दः पूर्वोक्तयुद्धविकल्पार्थः । प्रयत्नतो युक्तः, यातव्येन प्रयत्नेन दूतप्रेषणादिना युक्तो योगं प्राप्तः सन् । सह, तेन शत्रुणा सह । मित्रं हिरण्यं भूमिं वा त्रिविधं यत्फलं,तत् सम्पश्यन्,समीचीनमिति जानानः ।तदन्यतरलाभे सन्धिं कृत्वा,व्रजेत्, स्वपुरं यायात् । मण्डले द्वादशारिमण्डले । पार्ष्णिग्राहं, विजिगीषोः पुरतः स्थितो यातव्यः, पश्चात्स्थितः स्वशत्रुः, स्वभूम्यनन्तरः पार्ष्णिग्राह इत्युच्यते तम् । तथा तत्पश्चादवस्थितं तद्भूम्यनन्तरं स्वभिन्नमाक्रन्दसंज्ञकं च । सम्प्रेक्ष्य, तद्बलाबलं ज्ञात्वेत्यर्थः । मित्रात्, मित्रत्वं प्राप्तात् यातव्यात्, अथ वा अमित्रात्, मैत्रीमकुर्वतो यातव्यात्, अर्थाद्विजिगीषुः यात्रायाः फलं, शत्रुजयं, सन्धौ वा मित्रादित्रितयलाभान्यतरत्, अवाप्नुयात् प्राप्नुयात् ।

विष्णुः,

परेणाभियुक्तश्च सर्वात्मना राष्ट्रं गोपायेत्सर्वतश्चात्मानं गोपायेत् । इति ।

मनुः,

क्षेमां सस्यप्रदां नित्यं पशुवृद्धिकरीमपि ।

परित्यजेन्नृपो भूमिमात्मार्थमविचारयन् ॥
आपदर्थं धनं रक्षेद्दारा रक्ष्या धनैरपि ।
आत्मानं सर्वतो रक्षेद्दारैरपि धनैरपि ॥
सह सर्वाः समुत्पन्नाः प्रसमीक्ष्यापदो भृशम् ।
संयुक्तांश्च वियुक्तांश्च सर्वोपायान्नयेद्बुधः ॥

संयुक्तान् समुदितान् । वियुक्तान्, पृथक्पृथग्भूतान् । नयेत् प्रयोजयेत् ।

उपेतारमुपेयं च सर्वोपायांश्च कृत्स्नशः ।
एतत्त्रयं समाश्रित्य प्रयतेतात्मसिद्धये ॥ इति ।

उपेतारम्, उपयोक्तारमात्मानम् । उपेयम्, उपायसाध्यं शत्रुम् ।

इति यात्राप्रकरणम् ।

अथ युद्धार्थं प्रस्थितस्य राज्ञः परदेशे चातुर्मास्ये प्राप्ते किं कर्त्तव्यमित्यपेक्षायाम्—

विष्णुधर्मोत्तरे,

राम उवाच ।

कथं हि चतुरो मासान् कार्यं केशवपूजनम् ।
पार्थिवेन सुरश्रेष्ठ तन्ममाचक्ष्व पृच्छतः ॥

पुष्कर उवाच ।

उद्युक्तेन सदा भाव्यं राज्ञा भृगुकुलोद्वह ।
आपाढशुक्लपक्षान्तं राजा स्थानमुपाश्रयेत् ॥

आपढशुक्लपक्षः अन्ते यत्र क्रियायाम् । आपाढशुक्लपक्षपर्यन्तं राज्ञा उद्युक्तेन परराष्ट्रग्रहणोद्योगवता भाव्यमित्यर्थः । तदनन्तरं स्थानं चातुर्मास्यावस्थानयोग्यं स्थलमुपाश्रयेत् । अत

१ त्यजेत इति मुद्रितमनुपाठः ।

एवं तस्य स्थानस्याग्रे योग्यताकथनम् "अधृष्यम्" इत्यादिना कृतम् ।

अधृष्यं परराष्ट्राणां प्रभूतयवसेन्धनम् ।
तमोऽपेतं विपङ्कं च प्रावृट्कालाऽहतं तथा ॥

तमोऽपेतमित्यनेन सतमसां दर्यादीनां निषेधः । प्रावृट्कालाहतमित्यनेन निम्नप्रदेशनिषेधः । तत्र प्रावृट्काले जलागमने दूष्यादीनामनवस्थाने ऽवस्थातुमशक्यत्वात् ।

यत्रोष्य च स्वं विषयं सर्वं शक्नोति रक्षितुम् ।
तत्रस्थश्चतुरो मासान् गजाश्वान् पोषयेन्नृपः ॥
स्नेहपानैर्बहुविधैः प्रतिपानैश्च भार्गव ।

प्रतिपानैः, स्नेहातिपानकृतरोगादिनिवृत्त्यर्थं कृतै रूक्षीकरणकषायपानैः । अथ वा । स्नेहपानप्रतिपानशब्दाभ्यां पूर्वोत्तरवस्ती गृह्येते, ते च वैद्यकशास्त्रे प्रसिद्धे ।

आषाढशुक्लपक्षान्ते दशम्यूर्ध्वं नराधिपः ।
उत्सवं सुमहत्कुर्याद्देवानामर्चने रतः ॥
अर्चायां वा पटे वापि कृतं देवमथार्चयेत् ।

अर्चायां प्रतिमायाम् ।

देवभोगमयं विष्णुं श्रीसहायमरिन्दमम् ।
बलिभिर्विविधाभिस्तु पुष्पैर्धूपैः सुगन्धिभिः ॥
उत्सवं सुमहत्कुर्यात्ततः पश्चाद्दिनं नृपः ।
ततः प्रभृति नित्यं स्याद्वासुदेवस्य चार्चनम् ॥
सात्वतैर्भार्गवश्रेष्ठ सांवत्सरपुरोहितैः ।
गीतनृत्यैस्तथा देवं विशेषेणात्र पूजयेत् ॥
अस्मिन्नेव तथा काले कोटिहोमं समाचरेत् ।
कार्त्तिक्यां तत्समाप्तिस्तु यथा भवति भार्गव ॥

शुक्लपक्षत्रिभागेऽन्त्ये कार्त्तिकस्य ततो नृपः ।
उत्सवं सुमहत्कुर्यात्तेव देवार्चनं तथा ॥
वैकुण्ठं पूजयेद्देवमर्चायामथ वा पटे ।
महादानं ततो दद्यात्प्रेङ्खां दद्यात्तथैव च ॥

प्रेङ्खा दोला । "दोला प्रेङ्खादिका स्त्रियाम्" इत्यमरः । दोलायात्रां कुर्यादित्यर्थः ।

मल्लानामथ वेश्यानां वन्दिनां नर्त्तकैः सह ।

दद्यादिति शेषः ।

यात्राविधानं सकलं तदा कुर्यान्महीपतिः ।
एतत् कृत्वा ततो यात्रा कार्या भवति पार्थिवैः ॥
शरत्काले गतातङ्कैः पुष्टाश्वरथकुञ्जरैः ।
एवं हि राज्ञा चतुरोऽपि मासान् पूज्यो भवेद्देववरोऽरिहन्ता ।
सन्त्यक्तनिद्रं मधुसूदनं च सम्पूज्य यात्राभिमतप्रदा स्यात् ॥

इति विष्णुधर्मोत्तरे चातुर्मास्ये कृतयात्रस्य राज्ञोऽवस्थानविष्णुपूजनविधिः ।

अथ सामान्यतस्तिथिविशेषमासविशेषविहितो देवताविशेषपूजनविधिः ।

विष्णुधर्मोत्तरे,

पूजयेच्चतुरो मासान् सुप्तं मधुनिषूदनम् ।
प्रोष्ठपादामले पक्षे पूजयेच्च शतक्रतुम् ॥

प्रोष्ठपादो भाद्रपदः ।

नवम्यामाश्वयुक्शुक्ले भद्रकालीं तु पूजयेत् ।
रवौ स्वातिमनुप्राप्ते कुर्यान्नीराजनं तथा ॥
सम्वत्सरात्कोटिहोमं कुर्याच्च घृतकम्बलम् ।
राज्यसंवत्सरग्रन्थ्योः कुर्याच्चदुडुपूजनम् ॥

प्रौष्ठपादामले पक्षे शतुक्रतुपूजाभिहिता सा च तत्पक्षीयाया-मष्टम्यामिन्द्रध्वजोच्छ्रायदिने कर्तव्येत्यभिधास्यते । एवं भद्रका-लीपूजानीराजनघृतकम्बला अग्रेऽभिधास्यन्ते । राज्येति । रा-ज्याभिषेकनक्षत्रपूजनं राज्ञो जन्मदिनविहितसंवत्सरग्रन्थिन-क्षत्रपूजनं च प्रतिसंवत्सरं कुर्यादित्यर्थः ।

कर्माण्यथैतानि नराधिपस्य नित्यानि ते राम मयोदितानि ।
एतानि कृत्वा विधिवन्नरेन्द्रश्चिरं समग्रां वसुधां प्रशास्ति ॥

इति विष्णुधर्मोत्तरोक्तस्तिथिविशेषमासविशेष-विहितो देवताविशेषपूजादिविधिः ।

अथ तिथिविशेषे मासविशेषे च विहिता ब्रह्म-पुराणोक्ता देवयात्रा ।

वैशाखादिषु मासेषु षट्सु देवगृहेषु च ।
यात्रोत्सवः सदा कार्यः प्रतिसंवत्सरेष्वपि ॥
कार्या च ब्रह्मणे यात्रा प्रतिपद्यपि सर्वदा ।
द्वितीयायां च देवेभ्यो विद्यारम्भे महोत्सवे ॥
भागीरथ्यै तृतीयायां कर्त्तव्या च सुशोभना ।
विनायकाय नागेभ्यश्चतुर्थ्यामथ कारयेत् ॥
स्कन्दाय षष्ठ्यां सप्तम्यां सूर्येभ्यश्च यथाक्रमम् ।
पुरन्दराय चाष्टम्यां रुद्राय सगणाय च ॥
दुर्गाभ्यश्चैव मातृभ्यो नवम्यामथ सर्वदा ।
भूम्यै दशम्यां कर्त्तव्या सर्वोपकरणान्विता ॥
एकादश्यां समासेन विधात्रे विश्वकर्मणे ।
द्वादश्यां विष्णवे कार्या सायुधाय महात्मने ॥
त्रयोदश्यां तु कामाय चतुर्दश्यां कपर्दिने ।
पौर्णमास्यां तु देवेभ्यस्तथा चन्द्रमसे तथा ॥

अमावास्यायां तु पर्वान्ते पितृभ्यश्चात्र कुत्रचित्।
चतुर्दश्यां चतुर्थ्यां वा पितृराजे यमे तथा॥
द्वादश्यां पौर्णमास्यां वा नागेभ्यः पञ्चमेऽहनि।
नारायणाय सर्वासु कार्या तिथिषु सर्वदा॥
यात्रां च कर्तुकामेन प्रारम्भे तु दिने दिने।
विनायकाय पूजा च कर्त्तव्या मोदकोत्करैः॥
द्वितीयेऽहनि कर्त्तव्या ग्रहशान्तिर्यथाक्रमम्।
गन्धर्वेभ्यस्तथा पूजा चतुर्थेऽहनि शास्त्रवित्॥
पञ्चमे स्थाननागाय पयसा पायसेन च।
षष्ठे देयं ब्राह्मणेभ्यो भोजनं च सदक्षिणम्॥
स्नपनं सप्तमे कार्यं देशं कृत्वा सुरक्षितम्।
सुधावदातं कर्त्तव्यं चित्रितं देवतागृहम्॥
रङ्गस्थानं तु देवेभ्यो विहितं कारयेत्तथा।
स्रग्वस्त्रमाल्यहेमाद्यैः प्रधानं देवमर्चयेत्॥
ततोऽर्चास्नपनं कार्यं कल्पशास्त्रक्रमेण च।
पुण्याहगीतनृत्याद्यैर्होमैर्बल्युपहारकैः॥
ततोऽर्चास्नपनस्यान्ते पौरैर्वृद्धपुरःसरैः।
आनेतव्यं च महता विभवेनोदकं शुभम्॥
नित्यं सन्निहितार्चार्थाद्यथाप्राप्तैर्घटैर्नवैः।
देशकालानुसारेण गजाश्ववृषमानवैः॥
तेनोदकेन प्रतिमा स्नाप्या भूमौ च शास्त्रवित्।
नटभूमिश्च कर्त्तव्या सर्वदोषविवर्जिता॥
प्राप्ते तु यात्रादिवसे कूटागारं तु कारयेत्।
पुष्पैर्माल्यैस्तथा वस्त्रैः पताकाभिश्च शोभितम्॥
घण्टासहस्रनिनदं सर्वशोभासमन्वितम्।

आरोप्या प्रतिमा तत्र सुसूक्ष्मा च सुशोभना ॥
कूटागारं च वोढव्यं गर्जरवैर्नरर्षभैः ।
देशकालानुसारेण वस्त्रमाल्याद्यलङ्कृतैः ॥
सबलेनानुगन्तव्यं राज्ञा देवस्य पृष्ठतः ।
सुदूरे चानुगन्तव्यं तत्प्रयुक्तैश्च मन्त्रिभिः ॥
यस्य यस्य समीपे तु स देवो याति पूजितः ।
तेनातिथ्यं च कर्त्तव्यं तस्य धूपादिभिस्तथा ॥
क्ष्वेडितोत्कृष्टशब्दैश्च जयवाद्यस्वनेन च ।
यथागमं च कर्त्तव्यं नगरे च प्रदक्षिणम् ॥
ततो देवगृहं प्राप्य सम्पूज्य प्रतिमां नयेत् ।
महान्तमुत्सवं कुर्वन् गीतनृत्तसमाकुलम् ॥
तस्यां रात्रौ ततो देया दीपाः शतसहस्रशः ।
रङ्गभूमौ दिदृक्षूणां प्रकाशार्थं महात्मनः ॥
तैस्तैः सुभाषितैः श्लोकैर्हर्षयित्वा जनांस्तथा ।
सर्वेषामनुकम्पार्थं धर्मचक्रं प्रवर्त्तयेत् ॥
रङ्गोपजीविनां पश्येत् तृतीयेऽहनि कौशलम् ।
यथाशक्ति धनं तेभ्यो दद्याद्दम्भं च वर्जयेत् ॥
प्रेक्षाकाले प्रधानास्ते पूजितव्याः क्रमेण तु ।
सम्मानपूर्वं विधिवत्ताम्बूलकुसुमादिभिः ॥
यात्रावसाने भूतानि पूजनीयानि सर्वदा ।
पूजोपचारैर्बलिभिस्तथा नक्तञ्चरानपि ॥
अदृष्टविग्रहानेव दिदृक्षूणां महोत्सवम् ।
सन्ध्यायां परया भक्त्या त्यक्त्वा सन्देहमात्मनः ॥
सर्वमस्तीति विज्ञाय चेतसा निर्मलेन च ।
एकान्ते देवताः पूज्या वैशाखे मासि पूर्ववत् ॥

गृहे गृहस्थैः सम्पूज्याः स्त्रियश्च गृहदेवताः ।
आचारान् पालयेदेतान् यस्तु राजा समाहितः ॥
सपुत्रपौत्रसंयुक्तो दीर्घायुर्धनवान् भवेत् ।
सर्वत्र जयमाप्नोति याति स्वर्गे च शाश्वतम् ॥
यदेनं कृष्णवं वाक्यं देशेऽस्मिन् लङ्घ्यते जनैः ।
तदा सस्यानि नश्यन्ति घोरैरुदकविप्लवैः ॥
अतिवृष्टिरनावृष्टिर्दुर्भिक्षं च तथा मृतिः ।
दम्भाभिमानलोभांस्तु तस्मात्त्यक्त्वा प्रयत्नतः ॥
यदुक्तं विष्णुना वाक्यं तत्कुर्यात्कृतनिश्चयः । इति ।

इति ब्रह्मपुराणोक्तदेवयात्राप्रकरणम् ।

## अथ कौमुदीमहोत्सवः ।

तत्र स्कन्दपुराणे,

प्रातः प्रभृति राजा च आज्ञापयति कौमुदीम् ।
देवरात्रिं च देवस्य रुद्रस्यासुरनाशिनीम् ॥
सुसंमृष्टोपलिप्ताभी रथ्याभिः क्रियतां पुरम् ।
वासोभिः संहतैः सर्वे भवन्तु पुरवासिनः ॥
स्रग्विणश्च शिरःस्नाताः सदाम्पत्या यथाक्रमम् ।
गायन्तु गायनाश्चैव नृत्यन्तु नटनर्तकाः ॥
उच्छ्रीयन्तां पताकाश्च गृहवीथ्यापणेषु च ।
गृहाणि चोपलिप्तानि नित्यमेव भवन्तु वः ॥
पुष्पप्रकरतुष्टानि धूपैर्नानाविधैरपि ।
स्रग्दामवन्ति सर्वाणि वनमालाकुलानि च ॥
ब्राह्मणाश्चैव भोज्यन्तां क्रियन्तां बलयस्तथा ।
ब्रह्मघोषश्च सर्वत्र पुण्याहोदीरणानि च ॥

दीपा रात्रौ च सर्वत्र राजमार्गे गृहेषु च ।
अनन्तराः क्रियन्तां वै प्रचुरं स्नेहवर्त्तयः ॥
तरुणाः सह योषिद्भिः समन्तात्पर्यटन्तु च ।
रममाणा हसन्तश्च गायन्तो नृत्तसेविनः ॥
भाण्डवाद्यानि वाद्यन्तां नृत्यन्तां दिव्ययोषितः ।
महादेवस्य पूजां च गन्धपुष्पादिकीं शुभाम् ॥
उपहारांश्च विविधान् शयनानि महान्ति च ।
वलयः पुष्कलाश्चैव भक्ष्यभोज्यैरलङ्कृताः ॥
दीपांश्च विविधाकारान् पानानि कृशरांस्तथा ।
फलानि च विचित्राणि मांसं पक्वं तथाऽऽमकम् ॥
सुवर्णमणिचित्राणि ईश्वराय प्रयच्छत ।
वध्यन्तां पशवश्चात्र भोज्यन्तां च द्विजोत्तमाः ॥
यो न कुर्यादिदं सर्वं पुरवासी नरः क्वचित् ।
पातयेत्तस्य शारीरं दण्डं राजा महायशाः ॥
राजापि संयतः शान्तः शुचिः प्रयतमानसः ।
दिवसे दिवसे रुद्रं स्नापयेत प्रयत्नवान् ॥
पञ्चगव्येन शुद्धेन तैलेन च सुगन्धिना ।
क्षीरेण सर्पिषा दध्ना रसैश्च बहुभिः शुभैः ॥
पुष्पैः फलैश्च बीजैश्च रत्नैश्चाद्भिः समन्वितैः ।
भस्मना गन्धयुक्तेन उदकेन सुगन्धिना ॥
एकैकशः स्वयं राजा घटानां दशभिः शतैः ।
दिवसे दिवसे व्यास त्र्यम्बकं सोऽभिषेचयेत् ॥
गन्धैः पुष्पैश्च धूपैश्च जाप्यैर्बलिभिरेव च ।
पूजयित्वा ततो राजा विप्रानन्यांश्च भोजयेत् ॥
सत्कृत्वा पशुभिर्मेध्यैर्वस्त्रैर्मणिभिरेव च ।

बलिवस्त्रान्नदानेन स्तूयमानो गृहान्व्रजेत् ॥ इति ।

इति कौमुदीमहोत्सवः ।

अथेन्द्रध्वजोच्छ्रायविधिः ।

तत्र देवीपुराणे,

शुभे ऋक्षेऽथ करणे मुहूर्ते शुभमङ्गले ।
दैवज्ञः सूत्रधारश्च वनं गच्छेत् सहायवान् ॥
देवीप्रतिष्ठाविधिना यात्रायां यः प्रचोदितः ।
गत्वाऽन्विष्य शुभं वृक्षं प्रियङ्गुं धवमर्जुनम् ॥
उदुम्बमजकर्णं च पञ्चैतान् शोभनान्हरेत् ।
उदुम्बम्, उदुम्बरम् ।
ध्वजार्थे वर्जयेद्वत्स देवतोद्यानजान् द्रुमान् ॥
कन्यामध्योत्तमा यष्टीः करमानेन कल्पयेत् ।
एकादशकरा वत्स नवपञ्चकराऽपरा ॥
कन्या कनीयसी ।
आनिबद्धां कृमिचितां तथा पक्षिनिकेतनम् ।
अनिबद्धां, लतादिभिरवेष्टिताम् ।
वल्मीकपित्र्यवनजां सुशुष्कां च सकोटराम् ॥
पित्र्यवनजां, श्मसानोत्पन्नाम् ।
कुब्जां च घटसंसिक्तां तथा स्त्रीनामगर्हिताम् ।
विद्युद्वज्रहतां चैव दग्धां च परिवर्जयेत् ॥
अलाभे चन्दनं चाम्रशालशाकमयं तथा ।
कर्त्तव्यं शक्रचिह्नार्थे न चान्यद्वृक्षजं क्वचित् ॥
शुभभूमिभवं ग्राह्यं शुभतोयं शुभावहम् ।
शुभतोयं, शुभतोयोत्पन्नम् ।

ततः सम्पूजयेद्वृक्षं प्राङ्मुखोदङ्मुखोऽपि वा ।
नमो वृक्षपते वृक्ष त्वामर्चयति पार्थिवः ॥
ध्वजार्थमन्यथा नेदं तत्त्वया उपगम्यताम् ।
रात्रौ देयो वलिः श्वभ्रे दिक्षु वृक्षे तथैव च ॥
वासं वने महावृक्ष कृत्वा ह्यन्यत्र गम्यताम् ।
ध्वजार्थे देवराजस्य रक्षितं त्वां नयाम्यहम् ॥
पूजयित्वा ततो वृक्षं वलिं भूम्यां प्रदापयेत् ।
प्रभाते छेदयेद्वृक्षं शुभस्वप्नादिदर्शनैः ॥
उदङ्मुखः प्राङ्मुखो वा मध्वक्तेनाथ पर्शुना ।
पूर्वोत्तरं पतन् शस्तो निःशब्दो निर्व्रणः शुभः ॥
अलग्नः पादपेऽन्यस्मिन्नन्यथा तु परित्यजेत् ।
अष्टाङ्गुलं त्यजेन्मूलमग्रं तत्र जले क्षिपेत् ॥
तथा तं चानयेद्वत्स शकटेन वृषैरथ ।
युवभिर्बलसम्पन्नैः प्रयत्नात्पुरतः पुरम् ॥
नीयमाना यदा यष्टिः समा वा चतुरस्रिका ।
वृत्ता वा भङ्गमादत्ते राजपुत्रपुरोहितौ ॥
पीड्येते इति शेषः ।
आराभङ्गे बलं भिन्द्यान्नेम्या भङ्गे क्षयस्तथा ।
रथस्य त्वक्षभङ्गे तु शान्तिं तत्र तु कारयेत् ॥
इन्द्रं यच्छेतिमन्त्रेण जातवेदोमयेन वा ।
तथा नीत्वा शुभे लग्ने पुरे तामुपवेशयेत् ॥
द्वारे शोभां पुरे रथ्याहट्टेष्वपि च कारयेत् ।
पटुभिः पटहानिनादैर्वेश्यासङ्घस्य मङ्गलैः ॥
द्विजानां वेदशब्दैश्च तां नयेद्यत्र चोच्छ्रयेत् ।
तत्रस्थां चित्रकर्मारानिर्मितैस्तां तु वेष्टयेत् ॥

वस्त्रैस्तदेव कृत्तोनैः शुभैः सूक्ष्मैर्यथाक्रमम् ।
नन्दोपनन्दसंज्ञाश्च कुमार्यः प्रथमांशके ॥
प्रथमांशके, प्रथमभागे ।
देव्यो जायाविजायाख्याः षोडशांशैर्व्यवस्थिताः ।
अम्बिकां शत्रुजरित्रीं नत्वाथ ध्वजदैवतम् ॥
ध्वजस्य परिमाणे ताः सम्पाद्यैव विनिर्दिशेत् ।
षोडशांशविहीनानि कुर्याच्छेषाणि बुद्धिमान् ॥
वाससां चित्रवर्णानां स्वयम्भूः प्रथमामदात् ।
सुरक्तां चतुरस्रां च विश्वकर्मा द्वितीयकम् ॥
अष्टास्रिं च स्वयं शक्रो नीलरक्तामदात्पुरा ।
कृष्णं यमेन दत्तं च वरुणेन महांशुकम् ॥
माञ्जिष्ठं जलजाकारं वायुर्देवोऽपि षष्ठकम् ।
नीलवर्णं च तस्मादात्स्कन्दो बहुविचित्रितम् ॥
वृत्तं तु दहनः प्रादात्सुवर्णं तच्च अष्टमम् ।
वैडूर्यसदृशं चेन्द्रो ग्रैवेयं पुनरप्यदात् ॥
चक्राङ्काकृतिवत्सूर्यो विश्वेदेवास्तु पत्रकम् ।
नीलं नीलोत्पलाभासमृषयोऽपि च तद्ददुः ॥
शुक्रेण गुरुणा न्यस्तं विशालं तच्च मूर्द्धनि ।
ग्रहैरपि विचित्राणि तानि दत्तानि मातृभिः ॥
यद्यद्येनैव दत्तं तु केतोस्तत्तस्य भूषणम् ।
तद्दैवं तद्विजानीयान्मन्त्रादिभिरथोच्छ्रयेत् ॥
कर्षन्ती प्रवरां भूमिं यष्टी राष्ट्रं निहन्ति च ।
बालानां तलशब्देन देशघातं विनिर्दिशेत् ॥
नृपघातकरी शीर्णा सर्वशान्ता शुभावहा ।
शम्भुसूर्ययमेन्द्रेन्दुधनदानां च वारुणैः ॥

वह्नेर्नागस्य मन्त्रैश्च होतव्या दधि चाक्षताः ।
शुक्रं स्कन्दं गुरुं रुद्रमप्सरोभिः प्रपाठयेत् ॥
हुत्वा च विधिवद्वह्निं ज्वाला लक्षेच बुद्धिमान् ।
सुतेजाः सुमनोदीप्ता महती रविसप्रभा ॥
रक्ताशोकसमाकारा रथभेरीस्वना शुभा ।
शङ्खदुन्दुभिमेघानां नादाः शस्तास्तु पावके ॥
कदलीष्विक्षुदण्डेषु पताकाश्च समुच्छ्रयेत् ।
अन्याश्च विविधाः शोभाः शक्रकेतौ समुच्छ्रयेत् ॥
प्रौष्ठपद्यामथाष्टम्यां शुक्लायां शोभने दिने ।
आश्विने चाथ शुक्लायां श्रवणेनाथ उच्छ्रयेत् ॥
अत्रापि शुक्लायामष्टम्यामितिद्रष्टव्यम् ।
घोषैश्च नटवृन्दैश्च पटुभेरीनिनादितम् ॥
वितानध्वजशोभाढ्यं पताकाभिः समुज्ज्वलम् ।
विष्ण्वीशशक्रमन्त्रेण सिंहरक्षाकृतेन च ॥
दृढमातृकरन्ध्रस्थं शुभतोरणमार्गणम् ।
अवलम्बितमुत्तानयभग्नपीठकं समम् ॥
न द्रुतं च समुत्थाप्यः केतुर्वासवजो विभो ।
उच्छ्रितं रक्षयेत्प्राज्ञः काकोलूककपोतयोः ॥
न तत्र लङ्घनं दद्यादन्येषामपि पक्षिणाम् ।
यन्त्रेण चोच्छ्रयं कुर्यादिन्द्रकेतोर्यथाविधि ॥
यथा सुसंस्कृतं पूज्यं सुखयन्त्रसुयन्त्रितम् ।
रात्रौ जागरणं कुर्यादिन्द्रमन्त्रानुकीर्त्तनम् ॥
पुरोहितः सदैवज्ञः शुभशान्तिरतः सदा ।
केतुपातो नृपं हन्यात्पताका महिषीवधम् ॥
पीठको युवराजस्य सचिवमनुकम्पनम् ।

राष्ट्रं तोरणपातेन ध्वज अन्नक्षयो भवेत् ॥
पतिते शक्रदण्डे च नृपमन्यं समादिशेत् ।
कृमिजालसमुत्थाने शलभात्तस्कराद्भयम् ॥
सुसमे संस्थिते शान्तिर्नृपस्य नगरस्य च ।
तिष्ठत्येवोच्छ्रितो यावत्तावद्युगसमाः समाः ।
निरता यजने केतो रञ्जीरन्निन्द्रकन्यकाः ॥
पतिते तु तथा कार्या पूजोत्थाने तु यादृशी ।
राज्ञो शुभं कृत्यतमं नादृष्टं काकपोतकैः ॥
नृपतिः सह राष्ट्रीयैर्यश्चैवं कारयेत्क्रतुम् ।
नगरे वा पुरे खेटे यद्येवं कुरुते नृपः ॥
पौरन्दरं नगरद्वारे वृषसिंहसमुच्छ्रितम् ।
केतुं समस्तघोराणां नाशनं जयदं मतम् ॥
एनं पूर्वं हरिः केतुं प्राप्तवान् वृषवाहनात् ।
ततो ब्रह्माथ तेनैव ब्रह्मणा शक्रमागतः ॥
तेन सोमस्य तद्दत्तं ततो दक्षे समागतः ।
तदाप्रभृति कुर्वन्ति नृपा अद्यापि चोच्छ्रयम् ॥
एवं यः कारयेद्राजा केतुं विजयकारकम् ।
तस्य पृथ्वी धनोपेता सद्वीपा वशगा भवेत् ॥ इति ।
इति देवीपुराणोक्त इन्द्रध्वजोच्छ्रायविधिः ।
विष्णुधर्मोत्तरेऽपि स विशेषत उक्तः ।

राम उवाच ।

शक्रसम्पूजनं कार्यं कथं राज्ञा सुरोत्तम ।
सम्यक् भाद्रपदे मासि तन्ममाचक्ष्व पृच्छतः ॥

पुष्कर उवाच ।

असुरैस्तु सुरा भग्नाः पुरा युद्धे भृगूत्तम ।

ब्रह्माणं शरणं जग्मुः सर्वभूतहिते रतम् ॥
ते तमूचुः सुराः सर्वे निर्जिता दानवैर्वयम् ।
तानुवाच ततो ब्रह्मा क्षीरोदे मधुसूदनम् ॥
गच्छध्वं सहिताः सर्वे स वः श्रेयः करिष्यति ।
एवमुक्ताः सुराः सर्वे क्षीरोदे केशवं ययुः ॥
ददृशुश्च तदा देवं वासुदेवं जगद्गुरुम् ।
अमृताध्मातमेघाभं शङ्खचक्रगदाधरम् ॥
तुष्टुवुश्च महाभागं त्रिदशास्तं पुनः पुनः ।
सर्वेषामीश्वरं देवं भुवनस्यैककारकम् ॥

देवा ऊचुः ।

नमस्ते पुण्डरीकाक्ष शरणागतवत्सल ।
देवारिबलदर्पघ्न त्रिदशेन्द्रसुखप्रद ॥
चामीकराभवसन तार्क्ष्यप्रवरकेतन ।
शेषपर्यङ्कशयन लक्ष्मीहृदयवल्लभ ॥
सुरासुरशिरोरत्ननिर्घृष्टचरणाम्बुज ।
उन्निद्रचारुकमलविराजितकराम्बुज ॥
सदैव देव भग्नानामस्माकमसुरैर्भवान् ।
गतिस्तेन स्म सम्प्राप्ता दैत्यभग्नास्त्वदन्तिकम् ॥
प्रसीद देवदेवेश जहि तानसुराधमान् ।
येऽस्माकं देवदेवेश पीडयन्ति सदैव तु ॥

श्रीभगवानुवाच ।

ध्वजमेतं प्रदास्यामि भवतामरिनाशनम् ।
दृष्टमात्रेण येनेह विद्रविष्यन्ति दानवाः ॥

पुष्कर उवाच ।

तदुक्त्वा ध्वजं तेषां ददौ विष्णुरनुत्तमम् ।

सौवर्णमुत्थितं दिव्यं शक्रध्वजमितिश्रुतम् ॥
तमादाय सुराः सर्वे प्रययुर्दानवालयम् ।
देवानुपगतान् श्रुत्वा दानवा निर्ययुस्ततः ॥
सुसन्नद्धबलाः सर्वे प्रगृहीतायुधास्ततः ॥
दृष्ट्वा ते च बलं तेषां शक्रकेतुं विराजितम् ॥
तत्तेजसा महाभाग मूढीभूताः क्षणेन तु ।
मूढीभूतास्ततो दैत्यास्त्रिदिशैर्विनिपातिताः ॥
केचिद्भग्ना दिशो जग्मुः समुद्रं विविशुस्ततः ।
ततो लब्धजयः शक्रः पूजयामास तं ध्वजम् ॥
पूजयित्वा नृपतये वसवे प्रददौ तदा ।
गर्गोक्तेन विधानेन तं च पूजितवान् वसुः ॥
तेनास्य तुष्टो भगवानिदं वचनमब्रवीत् ।

इन्द्र उवाच ।

येऽप्यन्ये भूमिपाः श्रेष्ठाः शक्रध्वजमहोत्सवम् ।
अद्यप्रभृति धर्मज्ञ करिष्यन्ति समाहिताः ॥
तेषां तु विविधा वृद्धिर्भविष्यति सदा द्विज ।
दुर्भिक्षं मरणं व्याधिः परचक्रभयं तथा ॥
सर्वाण्येतानि नश्यन्ति कृते शक्रध्वजोत्सवे ।

पुष्कर उवाच ।

ततः प्रभृति राजानो राम शक्रमहोत्सवम् ।
कुर्वन्ति गर्गकथितं सर्वामयविनाशनम् ॥
धन्यं यशस्यं रिपुनाशनं च कीर्तिप्रदं धर्मफलप्रदं च ।
कार्यं नरेन्द्रैर्विजयाय यत्नाच्छक्रोत्सवं तत्कथयामि तुभ्यम् ॥

पुष्कर उवाच ।

शिबिरात्पूर्वदिग्भागे भूमिभागे तथा शुभे ।

प्रागुदक्प्रवणे कुर्याच्छक्रार्थं भवनं शुभम् ॥
वासोभिः शयनैः शुद्धैर्नानारागैस्तथैव च ।
ततः शक्रध्वजस्थानं मध्ये सम्भाष्य यत्नतः ॥
मघवन्तं पटे कुर्यात्तस्य भागे तु दक्षिणे ।
वामभागे पटे कुर्याच्छर्चीं देवीं तथैव च ॥
प्रोष्ठपादसिते पक्षे प्रतिपत्प्रभृति क्रमात् ।
तयोस्तु पूजा कर्त्तव्या सततं वसुधाधिपैः ॥
वनप्रवेशविधिना शक्रयष्टिं ततो नृपः ।
आनयेद्गोरथेनाथ वाऽऽनयेत्पुरुषैरयम् ॥
अर्जुनस्याजकर्णस्य प्रियकस्य धवस्य च ।
सुरदारुतरोश्चैव तथैवोदुम्बरस्य च ॥
चन्दनस्याथ वा राम पद्मकस्याथ वा यदि ।
अलाभे सर्व्ववृक्षाणां यष्टिं कुर्वीत वैणवीम् ॥
सुवर्णनद्धां सर्वज्ञ तां च सम्यक्प्रवेशयेत् ।
प्रोष्ठपादासिते पक्षे अष्टम्यां रिपुसूदन ॥
क्रमप्रमाणा विज्ञेया शक्रयष्टिस्ततो नृप ।
चतुर्भिरङ्गुलैर्हीना साग्रे भवति शर्मदा ॥
अष्टाङ्गुलं तथा मूले छित्वा तोयेऽथ तां क्षिपेत् ।
यायादुद्धृत्य नगरं सम्यगेव प्रवर्त्तते ।
तस्याः प्रवेशे नगरं पताकाध्वजमालि च ॥
सिक्तराजपथं कुर्यात्तथालङ्कृतनागरम् ।
नटनर्त्तकसङ्कीर्णं तथा पूजितदैवतम् ॥
सम्पूजितगृहं राम तथा पूजितचानयम् ।
पौरैरनुगतो राजा सुवेशैः फलपाणिभिः ॥
अष्टम्यां वाद्यघोषेण तां तु यष्टिं प्रवेशयेत् ।

प्राक्शिरस्कां ततः कुर्याद्वस्त्रैः सञ्छादितां शुभैः ॥
पूजितां पूजयेत्तां तु यावत्स्याद्द्वादशीदिनम् ।
एकादश्यां सोपवासो नृपः कुर्यात्सनागरम् ॥
सांवत्सरेण सहितो मन्त्रिणा च पुरोधसा ।
रात्रौ जागरणं कार्यं नागरेण जनेन तु ॥
स्थाने स्थाने महाभाग देया भक्ष्या तथा मधु ।
पूजयेन्नृत्यगीतेन रात्रौ शक्रं नराधिपः ॥
द्वादश्यां तु शिरःस्नातो नृपतिः प्रयतस्ततः ।
यन्त्रेणोत्थापनं कुर्याच्छक्रकेतोः समाहितः ॥
सुयन्त्रितं तु तं कुर्याद्दृढस्तम्भचतुष्टयम् ।
पूजयेत्तं महाभागं गन्धमाल्यान्नसम्पदा ॥
नित्यं च पट्टयोः पूजां यष्टिपूजां च कारयेत् ।
बलिभिस्तु विचित्राभिस्तथा ब्राह्मणपूजनैः ॥
नित्यं च जुहुयान्मन्त्रैः पुरोधाः शाक्रवैष्णवैः ।
नित्यं गीतेन नृत्येन तथा शक्रं च पूजयेत् ॥
द्वादश्यां पूजयेद्राजा ब्राह्मणान्धनसञ्चयैः ।
विशेषेण च धर्मज्ञ सांवत्सरपुरोहितौ ॥
उत्थाने च प्रवेशे च शक्रं स्तूयान्नराधिपः ।
वक्ष्यमाणेन मन्त्रेण कुशलश्च पुरोहितः ॥
पूजयेदुच्छ्रितं केतुं भूषणैर्विविधैरपि ।
छत्रेण च तथा वस्त्रमाल्यदामैस्तथैव च ॥
एवं सम्पूजयेद्राजन् तथा दिनचतुष्टयम् ।
पञ्चमे दिवसे प्राप्ते शक्रकेतुं विसर्जयेत् ॥
पूजयित्वा महाभाग बलेन चतुरङ्गिणा ।
नीत्वा करीन्द्रैस्त्विनयं ततो नद्यां प्रवाहयेत् ॥

वाद्यघोषेण महता सङ्गीतिस्तत्र कीर्त्तिता ।
पौरा जानपदास्तत्र क्रीडां कुर्युस्तदाम्भसि ॥
उत्सवं च तदा कार्यं जलतीरगतैर्महत् ।
एतद्विधानं नृपतिस्तु कृत्वा प्राप्नोति वृद्धिं धनवाहनानाम् ।
नाशं तथा शत्रुगणस्य राम महत्प्रसादं त्रिदशाधिनाथात् ॥ इति ।

शक्रध्वजोच्छ्रायकाले राज्ञा शक्रस्याशीर्वादरूपाः केचिन्मन्त्रा विष्णुधर्मोत्तरोक्ताः पठनीयाः । ते च—

पुष्कर उवाच ।

शृणु मन्त्रानिमान् सम्यक् सर्वकल्मषनाशनान् ।
प्राप्ते शक्रध्वजोच्छ्राये यान् पठेत्प्रयतो नृपः ॥
वर्द्धस्वेन्द्र जितामित्र वृत्रहन् पाकशासन ।
देवदेव महाभाग त्वं हि वर्द्धिष्णुतां गतः ॥
त्वं प्रभुः शाश्वतश्चैव सर्वभूतहिते रतः ।
अनन्ततेजा विरजा यशोविजयवर्द्धनः ॥
अप्रभुस्त्वं प्रभुर्नित्यमुत्तिष्ठ सुरपूजित ।
ब्रह्मा स्वयम्भूर्भगवान् सर्वलोकपितामहः ॥
रुद्रः पिनाकभृद्दृप्तः शतभृद्देवसंस्तुतः ।
योगस्य नेता कर्त्ता च तथा विष्णुरुरुक्रमः ॥
तेजस्ते वर्द्धयन्त्वेते नित्यमेव महाबलाः ।
अनादिनिधनो देवो ब्रह्मगोपः सनातनः ॥
अग्नेस्तेजोमयो भागो रुद्रात्मा पार्वतीसुतः ।
कार्तिकेयः शक्तिधरः षड्वक्त्रोऽसिगदाधरः ॥
स ते वरेण्यो वरदस्तेजो वर्द्धयतां विभो ।
देवसेनापतिः स्कन्दः सुरप्रवरपूजितः ॥
आदित्या वसवो रुद्राः साध्या देवास्तथाश्विनौ ।

मरुद्गणा लोकपालाश्चन्द्रः सूर्योऽनिलोऽनलः ॥
देवाश्च ऋषयश्चैव यक्षगन्धर्वराक्षसाः ।
समुद्रा गिरयश्चैव नद्यो भूतानि यानि च ॥
तेजस्तपांसि सत्यं च लक्ष्मीः श्रीः कीर्त्तिरेव च ।
प्रवर्द्धयन्तु ते तेजो जय शक्र शचीपते ॥ इति ।
इत्याशीर्वादरूपान् मन्त्रान् पठित्वा इन्द्रप्रार्थनां कुर्यात् ।
प्रार्थनारूपाश्च मन्त्रास्तत्रैव पठिताः ।
तव चापि जयान्नित्यमिह सम्पद्यते शुभम् ।
प्रसीद राज्ञां विप्राणां प्रजानामपि सर्वशः ॥
तव प्रसादात्पृथिवी नित्यं सस्यवती भवेत् ।
शिवं भवतु निर्विघ्नं शाम्यन्तामीतयो भृशम् ॥
नमस्ते देवदेवेश नमस्ते वलसूदन ।
नमुचिघ्न नमस्तेऽस्तु सहस्राक्ष शचीपते ॥
सर्वेषामेव लोकानां त्वमेकः परमा गतिः ।
त्वमेव परमं त्राणं सर्वस्यासि जगत्पते ॥
पाशो ह्यसि पथः स्रष्टुं त्वमनल्पान् पुरन्दर ।
त्वमेव मेघस्त्वं वायुस्त्वमग्निर्वैद्युतोऽम्बरे ॥
त्वमेव धनविक्षेप्ता त्वामेवाहुः पुनर्घनम् ।
त्वं वज्रमतुलं घोरं घोषवांस्त्वं वलाहकः ॥
स्रष्टा त्वमेव लोकानां संहर्त्ता चापराजितः ।
त्वं ज्योतिः सर्वलोकानां त्वमादित्यो विभावसुः ॥
त्वं महद्भूतमाश्चर्यं त्वं राजा त्वं सुरोत्तमः ।

---

१ भृगुरङ्गिरसश्चैव विश्वेदेवा मरुद्गणाः ।
लोकपालास्त्रयश्चैव चन्द्रः सूर्योऽनिलोऽनलः ॥
इति मुद्रितविष्णुधर्मोत्तरे पाठः ।

त्वं विष्णुस्त्वं सहस्राक्षस्त्वं देवस्त्वं परायणम् ॥
त्वमेव चामृतं देव त्वं मोक्षः परमार्चितः ।
त्वं मुहूर्तो निमेषस्त्वं लवस्त्वं वै पुनः क्षणः ॥
शुक्लस्त्वं बहुलश्चैव कला काष्ठा त्रुटिस्तथा ।
संवत्सरर्तवो मासा रजन्यश्च दिनानि च ॥

त्वमुत्तमा सगिरिवरा वसुन्धरा सभास्वरं वितिमिरमम्बरं तथा।
महोदधिःसातिमितिमिङ्गिलस्तथा महोर्मिमानुरुमकरो झषाकुलः॥
महायशास्त्वमिह सदा प्रपूज्यसे महर्षिभिर्मुदितमना महाद्युते ।
महर्षिभिः पिबसि च सोममध्वरे वषट्कृतान्यपि च हवींषि भूतये॥
त्वं विप्रैः सततमिहेज्यसे फलार्थं त्वं देवैरतुलबलौघ गीयसे त्वम्।
त्वद्धेतोर्यजनपरायणा द्विजेन्द्रा वेदाङ्गान्यधिगमयन्ति सर्ववेदैः॥
वज्रस्य भर्त्ता भुवनस्य गोप्ता वैश्वानरं वाहनमभ्युपैति ।
नमः सदाऽस्मै त्रिदशेश्वराय लोकत्रयेशाय पुरन्दराय ॥
अजोऽव्ययः शाश्वत एकरूपो विष्णुर्वराहः पुरुषः पुराणः ॥
त्वमन्तकः सर्वहरः कृशानुः सहस्रशीर्षा शतमन्युरीड्य ॥
कविं सप्तजिह्वं त्रातारमिन्द्रं सवितारं सुरेशम् ।
हृदयाभिशक्रं वृत्रहणं सुषेणमस्माकं वीरा उत्तरे भवन्तु ॥
त्रातारमिन्द्रेन्द्रियकारणात्मन्‚जगत्प्रधानं च हिरण्यगर्भम् ।
लोकेश्वरं देववरं वरेण्यमानन्दरूपं प्रणतोऽस्मि नित्यम् ॥
इमं स्तवं देववरस्य कीर्त्तयेन्महात्मनस्त्रिदशपतेः सुसंयतः ।

---

१ वज्रस्य भर्ता भुवनस्य गोप्ता वृत्रस्य हर्ता नमुचेर्निहन्ता ।
कृष्णे वसानो वसने महात्मा सत्यानृते यो विविनक्ति लोके ॥
यं वाजिनं गर्भमपां सुराणां वैश्वानरं वाहनमभ्युपैति । इति–
मुद्रितविष्णुधर्मोत्तरे पाठः ।

अवाप्य कामान्मनसोऽभिरामान् स्वर्लोकमायाति च देहभेदे॥

इति प्रार्थनामन्त्राः।

इन्द्रध्वजभङ्गे फलाफलं विष्णुधर्मोत्तर एवोक्तम्—

पुष्कर उवाच।

इन्द्रध्वजशिरो भज्येत्पतेदिन्द्रध्वजो यदि।
भज्यते शक्रयष्टिर्वा नृपतेर्नियतं वधः॥
यन्त्रभङ्गे तथा ज्ञेयं रज्जुच्छेदे तथैव च।
मातृकायास्तथा भङ्गे परचक्रभयं द्विज॥
दिव्यान्तरिक्षभौमाः स्युरुत्पातास्तत्र वै यथा।
तेषां तीव्रतमं ज्ञेयं फलमत्यन्तदारुणम्॥
निलीयते चेत्क्रव्यादः शक्रयष्टौ यदा द्विज।
राजा वा म्रियते तत्र स वा देशो विनश्यति॥
इन्द्रध्वजोपकरणं यत्किञ्चिद्द्विजसत्तम।
विनश्यत्यस्य विज्ञेया पीडा नगरवासिनाम्॥
इन्द्रध्वजनिमित्ते तु प्रायश्चित्तमिदं स्मृतम्।
इन्द्रयागं पुनः कुर्यात्सौवर्णेनेन्द्रकेतुना॥
राज्यं दत्त्वा च गुरवे धनेन प्रतिमोचयेत्।
सप्ताहं पूजयित्वा च ध्वजं दद्याद्द्विजातिषु॥
शान्तिरैन्द्री भवेत्कार्या यष्टव्यश्च पुरन्दरः।
महाभोज्यानि कार्याणि ब्राह्मणानां दिने दिने॥
गावश्च देया द्विजपुङ्गवेभ्यो हिरण्यवासोरजतैः समेताः।
एवंकृते शान्तिमुपैति पापं वृद्धिस्तथा स्यान्मनुजाधिपस्य॥
इतीन्द्रध्वजदुर्निमित्तेषु फलाफलं शान्तिकं च।

अथ नीराजनशान्तिः।

विष्णुधर्मोत्तरे।

राम उवाच ।
नीराजनविधिं त्वत्तः श्रोतुमिच्छामि सत्तम ।
कथं कार्या नरेन्द्रस्य शान्ती नीराजने प्रभो ॥
पुष्कर उवाच ।
पूर्वोत्तरे तु दिग्भागे नगरात्सुमनोहरे ।
विस्तीर्णे कारयेद्राजा सुमनोहरमाश्रमम् ॥
कटैर्गुप्तं कुशास्तीर्णं पताकाध्वजशोभितम ।
तोरणत्रितयं तत्र प्राङ्मुखं कारयेच्छुभम् ॥
कार्यं षोडशहस्तं तु तोरणं तु समुच्छ्रितम् ।
वैपुल्यं दशहस्तं तु तत्र कार्यं भृगूत्तम ।
तोरणाद्दक्षिणे भागे तत्र कार्यमथाश्रमम् ॥
देवता च भवेद्यत्र तथाग्निहवनक्रिया ।
अष्टहस्तायतोत्सेधमुलमुकानां तु वामतः ॥
कार्यं भवति शुष्काणां कूटं भृगुकुलोद्भव ।
पञ्चरङ्गकसूत्रेण शतग्रन्थिं मनोरमाम् ॥
मध्यमे तोरणे कुर्याच्छतपाशीं तु मध्यगाम् ।
छादयित्वा कुशैस्तां तु मृदा संछादयेत्पुनः ॥
तस्याश्च लङ्घनं वर्ज्यं प्रयत्नात्सर्वजन्तुभिः ।
न लङ्घिता सा यावत्स्यात्प्रथमं राजहस्तिना ॥
चित्रां त्यक्त्वा यदा स्वातिं सविता प्रतिपद्यते ।
ततः प्रभृति कर्त्तव्या यावत्स्वातौ रविः स्थितः ।
आश्रमे प्रत्यहं देवाः पूजनीया द्विजोत्तम ॥
देवाः, हरिहरादिप्रतिमाः । तानेव दर्शयति—
ब्रह्मा विष्णुश्च शम्भुश्च शक्रश्चैवानलानिलौ ॥
विनायकः कुमारश्च वरुणो धनदो यमः ।

विश्वान्देवान्महाभाग उच्चैःश्रवसमेव च ॥
अष्टौ महागजाः पूज्यास्तेषां नामानि मे शृणु ।
कुमुदैरावणौ पद्मः पुष्पदन्तोऽथ वामनः ॥
सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः ।
पूजा कार्या ग्रहर्क्षाणां तथैव च पुरोधसा ॥
ततश्च जुहुयाद्वह्नौ पुरोधास्सुसमाहितः ।
यथाभिमतदेवानां मन्त्रैस्तल्लिङ्गसंज्ञकैः ॥
तथा च मन्त्रहीनानां प्रणवेन महाभुज ।
प्रणवेन, प्रणवाद्येन नाममन्त्रेण ।
समिधः क्षीरवृक्षाणां तथा सिद्धार्थकानि च ।
घृतं तिलांश्च धर्मज्ञ तथा चैवाक्षतानि च ॥
हुत्वा च कलशान् कुर्यात् सोदकान् गन्धसंयुतान् ।
पूजितान्माल्यगन्धैश्च वनस्पतिविभूषितान् ॥
पञ्चरङ्गकसूत्रेण कुर्याद्वस्त्रगतांस्तथा ।
भल्लातशालिसिद्धार्थवचाकुष्ठप्रियङ्गवः ॥
तोरणात्पश्चिमे भागे कलशैः पूर्वकल्पितैः ।
ततः संस्नापनीयाः स्युर्मन्त्रपूतैर्गजोत्तमाः ॥
तुरगाश्च महाभाग अलङ्कृत्य ततस्तु तान् ।
ततोऽभिषेकनागस्य तथा तत्तुरगस्य च ॥
अन्नपिण्डं ततो देयमभिमन्त्र्य पुरोधसा ।
तस्याभिनन्दने राज्ञो विजयः परिकीर्त्तितः ॥
त्यागे च तस्य विज्ञेयं महद्भयमुपस्थितम् ।
निष्क्रामयेत्तोरणैस्तु ततो हि प्रथमं गजान् ॥
तत्रापि प्रथमं राम अभिषिक्तगजोत्तमम् ।
तस्यादौ शतपाशीं तु नरः पञ्चनखोऽपि वा ॥

जघन्यो लङ्घयेत्तां तु राज्ञो मरणमादिशेत् ।
जघन्यो नरः, शूद्रचाण्डालादिः । जघन्यः पञ्चनखः,श्वादिः ।

दुर्भिक्षं तत्र विज्ञेयं खरोष्ट्रैश्चैव लङ्घने ।
लङ्घयेद्वामपादेन यदि तां नृपकुञ्जरः ॥
राज्ञीपुरोहितामात्यराजपुत्राहितं भवेत् ।
राज्ञस्तु मरणं ब्रूयादाक्रमेत्तां यदाऽपरः ॥
राज्ञोऽपि जयमाचष्टे लङ्घयन् दक्षिणेन ताम् ।
राजहस्तिनि निष्क्रान्ते सा त्वपास्या तदा भवेत् ॥
निष्क्रामेयुस्ततः सर्वे प्राङ्मुखास्तोरणैर्गजाः ।
ततोऽश्वाः सुमहाभाग ततस्तु नरसत्तमाः ॥
ततश्छत्रं ध्वजं चैव राजलिङ्गानि यानि च ।
आश्रमे तानि संस्थाप्य पूजयेदायुधानि च ॥
पञ्चरङ्गकसूत्रेण यास्ताः प्रतिसराः कृताः ।
दूर्व्यादूर्व्येतिमन्त्रेण निबध्नीयात्पुरोहितः ॥
सर्वेषां नृपनागानां तुरगाणां च भार्गव ।
स्वगृहेषु ततो नेयाः कुञ्जरास्तुरगैः सह ॥
स्वातिस्थः सविता यावत्तावच्छायासु संस्थितान् ।
पूजयेत्सततं राम नाक्रोशेन्नैव ताडयेत् ॥
राजचिह्नानि सर्वाणि पूजयेदाश्रमे सदा ।
पूजयेद्वरुणं नित्यं यथावद्विधिना द्विज ॥[1]
भूतेज्या च तथा कार्या रात्रौ बलिभिरुत्तमैः ।
आश्रमं रक्षणीयं स्यात्पुरुषैः शस्त्रपाणिभिः ॥
वसेतामाश्रमे नित्यं सांवत्सरपुरोहितौ ।

---

१ तथाऽप्सु विधिवद्विज इति मुद्रितविष्णुधर्मोत्तरे पाठः ।

अश्ववैद्यप्रधानश्च तथा नागभिषग्वरः ॥
दीक्षितैस्तैस्तथा भाव्यं ब्रह्मचारिभिरेव च ।
स्वातिं त्यक्त्वा यदा सूर्यो विशाखां प्रतिपद्यते ॥
अलङ्कुर्याद्दिने तस्मिन् वाहनं च विशेषतः ।
पूजिता राजलिङ्गाश्च कर्त्तव्या नरहस्तगाः ॥
हस्तिनं तुरगं छत्रं खड्गं चापं च दुन्दुभिम् ।
ध्वजं पताकां धर्मज्ञ कालज्ञस्त्वभिमन्त्रयेत् ॥
अभिमन्त्र्य ततः सर्वान् कुर्यात्कुञ्जरधूर्गतान् ।
कुञ्जरोपरिगौ स्यातां सांवत्सरपुरोहितौ ॥
अश्ववैद्यप्रधानश्च तथा नागभिषग्वरः ।
ततोऽभिमन्त्रितं राजा समारुह्य तुरङ्गमम् ॥
निष्क्रम्य तोरणैर्नागमभिमन्त्रितमारुहेत् ।
तोरणेन विनिष्क्रम्य कुर्यात्सुरविसर्जनम् ॥
बलिं विसृज्य विधिवद्राजा कुञ्जरधूर्गतः ।
रत्नैरलङ्कृतः सर्वैर्वीज्यमानश्च चामरैः ॥
उल्मुकानां च निचयमादीपितमनन्तरम् ।
राजा प्रदक्षिणं कुर्यात् त्रीन्वारान्सुसमाहितः ॥
चतुरङ्गबलोपेतः सर्वसैन्यसमन्वितः ।
क्ष्वेडाकिलकिलाशब्दैः सर्ववादित्रनिस्वनैः ॥
वल्गितैश्च पदातीनां हृष्टानां मनुजोत्तम ।
एवं कृत्वा गृहं गच्छेद्राजा सैन्यपुरःसरः ॥
जनं सम्पूज्य च गृहात्सर्वमेव विसर्जयेत् ।
शान्तिर्नीराजनाख्येयं कर्त्तव्या वसुधाधिपैः ॥
क्षेम्या वृद्धिकरी राम नरकुञ्जरवाजिनाम् ।
धन्या यशस्या रिपुनाशनी च सुखावहा शान्तिरनुत्तमा च ।

कार्या नृपै राष्ट्रविवृद्धिहेतोः सर्वप्रयत्नेन भृगुप्रवीर ॥इति।

इति नीराजनशान्तिः।

आश्विनशुक्लनवम्यां राज्ञो भद्रकालीपूजाभिहिता।

**विष्णुधर्मोत्तरे,**

राम उवाच।

विधिना पूजयेत्केन भद्रकालीं नराधिपः।
नवम्यामाश्विने मासि शुक्लपक्षे नरोत्तम ॥

पुष्कर उवाच।

पूर्वोत्तरे तु दिग्भागे शिविरात्सुमनोहरे।
भद्रकालीगृहं कुर्याच्चित्रवस्त्रैः स्वलङ्कृतम् ॥
भद्रकालीं पटे कृत्वा तत्र सम्पूजयेद्द्विज।
आश्विने शुक्लपक्षस्य नवम्यां प्रयतस्ततः ॥
तत्र खड्गं च वर्मार्घ्यं छत्रं केतुं च पूजयेत्।
राजलिङ्गानि सर्वाणि तथा शस्त्राणि पूजयेत् ॥
पुष्पैर्गन्धैः फलैर्भक्ष्यैर्भोज्यैश्च सुमनोहरैः।
वहुभिश्च विचित्राभिः मेक्षादानैस्तथैव च ॥
रात्रौ जागरणं कुर्यात्तत्रैव वसुधाधिपः।
एवं हि सम्पूज्य जगत्प्रधानं यात्रा तु देया वसुधाधिपेन।
प्राप्नोति सिद्धिं परमां महीशो जनस्तथान्योऽपि हि वित्तशक्त्या॥

इत्याश्विनशुक्लनवम्यां भद्रकालीपूजा।

---

(१) शुक्लपक्षे तु अष्टम्याम् इति मुद्रितविष्णुधर्मोत्तरे पाठः।

(२) अत्र-"एवं सम्पूजयेद्देवीं वरदां भक्तवत्सलाम्। कात्यायनीं कामगमां वररूपां वरप्रदाम् ॥ पूजिता सर्वकामैश्च सा युङ्क्ते वसुधाधिपम्।" इत्याधिकं मुद्रितविष्णुधर्मोत्तरे वर्तते।

अथ प्रकारान्तरेणाश्विनशुक्लनवम्यां देवीपूजा ।

देवीपुराणे,

ब्रह्मोवाच ।

हते घोरे महावीरे सुरासुरभयङ्करे ।
देव्या उपासका देवाः प्रभूता राक्षसास्तथा ॥
आगता घातितं दृष्ट्वा महिषं तं सुदुर्जयम् ।
ब्रह्मविष्णुयमेशाना इन्द्रचन्द्रयमानिलाः ॥
आदित्या वसवो रुद्रा ग्रहा नागाश्च गुह्यकाः ।
समेत्य सर्वे देवास्ते देवीं भक्त्या च तुष्टुवुः ॥
वरं च सर्वलोकानां प्रददौ भयनाशिनी ।
बलिं ददुश्च भूतानां महिषाजामिषेण तु ॥
पुरेषु शङ्खभेर्यश्च शतशोऽथ सहस्रशः ।
कृता दुन्दुभिनादाश्च पटुशब्दाः समर्दलाः ॥
पताकाध्वजयन्त्रादिघण्टाचामरशोभितम् ।
तद्दिनं कारयाश्चक्रुर्देवीभक्ताः सुरोत्तमाः ॥
एवं तस्मिन्दिने वत्स भूतप्रेतसमाकुलम् ।
कृताथ सर्वदेवैश्च महापूजाथ शाश्वती ॥
आश्विने मासि मेघान्ते महिषारिनिवर्हिणीम् ।
देवीं सम्पूजयित्वा ये अर्द्धरात्रेऽष्टमीमुखे ॥
घातयन्ति पशून् भक्त्या ते भवन्ति महाबलाः ।
बलिं च ये प्रयच्छन्ति सर्वभूतविनायकी ॥
तेषां तु तुष्यते देवी यावत्कल्पं तु शाङ्करम् ।
क्रीडन्ति विविधैर्भोगैर्देवलोके सुदुर्लभे ॥
नाधयो व्याधयस्तेषां न च शत्रुभयं भवेत् ।
न च देवग्रहा दैत्या न सुरा न च पन्नगाः ॥

पीडयन्ति सुराध्यक्ष देवीपादसमाश्रितान् ।
यावद्भूर्वायुराकाशं जलं वह्निः शशी ग्रहाः ॥
तावच्च चण्डिका पूज्या भविष्यति सदा भुवि ।
प्रावृट्काले विशेषेण आश्विने चाष्टमीषु च ॥
महाशब्दो नवम्यां च लोके ख्यातिं गमिष्यति ।
एतत्तदेव राजेन्द्र स्वर्गवासफलप्रदम् ॥
परापरविभागं तु क्रियायोगेन कीर्त्तितम् ॥

इन्द्र उवाच ।

आश्विनस्य सिते पक्षे नवम्यां प्रतिवत्सरम् ।
श्रोतुमिच्छाम्यहं तात उपवासव्रतादिकम् ॥

ब्रह्मोवाच ।

शृणु शक्र प्रवक्ष्यामि यथा त्वं परिपृच्छसि ।
महासिद्धिप्रदं धन्यं सर्वशत्रुनिवर्हणम् ॥
सर्वलोकोपकारार्थं विशेषादपि वृष्णिषु ॥
कर्त्तव्यं ब्राह्मणाद्यैस्तु क्षत्रियैर्लोकपालकैः ।
गोधनार्थं तथा वैश्यैः शूद्रैः पुत्रसुखार्थिभिः ।
सौभाग्यार्थं तथा स्त्रीभिरन्यैश्च धनकाङ्क्षिभिः ॥
महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् ।
कर्त्तव्यं देवराजेन्द्र देवीभक्तिसमन्वितैः ॥
कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम् ।
अयाचिताश्यथैकाशी नक्ताशी त्वथ वाग्यतः ॥
प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः ।
जपहोमसमायुक्तः कन्यका भोजयेत्सदा ॥
अष्टम्यां नव गेहानि दारुजाति शुभानि च ।
एकं वा वित्तभावेन कारयेत्सुरसत्तम ॥

तस्मिन्देवी प्रकर्त्तव्या हैमी वा राजतापि वा ।
मूर्द्धाक्षिलक्षणोपेता खड्गे शूलेऽथ पूजयेत् ॥
सर्वोपहारसम्पन्नवस्त्ररत्नफलादिभिः ।
कारयेद्रथदोलादिबलिपूजां च दैविकीम् ॥
पुष्पादिद्रोणबिल्वाढ्यजातीपुन्नागचम्पकैः ।
विचित्रां रचयेत्पूजामष्टम्यां समुपावसेत् ॥
दुर्गाग्रतो जपेन्मन्त्रमेकचित्तः शुभान्वितः ।
तदर्धयामिनीशेषे विजयार्थं नृपः पशुम् ॥
पञ्चाब्दं लक्षणोपेतं गन्धधूपसुगन्धितम् ।
विधिवत्कालिकालीति जप्त्वा खड्गेन घातयेत् ॥
तदुत्थं रुधिरं मांसं गृहीत्वा पूजनादिषु ।
नैर्ऋतेभ्यः प्रदातव्यं महाकौशिकिमन्त्रितम् ॥
तस्याग्रतो नृपः स्नायाच्छत्रुं कृत्वाथ पिष्टजम् ।
खड्गेन घातयित्वा तु दद्यात्स्कन्दविशाखयोः ॥
ततो देवीं स्नापयेत्प्राज्ञः क्षीरसर्पिर्जलादिभिः ।
कुङ्कुमागुरुकर्पूरचन्दनैश्चार्च्य धूपयेत् ॥
देयानि पुष्परत्नानि वासांसि त्वहतानि च ।
नैवेद्यं सुप्रभूतं तु देयं देव्याः सुभावितैः ॥
देवीभक्ताश्च पूज्यन्ते कन्यकाप्रमदादयः ।
द्विजान् दीनान्धपाखण्डानन्नदानेन तर्पयेत् ॥
नन्दाभक्ता नरा ये तु महाव्रतधराश्च ये ।
पूजयेत्तान् विशेषेण यस्मात्तद्रूपमम्बिका ॥
मातॄणां चैव देवीनां पूजा कार्या तदा निशि ।
ध्वजच्छत्रपताकादि उच्छ्रयेदम्बिकागृहे ॥
रथयात्राबलिक्षेमं स्फुटत्राद्यरवाकुलम् ।

कारयेत्तुष्यते येन देवी पशुनिपातनैः ॥
अश्वमेधमवाप्नोति भक्तितः सुरसत्तम ।
महानवम्यां पूजेयं सर्वकामप्रदायिका ॥
सर्वेषु वत्स वर्णेषु तव भक्त्या प्रकीर्त्तिता ।
कृत्वाऽऽप्नोति यशो राज्यं पुत्रायुर्धनसम्पदः ॥ इति ।

इति देवीपुराणे महानवम्यां देवीपूजा ।

अथ चिह्नेषु देवीपूजाविधिः ।

तत्र देवीपुराणे,

ब्रह्मोवाच ।

क्षीराशी कार्त्तिकारम्भे देव्या भक्तिरतो नरः ।
शाकयावक एकाशी प्रातःस्नायी शिवारतः ॥
पूजयेत्तिलहोमं तु दधिक्षीरघृतादिभिः ।
कुर्याद्देव्यास्तु मन्त्रेण शृणु पुण्यफलं हरे ॥
महापातकसंयुक्तो युक्तो वाप्युपपातकैः ।
मुच्यते नात्र सन्देहो यस्मात्सर्वगता शिवा ॥
अन्यो वा भावनायुक्तस्त्वनेन विधिना शिवाम् ।
स्वयं वा अन्यतो वापि पूजयेत्पूजयीत वा ॥
न तस्य भवति व्याधिर्न वा शत्रुकृतं भयम् ।
नोत्पातग्रहदौस्थ्यं वा न च राष्ट्रं विनश्यति ॥
सदा स्वभावसम्पन्ना ऋतवः शुभदा घनाः ।
निष्पत्तिः सर्वसस्यानां तस्करा न भवन्ति च ॥
प्रभूतपयसो गावो ब्राह्मणाश्च क्रियापराः ।
स्त्रियः पतिव्रताः सर्वा रूपनिर्वृतिकारिणः ॥
फलपुष्पवती धात्री सस्यानि रसवन्ति च ।

भवेयुर्नात्र सन्देहश्चाम्बिकाविधिपूजनात् ॥
जयन्ती मङ्गला काली भद्रकाली कपालिनी।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥
अनेनैव तु मन्त्रेण जपहोमं तु कारयेत्।
मातस्तु संस्मृता वत्स महिषघ्नी मपूजिता ॥
अघं नाशयेत क्षिप्रं यथा सूर्योदये तमः।
सिंहारूढा ध्वजे यस्य नृपस्य रिपुहा उमा ॥
द्वारस्था पूज्यते वत्स न तस्य रिपुजं भयम्।
कपिलस्था महामाया सर्वशत्रुविनाशिनी ॥
वृषे यथेप्सितं दद्यात्कलभे श्रियमुत्तमाम्।
हंसे विद्यार्थकामांस्तु बर्हिणेऽभीष्टपुत्रदा ॥
गरुत्मति महामाया सर्वरोगविनाशिनी।
महिषस्था महामारीं शमयेद्ध्वजसंस्थिता ॥
करिगा सर्वकार्येषु नृपैः कार्या त्रिशूलिनी।
पद्मस्था चर्चिका रौप्या धर्मकामार्थमोक्षदा ॥
प्रेतस्था सर्वभयहा नित्यं पशुनिपातनैः।
पूजिता देवराजेन्द्र नीलोत्पलकरा वरा ॥
भवेत्तु सिद्धिकामस्य चिह्नाग्रे संव्यवस्थिता।
चिह्नानि, राज्ञो ध्वजपताकादीनि, तेषामग्रे।
गन्धपुष्पार्चितां कृत्वा वस्त्रहेमसुचर्चिताम् ॥
फलशालियवैः शूकवर्द्धमानैर्विभूषिताम्।
शोभनामुच्छ्रयेदग्रे पताकां वा मनोरमाम्।
चामरं कलशं शङ्खं सातपत्रं वितानकम् ॥
भवेत्तु सिद्धिकामस्य नृपस्य फलदायकम्।
नमो विश्वेश्वरि दुर्गे चामुण्डे चण्डहारिणि।

ध्वजं समुच्छ्रयिष्यामि वसोर्धारां सुखावहाम् ॥ इति ।

इति चिह्नेषु देवीपूजाविधिः ।

अथाश्ववद्भिर्नृपैराश्विनशुक्लप्रतिपदमारभ्य महानवमीयावदश्वशान्त्यर्थं लोहाभिसारिकं कर्म कार्यम् । यथोक्तम्—

देवीपुराणे,

आश्वयुक्शुक्लप्रतिपत्स्वातियोगे शुभे दिने ।
पूर्वमुच्चैःश्रवा नाम प्रथमं श्रियमाहरत् ॥
तस्मात्साश्वैर्नरैस्तत्र पूज्योऽसौ श्रद्धया सदा ।
पूजनीयाश्च तुरगा नवमीं यावदेव हि ॥
शान्तिः स्वस्त्ययनं कार्यं तदा तेषां दिने दिने ।
धान्यं भल्लातकं कुष्टं वचासिद्धार्थकांस्तथा ॥
पञ्चवर्णेन सूत्रेण ग्रन्थिं तेषां तु बन्धयेत् ।
वायव्यैर्वारुणैः सौरैः शाक्रैर्मन्त्रैः सवैष्णवैः ॥
वैश्वदेवैस्तथा मन्त्रैर्होमः कार्यो दिने दिने ।
तुरगा रक्षणीयास्तु पुरुषैः शस्त्रपाणिभिः ॥
नैव ताड्याः क्वचित्तत्र न च वाह्याः कथञ्चन । इति ।
भविष्योत्तरेऽपि विशेष उक्तः ।
कन्यागते सवितरि शुक्लपक्षेऽष्टमी तु या ।
मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ॥
तस्यां सदा पूजनीया चामुण्डा मुण्डमालिनी ।
तस्यां ये ह्युपयुज्यन्ते प्राणिनो महिषादयः ॥
सर्वे ते स्वर्गतिं यान्ति घ्नतां पापं न विद्यते ।
यावन्न चालयेद्गात्रं पशुस्तावन्न हन्यते ॥
न तथा बलिदानेन पुष्पधूपविलेपनैः ।

यथा सन्तुष्यते मेषैर्महिषैर्विन्ध्यवासिनी ॥
बलिदानं च मांसमाषसहितौदेनेन क्रियमाणम् ।
एवं च विन्ध्यवासिन्यां नवरात्रोपवासिना ।
एकभक्तेन नक्तेन स्वशक्त्याऽयाचितेन च ॥
पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ।
स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्नृपैः ॥
वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः ।
स्त्रीभिश्च कुरुशार्दूल तद्विधानमिदं शृणु ॥
जलाभिलाषी नृपतिः प्रतिपत्प्रभृति क्रमात् ।
लोहाभिसारिकं कर्म कारयेद्यावदष्टमी ॥ इति ।
लोहाभिसारिकविधानं च—
तत्रैवोक्तम्,
प्रागुदक्प्रवणे देशे पताकाभिरलङ्कृते ।
मण्डपं कारयेद्दिव्यं नवसप्तकरं वरम् ॥
नवसप्तकरं, षोडशहस्तप्रमाणमित्यर्थः ।
आग्नेय्यां कारयेत्कुण्डं हस्तमात्रं सुशोभनम् ।
मेखलात्रयसंयुक्तं योन्या स्वच्छन्दलाभया ॥
राजचिह्नानि सर्वाणि शस्त्राण्यस्त्राणि यानि च ।
आनीय मण्डपे तानि सर्वास्त्राण्यधिवासयेत् ॥
ततस्तु ब्राह्मणः स्नातः शुक्लाम्बरधरः शुचिः ।
ॐकारपूर्वकैर्मन्त्रैस्तलिलिङ्गैर्जुहुयाद्घृतम् ॥
लोहनामाऽभवत्पूर्वं दानवः सुमहाबलः ।
स देवैः समरे क्रुद्धैर्बहुधा शकलीकृतः ॥
तदङ्गसम्भवं लोहं सर्वं यद्दृश्यते क्षितौ ।
शस्त्रास्त्रमन्त्रैर्होतव्यं पायसं घृतसंयुतम् ।

हुतशेषं तुरङ्गाणां राजानमुपहारयेत् ॥
लोहाभिसारिकं कर्म तेनैतद्वापिभिः स्मृतम् ।
घृतपल्ल्ययनानश्वान् गजांश्च समलङ्कृतान् ॥
भ्रामयेन्नगरे नित्यं नन्दिघोषपुरस्कृतम् ।
प्रत्यहं नृपतिः स्नात्वा सम्पूज्य पितृदेवताः ॥
पूजयेद्राजचिह्नानि फलमाल्यविलेपनैः ।
तस्याभिसरणाद्राज्ञो विजयः समुदाहृतः ॥
पूजामन्त्रान् प्रवक्ष्यामि पुराणोक्तानहं तव ।
यैः पूजिता प्रयच्छन्ति कीर्तिमायुर्यशोबलम् ॥ इति ।
एते च मन्त्रा यात्राप्रकरणेऽभिहिता इति तत्रैवानुसन्धेयाः ।

इति लोहाभिसारिकं कर्म ।

## अथ गवोत्सर्गः ।

तत्र देवीपुराणे,
कृष्णपक्षे त्वमावास्या कार्तिकस्य ततः परे ।
योऽह्नि कुर्याद्गवोत्सर्गमश्वमेधफलं लभेत् ॥
सुवर्णदाने गोदाने भूमिदाने च यत्फलम् ।
तत्फलं कोटिगुणितं गवोत्सर्गेण लभ्यते ॥
तस्मान्मनोरमे स्थाने शाद्वले गर्तवर्जिते ।
शर्करा अश्मरहिते शङ्खभेरीनिनादिते ॥
स्तम्भद्वयं समारोप्य पूर्वपश्चिमसंस्थितम् ।
तत्र दर्भमयी कार्या शरवंशभवाथवा ॥
मध्ये कम्बलसंयुक्ता दीर्घरज्जुः सुशोभना ।
उभयोः पार्श्वयोर्विप्रा वेदध्वनिसमन्विताः ॥
एवंविधानतः कृत्वा उत्सर्गं कारयेत्ततः ।

प्रथमं गच्छेत होता यजमानसमन्वितः ॥
ब्रह्मक्षत्रविशः शूद्रास्तथा गावः प्रजाः पुनः ।
तथान्ये वर्णबाह्यास्तु चण्डालपरिवर्जिताः ॥
गच्छन्ति मुदिता हृष्टा हास्यतोषसमन्विताः ।
यस्त्वेवं कुरुते राजा पुरे ग्रामेऽथ पत्तने ॥
नश्यन्ति ईतयः सर्वा प्रजानां नन्दनं चिरम् ।
नाकाले म्रियते राजा पुत्रपौत्रैश्च वर्द्धते ॥
देवा भवन्ति सुप्रीतास्तथा वै मातरस्तथा ।
गोलोकं च लभेद्वत्स सर्वान् कामानवाप्नुयात् ॥
ईतयः प्रसिद्धाः । यथा—
अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ।
अत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥ इति ।

इति गवोत्सर्गः ।

अथ वसोर्धारा ।

तत्र देवीपुराणे,

विद्याधर उवाच ।

यथा सा सर्वगा देवी सर्वेषां च फलप्रदा ।
तथाहं श्रोतुमिच्छामि वसोर्द्धारां सविस्तराम् ॥

अगस्त्य उवाच ।

ब्रह्मणा या समाख्याता देवराजस्य पृच्छतः ।
विधिश्च पापहा श्रोतुः शृणुष्वावहितो मम ॥
वसोर्द्धारास्थिता देवी सर्वकामप्रदायिका ।
तथा ते कथयिष्यामि शृणु पुण्यविवृद्धये ॥
सर्वेषामेव देवानामुक्ता देवी मयोत्तमा ।

विशेषेण तु वह्निस्था आयुरारोग्यदा मता ॥
विजयं भूमिलाभं च मानवानां प्रियं तथा ।
विद्यासौभाग्यपुत्रादि कुण्डस्था सम्प्रयच्छति ॥
तस्मान्नृपेण भूत्यर्थं वसोर्द्धाराश्रिता शिवा ।
पूजनीया यथाशक्त्या सर्वकामफलप्रदा ॥
रुद्रादित्या ग्रहा विष्णुर्ब्रह्मा यक्षाः सकिन्नराः ।
हुताशनमुखाः सर्वे दृष्टादृष्टफलप्रदाः ॥
गोदानं भूमिदानं च रत्नसर्पिस्तिलादि च ।
दानानि च महान्त्याहुस्तेषां धारा विशिष्यते ॥
विप्राणां कोटिकोटीनां भोजयित्वा तु यत्फलम् ।
लभते तदवाप्नोति धारां दत्त्वा हुताशने ॥
व्यतीपाते न सन्देहः स च सूक्ष्मः प्रकीर्त्तितः ।
अयनं विषुवच्चैव दिनच्छिद्रं तथैव च ॥
दुष्प्रापं दानहोमानां धारायां लभ्यते नृप ।
तस्मान्नृपेण वृद्ध्यर्थं दृष्टादृष्टजिगीषुणा ॥
वसोर्द्धारा प्रकर्त्तव्या सर्वकामसुखावहा ।
समां वा अर्द्धमर्द्धं वा ऋतुमासार्द्धवासरम् ॥
समाम् अब्दम् ।
कृत्वा विभवरूपेण शाश्वतं लभते फलम् ।
एकाहमपि यो देवीं कल्पयित्वा हुताशने ॥
पातयेत्सर्पिषो धारां स लभेदीप्सितं फलम् ।
देवीमातृसमीपस्थं शिवविष्णुसमीपगम् ॥
भानोः प्रजापतेर्वापि वसोर्धारागृहं भवेत् ।
चिरन्तनेषु सर्वेषु स्वयं वा संस्कृतेषु च ॥
पर्वतेषु च दिव्येषु नदीनां सङ्गमेषु च ।

गुहासु च विचित्रासु गृहगर्भेषु भूमिषु ॥
दत्त्वा समाहितान् कामान् विधिना लभते नृप।
अथ सामान्यतो गेहं समसूत्रं जलोन्मुखम् ॥
वास्तुसंशुद्धविन्यासमेकादशकरं परम्।
त्रीणि पञ्चाथवा सप्त दश वा नव कारयेत् ॥
विंशकं यावदेकोनत्रिंशदूर्ध्वं न कारयेत्।
पक्केष्टं शैलदार्वं वा सालिन्दं सहतोरणम् ॥
पञ्चसप्तनवास्यं वा गवाक्षकविभूषितम्।
सर्वतोभद्रविन्यासं क्रमवृद्ध्या विवर्द्धितम् ॥
ऊर्ध्वे च धूमनिष्काशं सप्रकाशं विशेषतः।
सदेवसङ्गृहं कार्यमथवा देवतागमम् ॥

सदेवसङ्गृहं, प्राचीनस्थापितदेवप्रतिमम्। देवतागमं, तत्कालातीतदेवप्रतिमम्।

तस्य मध्ये भवेत्कुण्डं हस्तादिशुभलक्षणम्।
चतुष्कमथ वा वृत्तं पङ्कजाकृति वाथ वा ॥

अथवेत्यनेन योनिकुण्डमुच्यते। अत एव "योन्यां कामफलप्रदम्" इत्यनेनाग्रे तत्फलमुक्तम्।

पृथिवीजयदं शाक्रं वृत्तं कामफलप्रदम्।

शाक्रं चतुरस्रम्।

पङ्कजे जयमारोग्यं योन्यां कामफलप्रदम्।
शेषाः कार्यविभागेन कुण्डाः कार्या विजानता ॥
सामान्यं सर्वहोमेषु शाक्रकुण्डं नरोत्तम।
विस्तारखाततुल्यं तु त्रिमेखलसमन्वितम् ॥
चतुस्त्रि द्वे च वा कुर्यादङ्गुलान् कुण्डमानतः।
द्विगुणान् द्विगुणे कुण्डे होमसारेण कारयेत् ॥

होमसारेण,होमानुसारेण।
एवं संसाधयेद्विप्रस्ततः पात्रं सशृङ्खलम्।
हैमं वा राजतं वापि ताम्रं वा लक्षणान्वितम् ॥
चतुर्भिः कटकैर्युक्तमयःशृङ्खलसङ्ग्रहम्।
तस्य मध्ये भवेद्रन्ध्रं कर्पार्धस्य शलाकया ॥
हेमोत्थया प्रमाणेन चतुरङ्गुलमानया।
घृतनिष्क्रमणार्थाय कार्यं सम्यग्विपश्चिता ॥
पलैर्दशभिरर्द्धोनैर्नाड्येका तु यथा व्रजेत्।
पञ्चभिस्तु शतैर्होमः सप्तत्याथ षडग्रया ॥
यथा पूर्णा व्रजेद्वत्स तथा कुर्यान्न चान्यथा।
हस्तमात्रं भवेद्धैमं शृङ्खलं भुजगाकृति ॥
रन्ध्रे सूत्रनिबद्धं च अवलम्ब्य अधस्ततम्।
मणिं वा पङ्कजं पात्रमाबद्धं कारयेत्तले ॥
एवं कार्यानुरूपेण द्विगुणं त्रिगुणं च वा।
कुर्यात्पात्रं घृतं चैव प्रतिष्ठा देव चोदिता ॥
उद्देशं किञ्चिदत्रापि कथयामि नृपोत्तम।
समापनमृतुर्मासपक्षाहोरात्रपूर्ववत् ॥
लग्नादि शोधयेद्वत्स सर्वकामप्रदं यथा।
क्षणिकेषु च कार्येषु भक्तियुक्तः क्षणे शुभे ॥
क्षणं देवी च द्रष्टव्या यथा सर्वगता शिवा।
तत्र भूता ग्रहा नागास्त्रिविधापि शिवागुणाः ॥
नित्ये नैमित्तिके होमे मन्त्रयोगेन दापयेत्।
यो यस्य भक्तिमासक्तस्तस्य कुर्यात्सुसन्निधिम् ॥
सग्रहांल्लोकपालांश्च मातरो भुजगान् शिवान्।
कल्पयेत्सर्वहोमेषु देवी एतेषु संस्थिता ॥

स्थूलरूपा तु तैस्तुष्टैस्तुष्टा देवी महाफला ।
कालादिबलिगन्धादि प्रतिष्ठावच्च कारयेत् ॥
यथासम्पत्ति सम्पन्नः सर्वकालं प्रदापयेत् ।
तदा मातृग्रहान् भूतान् लोकपालान्निवेशयेत् ।
हैमान् राजतताम्रान् वा स्वनिवेशोपलक्षितान् ॥
स्वर्णपुष्पबलिगन्धदक्षिणादि यथाक्रमम् ।
मातॄणां लोकपालानां ग्रहाणां च यथाविधि ॥
हृदयेन प्रदेयं च मूलमन्त्रैः पुरातनैः ।
अथ वा सर्वसामान्यां वैदिकीमपि कारयेत् ॥
अथर्वविधिना वत्स पूर्वोक्तां वा यथा पुरा ।
प्रभूतमन्नं नैवेद्यैर्भूरिदक्षिणसंयुतैः ॥
कुर्यान्महाप्रयत्नेन नान्यथा च कदाचन ।
छेदे भयं विजानीयात्तदर्थं तत्र कारयेत् ॥
महाव्याहृतिहोमेन पात्रमत्र निवेशयेत् ।
मूलमन्त्रेण देव्यास्तु शृङ्खलं हृदयेन तु ॥
घृतं शिरसो मन्त्रेण शिखया चानुतापयेत् ।
कवचेन तथा वह्निं रक्षयित्वा प्रदापयेत् ॥
अस्त्रेण नेत्रमन्त्रेण सर्वं सर्वत्र निक्षिपेत् ।
लोकपालान् ग्रहान्नागान् द्वादशार्धेन पूजयेत् ।
शिवाद्यान्सनकाद्यांश्च देवाद्यानपि पूजयेत् ॥
नित्येषु च महाप्राज्ञ निमित्तेषु विशेषतः ।
अग्नेर्वर्णश्च गन्धश्च शब्दश्चाकृतयस्तथा ॥
विकाराश्च तदा वत्स बोद्धव्या सिद्ध्यसिद्धिदाः ।
तदन्ते वत्स सत्कार्या सर्वकामप्रदायिका ॥
येन सान्निध्यमायाति सर्वहोमेषु मङ्गला ।

सहस्रार्चिर्महातेजा नमस्ते बहुरूपिणे ॥
नमस्ते नीलकण्ठाय पीतवासाय पावक ।
स्रुवमेखलहस्ताय ब्रह्माण्डं दहते नमः ॥
सर्वाशिने सर्वगतपावकाय नमोनमः ।
उग्राय उग्ररूपाय स्त्रीलिङ्गाय स्वतेजसे ॥
वसु अश्विनिरूपाय सर्वाहाराय वै नमः ।
त्वं रुद्र घोरकर्मासि घोरहा परमेश्वर ॥
विष्णुस्त्वं जगतां पालो ब्रह्मा सृष्टिकरः स्मृतः ।
त्वं च सर्वात्मको देव लोकपालतनुः स्थितः ॥
इन्द्राय वह्नये देव यमाय पिशिताशिने ।
वरुणानिलसोमाय ईशदेवाय वै नमः ॥
सूर्याय चन्द्ररूपाय भूसुताय बुधाय च ।
बृहस्पतये शुक्राय सौरये राहुकेतवे ॥
सर्वग्रहस्वरूपाय व्यालमातङ्गरूपिणे ।
दृष्टिसृष्टिस्थितिभूतिकर्त्रे च वरदाय च ॥
नमस्ते स्कन्दमातस्ते स्कन्दपित्रे नमोनमः ।
कुण्डे वा मण्डले वापि स्थण्डिले वाथ तां विभो ॥
महानसे वा भ्राष्ट्रे वा हुत्वा इष्टं लभेन्नरः ।
घृतं क्षीरं रसं धान्यं तिलान् व्रीहीन् कुशान्यवान् ॥
भावादभावतो वापि सततं होमयेत्तु यः ।
एवं वित्तविहीनोऽपि नरो विगतकिल्बिषः ॥
किं पुनर्नित्यहोमे तु वसोर्धारा हुताशने ।
सर्वमङ्गलमन्त्रेण आहुतिं सम्प्रदापयेत् ॥
लोकपालग्रहाणां तु ओङ्कारेण नमोऽन्तकैः ।
स्वैः स्वैर्मन्त्रैस्तु शेषाणां होमः कार्यो नृपोत्तम ॥

अन्नं चित्रं विशुद्धं च संस्कृतं घृतपायसैः।
होमयेद्विधिवद्विप्रो बलिं चापि प्रदापयेत् ॥
सितवस्त्रधरो भूपः सबलः सहवाहनः।
पूजयेच्छत्ररत्नादीन्मातरं पितरं द्विजान् ॥
आचार्यान् बान्धवांल्लोकान्सर्वाश्रमरताश्च ये।
नटनर्त्तकदेश्याश्च कन्यका विधवाः स्त्रियः ॥
दीनान्धकृपणांश्चैव अन्नदानेन पूजयेत्।
एवं निवेशनं कृत्वा नित्यं जप्यं शतं शतम् ॥
प्रातर्मध्याह्नसन्ध्यायां तत्र शान्तिः प्रकीर्त्तिता।
भवते नृपराष्ट्रस्य पूर्वोक्तफलदायकम् ॥ इति।

एवं वसोर्धारानिवेशनं विधाय तत्र धूमस्य वर्णभेदेन फलाफलम्—

तत्रैवोक्तम्,

ब्रह्मोवाच,

तप्तहाटकवर्णाभः सूर्यसिन्दूरकान्तिभृत्।
शङ्खकुन्देन्दुपद्माभो घृतक्षीरनिभः शुभः ॥
जपाभः शङ्खपुष्पाभो लाक्षाजलजसन्निभः।
शुभदः सर्वकार्याणां विपरीतो ह्यसिद्धिदः ॥
मेघदुन्दुभिशङ्खानां वेणुवीणास्वनःशुभः।
वृषेभशिखिकाकानां कोकिलस्य न पूजितः ॥
कुङ्कुमागुरुकर्पूरमदरोचनगन्धवान्।
मदो, मृगमदः।
मांस्येलाकुष्ठतगरासितगन्धिश्च पूजितः ॥
हंसच्छत्रेभगोकुम्भपद्माकरकृतिः शुभः ॥
सिंहबर्हिणशैलानां चामराकृतिरिष्टदः।
सधूमोऽमृतगन्धी च शुकास्यचरणोपमः ॥

छिन्नज्वालोऽथ वा रौद्री नेष्टः सर्वेषु पावकः ।
सुसंहतशिखः शस्त ऊर्ध्वं मज्वलितोऽथ वा ॥
लेलिहानः शुभः कुन्ददीप्तिमान् वरदोऽनलः ।
एवंविधः सदैवाथ यज्ञे वैश्वानरो हितः ॥
यात्रायां शक्रकेतौ च सर्वकार्येषु सिद्धिदः ।
न्यूना या वहते धारा मानात्सर्पिर्न सा शुभा ॥
नाधिका शस्यते विप्र दुर्भिक्षकलिकारिका ।
त्रुट्यते वह्यमाना या शाम्यते वा हुताशनः ॥
सापि चान्यं नृपं त्विच्छेद्या च धारा पतेद्बहिः ।
ऋजुनादा महारूपा मनोज्ञा प्रियकारिका ॥
सुवर्णा हेमवर्णा च धारा राज्यविवृद्धये ।
सन्तता पतते या च तनोतीव च पावकम् ॥
तनोति नृप राष्ट्रं सा वसोर्धारा न संशयः ।
सुगन्धि स्वस्थं विमलं कृमिकीटविवर्जितम् ॥
शस्यते वसुधारायां सर्पिर्गव्यं च पूजितम् ।
अभावाद्गव्यमाज्यं वा होतव्यं च सुशोभनम् ॥
घृतक्षौद्रपयोधारा सर्वपीडानिवारिणी ।
गुडूचीशकलैर्होमः सहकारदलैः शुभः ॥
अश्वत्थमालतीदूर्वा आयुरारोग्यपुत्रदाः ।
सौभाग्यं च श्रियं देवी प्रयच्छत्यविचारणात् ॥
आक्र्याद्या वा शुभा वत्स सफलाः सार्वकामिकाः ।
होतव्याः सर्वकालं तु सातत्यात्समिधो नृप ॥
सर्वकालं घृतं प्रोक्तं निमित्ते च निमित्ततः ।
विशुद्धे सर्पिषो यानि तानि चात्र विचारयेत् ॥
ज्वालावच्च शुभं गन्धं सर्वहोमेषु लक्षयेत् ।

संयतैः संयताहारैः सर्वशास्त्रार्थपारगैः ॥
जपहोमरतैर्भूप धारा देया तु तद्विधैः ।
पाखण्डिविकलान् लुब्धान् धर्मापेतान् बहिष्कृतान् ॥
सर्वकालप्रवादांश्च न वदेन्नावलोकयेत् ।
मृत्युञ्जयमहामन्त्रं चतुर्थ्यन्तं जपेत्तथा ॥
भाग्यवान् नित्यहोमे तु अन्यथा विफलं भवेत् ।
सामान्या या भवेद्धारा तत्र जप्यं शतं शतम् ॥
प्रातर्मध्याह्नसन्ध्यासु सर्वकामसमृद्धये ।
वसुद्रव्यं घृतं वाज्यममृतं हविष्कामिकम् ॥
तस्य धारा सदा देया वसोर्धारा हि सा मता ।
वसुनापत्यकामेन दक्षेण च महात्मना ॥
मया च विष्णुना शक्र रुद्रेण च सहोमया ।
आत्मानं च स्वरूपेण धारायां तु प्रपातितम् ॥
देवी सान्निध्यमायाता सर्वकामप्रदायिका ।
तस्मात्त्वमपि राजेन्द्र वसोर्धारां प्रदापय ॥
नातः परतरं पुण्यं विद्यते नृपसत्तम ।
वसोर्धाराप्रदानस्य एकाहमपि यद्भवेत् ॥
नृपेण पुष्टिकामेन परराज्यजिगीषुणा ।
देया धारा सदा वत्स रिपुनाशाय विद्धि ताम् ॥
विच्छेदो नित्यहोमस्य न कार्यस्तु कदाचन ।
महादोषमवाप्नोति यः कुर्याद्विमुखान् सुरान् ॥
द्रव्याभावे घृताभावे नृप तस्करजं भयम् ।
यदि नो वहते धारा तदा च्छिद्रं न विद्यते ॥
होमं कृत्वा क्षमापेत देवं देवीं नृपोत्तम ।
पुनः प्राप्ते भवेद्वत्स प्रतिष्ठा विधिचोदिता ॥

महत्याश्विनमासे तु अष्टमीनवमीषु च ।
कार्तिक्यां माघचैत्रे तु चित्रायां रोहिणीषु च ।
वैशाख्यां तु प्रदातव्या ज्यैष्ठ्यां ज्येष्ठस्य सत्तम ॥
आषाढे द्वादशी प्रोक्ता अष्टमी पूर्णिमा नभे ।
नभस्ये रोहिणी वत्स चतुर्थ्यां भौमवासरे ॥
सङ्क्रान्तिषु च सर्वासु गुरुसौरभवासु च ।
चन्द्रसूर्योपरागेषु प्रतिष्ठा यज्ञकर्मणि ॥
पुत्रोत्सवे प्रदातव्या जन्मपुष्पाभिषेचने ।
जन्मादिनाभिषेके पुष्पाभिषेके च ।
मार्गे व्रतनिबन्धे तु सुघोरे केतुदर्शने ।
ग्रहकृत्योपशमने धारा देया शुभावहा ॥
एवं यो वाहयेद्धारां शास्त्रदृष्टेन कर्मणा ।
तस्य भूः सिद्ध्यत सर्वा सनागा सहसागरा ॥
अश्वमेधसमं पुण्यं दिनहोमात्प्रजायते ।
वाजपेयं शतं रात्रावग्निष्टोमशतं तथा ॥
आधयो व्याधयस्तस्य न भवन्ति कदाचन ।
आयुरारोग्यमैश्वर्यं तदन्ते च शिवो भवेत् ॥ इति ।
तथा,
हिमवद्धेमकूटे च विन्ध्ये माहेन्द्रपर्वते ।
वैदिशे तु जयन्ते वा महासेने च भूभृति ॥
गोपागिरौ महापुण्ये चित्रकूटेऽथ यामुने ।
कालञ्जरेऽथ वा काश्यां प्रयागे देवपर्वते ॥
उज्जयिन्यां च यो धारां दापयेद्वा महेश्वरि ।
एतेषु पुण्यदेशेषु विषुवायनसङ्क्रमे ॥
पुष्करे नैमिषे वत्स देया पञ्चमुखेक्षिते ।

गिरौ धाराप्रदानेन ग्रहपीडा न जायते ॥
बहुवक्रगते देहे वत्सरं न भयं भवेत् ।
जन्मताराक्षपीडायां दत्ता धारा व्यपोहति ॥
जम्बूमार्गे सदापूजा धारापाते विशिष्यते ।
सर्वकामानवाप्नोति नर्मदायां महामुने ।
धारादानेन गङ्गायां कालिन्द्यां वा महाह्रदे ॥
दत्त्वा विधानविहितं न भयं जायते क्वचित् ।
शनिसूर्यकृतां पीडां गुरुभौमीं व्यपोहति ॥
यथापूजाविधानेन-प्रतिसंवत्सरे स्थिता ।
पीडां निवारयेद्वत्स संवत्सरग्रहोद्भवाम् ॥
मन्त्रं जपेत्सङ्कथितं न भयं विद्यते क्वचित् ।
एकान्ते दुष्टरहिते पापजन्तुविवर्जिते ॥
धाराहोमश्च कर्त्तव्यो यथोक्तः श्रियमिच्छता ।
जिह्वायां पातयेद्धारां न द्रुतां न विलम्बिताम् ॥
सावधानेन मनसा मृत्युञ्जयनिपातिता ।
मन्त्रयोगाद्भवेत्सिद्धिर्दृष्टादृष्टप्रसाधिका ॥
ग्रहोद्भवां हरेत्पीडां त्रिविधामपि दुःस्थिताम् ।
ग्रहाश्च त्रिविधाः प्रोक्तास्तेषां मन्त्रा विधानतः ॥
अंशजा मूलमन्त्राश्च पीठपादगतास्तथा ।
होमकाले प्रयोक्तव्याः पूजाकाले तथैव च ॥
एवं सिद्धिमवाप्नोति इह स्वर्गापवर्गिकाम् ।
तावत्काले क्रियायोगाद्धारायां लभते मुने ॥
धारादानं प्रकर्त्तव्यं यत्र कुत्र ग्रहादिभिः ।
तैर्मन्त्रैर्नित्यहोमे च पूर्वं च कथितो विधिः ॥ इति ।

इति देवीपुराणोक्तो वसोर्धाराविधिः ।

अथ शत्रुनाशनं कृत्तिकास्नानम् ।

विष्णुधर्मोत्तरे,

पुष्कर उवाच ।

कृतोपवासो याम्यर्क्षे सोपवासस्य भार्गव ।
पुरोधाः स्नपनं कुर्यात्कृत्तिकासु यथाविधि ॥
अकालमूलैः कलशैर्मृन्मयैरथ काञ्चनैः ।
उज्ज्वलैर्लक्षणैः पूर्णैस्तथा तार्थोदकैः शुभैः ।
अग्निमन्थशिरीपाणां न्यग्रोधाश्वत्थयोरपि ।
पत्रपूर्णैस्तथा युक्तैस्तिलैः कृष्णैर्द्विजोत्तम ।
वह्निं कुमारं शशिनं रुद्रं वरुणमेव च ॥
पूजयेत्कृत्तिकाश्चैव गन्धमाल्यान्नसम्पदा ।
पीतरक्तैस्तथा वर्णैर्घृतधूपैस्तथैव च ॥
दध्ना गव्येन लाजाभिरग्निमन्थेन चाप्यथ ।
कृसरोल्लोपिकाभिश्च अपूपैश्च पृथग्विधैः ॥
देवतानां यथोक्तानां प्रियङ्गुं जुहुयात्ततः ।
गर्दभाश्वमयूराणां लोमानि मनुजोत्तम ॥
अग्निमन्थगृहात् धूमं कृत्वा रुक्माङ्गदं मणिम् ।
धारयेद्दक्षिणां दद्याच्छक्त्या कनकमेव च ॥
श्वेतवासास्ततः पश्चात्पूजयेन्मधुसूदनम् ।
कर्मैतत्सर्वतः कृत्वा वह्न्याधानमथाप्नुयात् ॥
कर्मैतदुक्तं रिपुनाशकारि सर्वाग्निकर्मप्रसमृद्धिदं च ।
धन्यं यशस्यं च तथैवं काम्यं नित्यं कृतं धर्मभृतां वरिष्ठ

इति शत्रुनाशनं कृत्तिकास्नानम् ।

अथापरं शत्रुनाशनं कर्म।

विष्णुधर्मोत्तरे,

राम उवाच।

अग्न्याधेयमवाप्नोति शत्रुनाशमथापि वा।
स्वेच्छया कर्मणा केन सदा यादोनृपात्मज॥
शत्रुनाशकरं कर्म कथयस्व तथाऽपरम्।
तदहं श्रोतुमिच्छामि तत्र श्रद्धा सदा मम॥

पुष्कर उवाच।

कृतोपवासो याम्यर्क्षे कृत्तिकासु सदैव तु।
पूजयेद्वासुदेवं तु कुङ्कुमेन सुगन्धिना॥
रक्तैश्च कुसुमैर्हृद्यैर्धूपं दद्याच्च गुग्गुलम्।
घृतेन दीपं दद्याच्च रक्तवर्णं तथैव च॥
निवेदनीयं देवाय तथा सर्वं निवेदयेत्।
होतव्याश्च समिद्धेऽग्नौ तथैवासुरसर्षपाः।
आयुधानि प्रदेयानि ब्राह्मणेभ्यस्तु दक्षिणा॥
कर्मैतदुक्तं रिपुनाशकारि कार्यं सदा शत्रुगणप्रमाथि।
कृत्वैतदग्र्यं रिपुनाशमाशु प्राप्नोति राजा न हि संशयोऽत्र॥

इति शत्रुनाशनं कर्म।

अथ शत्रुनाशिनी घृतकम्बलशान्तिः।

तत्र विष्णुधर्मोत्तरे,

राम उवाच।

शान्तिमाचक्ष्व मां देव घृतकम्बलसंज्ञिताम्।
कार्या या पार्थिवेन्द्राणां विजयाय पुरोधसा॥

पुष्कर उवाच ।

पूर्वोत्तरे तु दिग्भागे नगरात्सुमनोहरे ।
प्रागुदक्प्रवणे देशे शान्त्यगारं तु कारयेत् ॥
शुभमत्यन्तविस्तीर्णं नानावस्त्रसमन्वितम् ।
पुनर्वसुगते चन्द्रे तत्र यायान्नराधिपः ॥
पुरस्कृत्य महाभाग सांवत्सरपुरोहितौ ।
आभिषेचनिका मन्त्रा ये मयाभिहिताः पुरा ॥
देवादयस्तु तेषां वै स्थानं तत्र प्रकल्पयेत् ।

ते च मन्त्रा राज्याभिषेकप्रकरणे पठिताः ।

गन्धमण्डलकैर्मुख्यैर्यथास्थानं पुरोहितः ॥
आवाहनं ततः कुर्यात्स्नातस्तत्र सुखोषितः ।
देवादीनां तु सर्वेषां ब्राह्मणैः सहितो द्विज ॥
आवाहितानां सर्वेषां गन्धमाल्यान्नसम्पदा ।
दैववित्पूजनं कुर्यात्तथा नृपपुरोहितौ ॥
एवं सम्पूजनं कृत्वा सोपवासास्तु ते त्रयः ।
स्वप्युश्च तां निशां तत्र सर्वे एव समाहिताः ॥
ततो नैर्ऋतकं कर्म प्रदिशेत्तु पुरोहितः ।

नैर्ऋतकं कर्म, बलिदानादि ।

कृत्वा त्रिभागशेषायां रात्रौ कुर्यात्तु शान्तिकम् ॥
हुत्वा दशगुणं तत्र स्नापयेत्तं नराधिपम् ।
पूर्वमेव तथा स्नातं सिद्धार्थोत्सादितं तथा ॥
पूर्णेन घृतकुम्भेन मन्त्रेणानेन कालवित् ।
आज्यं तेजः समुद्दिष्टमाज्यं पापहरं स्मृतम् ॥
आज्यं सुराणामाहार आज्ये लोकाः प्रतिष्ठिताः ।
भौमान्तरिक्षदिव्यं वा यत्ते किल्बिषमागतम् ॥

सर्वं तदाज्यसंस्पर्शात्प्रणाशमुपगच्छतु ।
ततो विरूक्षितं स्नातं स्नानवेद्यां नराधिपम् ॥
गच्छेतां तु पुरस्कृत्य सांवत्सरपुरोहितौ ।
स्नानवेदी प्रकर्तव्या लाजाकुसुममण्डिता ॥
चतुर्भिः पूर्णकुम्भैस्तु विदिक्षु ह्युपशोभिता ।
चत्वारि तस्याश्चर्माणि प्राग्ग्रीवाणि समास्तरेत् ॥
वृषस्य द्वीपिनश्चैव सिंहशार्दूलयोस्तथा ।
भद्रासनं न्यसेद्राम तेषामुपरि चर्मणाम् ॥
स्वासीनं नृपतिं तत्र वस्त्रैराच्छादयेन्नवैः ।
कार्पासिकैस्ततः पश्चादाविकैः कृमिजैस्ततः ॥
ततस्तु सर्पिषः कुम्भैः पूर्णैस्तमभिषेचयेत् ।
कुम्भाष्टकं तु कर्त्तव्यमष्टाविंशतिरेव वा ॥
अथ वाष्टशतं राम वृद्धिरेषा गुणोत्तरा ।
ततोऽपनीय वस्त्राणि तस्यां वेद्यां पुरोहितः ॥
शूलेन मृन्मयं भिन्द्याच्छत्रुं क्रोधसमन्वितः ।
राज्ञस्तु कलशं दद्यात्स्वयं सांवत्सरस्ततः ॥
अभिषेचनमन्त्रेण स्वर्चितं कल्पितं दृढम् ।
ज्योतिष्मतीं त्रायमाणामभयामपराजिताम् ॥
जीवां विश्वेश्वरीं पाठां समङ्गामभयं तथा ।
सहां च सहदेवीं च पूर्णकोशां शतावरीम् ॥
अरिष्टिकां शिवां भद्रां कलशं तत्र विन्यसेत् ।
ब्राह्मीं क्षेमामजां चैव सर्वबीजानि काञ्चनम् ॥
मङ्गल्याश्च यथालाभं सर्वौषध्यो रसस्तथा ।
रत्नानि सर्वगन्धाश्च बिल्वं च सविकङ्कतम् ॥
एवं स्नातो घृते दृष्ट्वा वदनं दर्पणं तथा ।

मङ्गलालम्भनं कृत्वा धौतवासाः समाहितः ॥
आयुधाभ्यर्चनं कार्यं वाहनाभ्यर्चनं तथा ॥
राजचिह्नार्चनं कृत्वा ह्यलङ्कृत्य स्वकां तनुम् ।
अनुलेपनमादद्याद्गन्धद्वारेतिमन्त्रितम् ॥
शुभं चन्दनमादद्याच्छ्रीसूक्तेनाभिमन्त्रितम् ।
श्रियं धातर्मयि धेहि मन्त्रः सुमनसां भवेत् ॥
रायस्पोषेति च तथा मन्त्रोऽलङ्करणे स्मृतः ।
ततोऽनुलिप्तः सुरभिस्रग्वी रुचिरभूषणः ॥
केशवाभ्यर्चनं कृत्वा वन्हिस्थानं ततो व्रजेत् ।
वन्हेरुत्तरादिग्भागे तथा प्रागुक्तचर्मणाम् ॥
सिंहासनं न्यसेत्पृष्ठे पराध्र्यास्तरणैर्युतम् ।
ततस्तु राम चर्माणि प्राग्ग्रीवाणि तु विन्यसेत् ॥
वृषस्य वृषदंशस्य करिणः पृषतस्य च ।
तेषामुपरि सिंहस्य व्याघ्रस्य च ततः परम् ॥
ध्रुवा द्यौरितिमन्त्रेण नृपं तत्रोपवेशयेत् ।
दर्भपाणिस्ततो राजा तथैव च पुरोहितः ॥
तयोर्हस्तगतावग्रे दर्भौ सङ्ग्रन्थयेद्द्विजः ।
ततः पुरोधा जुहुयाद्ब्राह्मैर्मधुघृतं शुचिः ॥
रौद्रवैष्णववायव्यशाक्रसौम्यैस्सवारुणैः ।
वार्हस्पत्यैस्ततः कुर्याच्चन्त्रमुत्तरसंज्ञितम् ॥
दैवज्ञः प्रयतः कुर्याद्देवतानां विसर्जनम् ।
यान्तु देवगणाः सर्वे सानुगास्सपरिच्छदाः ॥

---

१ अत्र—"अभ्यर्चनं ततः कुर्याद्देवादीनां पृथक्पृथक् । तेषामेव ततो वन्हौ चतुर्थ्यन्तैस्तु नामभिः ॥ ओङ्कारपूतं जुहुयाद्घृतं बहु पुरोहितः ।" इत्यधिकं मुद्रितविष्णुधर्मोत्तरे वर्तते ।

आदाय पार्थिवात्पूजां पुनरागमनाय च ।
ततश्च पूजयेद्राजा सांवत्सरपुरोहितौ ॥
धनेन ब्राह्मणानां च ततो दद्यात्तु दक्षिणाम् ।
मङ्गलालम्भनं कृत्वा खड्गपाणिर्गृहान्व्रजेत् ॥
शान्तिघोषेण महता राजा कुञ्जरगस्ततः ।
शान्तिर्मया तेऽभिहिता नृवीर धन्या यशस्या रिपुनाशनी च ।
सुखावहा राष्ट्रविवृद्धिकर्त्री कार्या नृपैर्धर्म्मविवृद्धिदा च ॥ इति ।

इति विष्णुधर्मोत्तरे घृतकम्बलशान्तिः ।

अथाथर्वणपरिशिष्टोक्तो घृतकम्बलः ।

ततो ज्येष्ठं घृतकम्बलं ब्रह्मणः पुत्रमकरोत्तस्य ह वा एतस्य घृतकम्बलस्य सावित्रीगणशरीरस्य शन्तातीयः शिरः त्रिषप्तीयं मुखं रुद्रगणौ चक्षुषी घृतलिङ्ग आस्यं नैक्षन्तो जिह्वा दन्तौष्ठावभयापराजितौ कृत्यादूषणवातनौ श्रोत्रे शर्म्मवर्म्मस्वस्त्ययनौ वाहू मातृनामावास्तोष्पत्यौ पादौ पायुश्च भैषज्यन्यायः (?) प्राणापानाविति मीमांसन्त इत्येष ह वै ज्येष्ठो घृतकम्बलो ब्रह्मणः पुत्रोऽपराजितगणेनेष्ट्वेन्द्रोऽसुरानजयद्राज्यमलक्ष्मीमरातिं दुष्टस्वप्नदुर्भूतान्यजयद्यथा चैवंविद्वान् घृतकम्बलं कुरुते सर्वकामानाप्नोति सर्वव्याधिरहितो भवतीति ब्रह्मलोकमवाप्नोतीति ब्राह्मणम् ।

यदा सर्वमिदं व्याप्तमसुरैर्नावशेषितम् ।
स्थातुं देवाः पराभूतास्तेऽथर्वाणमुपागताः ॥
कर्म स्वकं कुरुष्व त्वं यद्भृग्वङ्गिरसोर्म्मतम् ।
असुराणां वधार्थायेत्युक्तः कर्ताऽथ सोऽभवत् ॥
परचक्रोपसृष्टस्य राज्ञो विजयमिच्छतः ।
प्रतिराष्ट्रस्य वा भूयः श्रीकामस्येच्छतः श्रियम् ॥

प्रादुर्भावेऽद्भुतानां तु ग्रहाणां विग्रहे तथा ।
शङ्कमानोऽभिचाराद्वा कारयेद्घृतकम्बलम् ॥
घृतमात्रा तु विज्ञेया मागधप्रस्थसम्मिता ।
शतानि पञ्च द्रोणानां पलैकशतमेव च ॥
घृतप्रमाणं वक्ष्यामि माषकं पञ्च कृष्णलः ।
माषकानि चतुःषष्टिः पलमेकं विधीयते ॥
द्वात्रिंशत्पलिकं प्रस्थं मागधैः परिकीर्त्तितम् ।
आढकं तु चतुःप्रस्थश्चतुर्भिर्द्रोणमाढकैः ॥
द्रोणप्रमाणं विज्ञेयं ब्रह्मणा निर्मितं पुरा ।
द्वादशाभ्यधिकैर्नित्यं पलानां पञ्चभिः शतैः ॥
घृतं द्रोणशतं वाथ षष्टिद्रोणावरं तथा ।
यथाशक्ति प्रयुञ्जीत घृतं कृत्वा तु भागशः ॥
चतुर्भागोऽभिषेकाय चतुर्भागस्तु हूयते ।
भागो देयः सदस्येभ्यः कर्त्ता भागेन युज्यते ॥
आविकं कम्बलं पूर्णं वासोऽर्थमुपकल्पितम् ।
प्रावृत्य स्नापयेदेनमित्युवाच बृहस्पतिः ॥
न राक्षसा न गन्धर्वा न पिशाचा न चासुराः ।
क्रूराः पुरुषधर्मज्ञा न हिंसन्ति घृतार्चितम् ॥
न हिंसन्ति घृतार्चितमिति ।

इत्याथर्वणपरिशिष्टोक्तो घृतकम्बलः ।

## अथ प्रकीर्णकम् ।

तत्र नानास्मृतिपुराणादिसूक्ता राज्ञो धर्मा निरूपिताः । अथेदानीं तस्यावश्यं श्रोतव्यत्वेन काचित्काचिद्राजनीतिर्निरूप्यते । तत्र—

महाभारते,

सञ्जयो विदुर प्राप्तो गर्हयित्वा च मां गतः ।
अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ॥
तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया ।
तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम् ॥
जाग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥

यतः प्राप्तः सञ्जयः पाण्डवेभ्यो न मे यथावन्मनसः प्रशान्तिः ।
सर्वेन्द्रियाण्यप्रकृतिं गतानि किं वक्ष्यतीत्येव हि मेऽद्य चिन्ता ॥

इतिधृतराष्ट्रप्रश्ने विदुरवाक्यम्—

अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥
कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप ।
कच्चिन्न परवित्तेषु गृध्यन्न परितप्यसे ॥

इति विदुरप्रश्ने धृतराष्ट्रवाक्यम्—

श्रोतुमिच्छामि ते धर्म्यं परं नैःश्रेयसं वचः ।
अस्मिन् राजर्षिवंशे हि त्वमेकः प्राज्ञसम्मतः ॥

ततश्च विदुरस्योत्तरवाक्यम्—

निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥
क्रोधो हर्षश्च दर्पश्च ह्रीस्तम्भोऽमान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥

क्रोधः परद्वेषः । हर्षः सुखम् । तत्कार्यं मुखादिविकारो वा । दर्प अन्तःसारविशेषः । ह्रीस्तम्भो निर्लज्जता । अमान्यमानिता, अमान्यानां मानयितुमयोग्यानां सम्मानकरणम् ।

त्य न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥
यस्य सञ्चारिणी प्रज्ञा धर्मार्थावनुवर्त्तते ।
कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥

सञ्चारिणी, परोक्तस्य युक्तिसिद्धस्यार्थस्य श्रवणानन्तरं स्वमात्रबुद्धार्थाग्रहरहिता । संसारिणीतिपाठे सम्यक्प्रसरणशीला । कामादर्थं वृणीत इति । कामापेक्षया धर्मसाधनत्वेनार्थस्य प्राधान्यमनुसृत्यार्थहान्या यः कामं न सेवत इतिभावः ।

यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न किञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः ॥
क्षिप्रं विजानाति चिरं शृणोति विज्ञाय चार्थं भजते च कामान् ।
नासम्पृष्टो ह्युपयुङ्क्ते परार्थे तत्प्रज्ञानं प्रथमं पण्डितस्य ॥

असम्पृष्टः परार्थे नोपयुङ्क्ते, नोपक्रमते ।

नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥
निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥

नान्तर्वसति कर्मण इति । कर्मणः अन्तः कर्मणो मध्ये न वसति नोपरमत इत्यर्थः ।

आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥
न हृष्यत्यात्मसम्माने नावमानेन तप्यते ।
गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥

तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥
प्रवृत्तवाक् चित्रकथ ऊहवान् प्रतिभानवान् ।
आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ॥
प्रतिभानवान् धृष्टः । यद्वा—
प्रज्ञा नवनवोल्लासशालिनी प्रतिभा मता । तद्वान् ।
श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असम्भिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ॥
तथा,
अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव च ।
विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥

असमुन्नद्धः, गर्वरहितः । एवमुपादेयत्वेन पण्डितलक्षणान्यभिधाय हेयत्वेन मूढलक्षणान्यपि तत्रैवोक्तानि ।

अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।
अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥
स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्या चरति मित्रार्थे यश्च मूढः स उच्यते ॥
अकामान् कामयति यः कामयानान् परित्यजेत् ।
बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥
अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥
संसारयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥

कृत्यानि कार्याणि । संसारयति आरभते । सर्वत्र, तेषु कार्येषु । विचिकित्सते, इदं मदिष्टसाधनं भवति न वा, इदं मच्छक्यं भवति न वेत्यादिसन्देहवान् भवति ।

श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति ।
सुहृन्मित्रं न भजते तमाहुर्मूढचेतसम् ॥
अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥
परं क्षिपति दोषेण वर्त्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥
स्वयं तथा वर्त्तमानः, दोषवान् ।
आत्मनो बलमज्ञाय धर्मार्थपरिवर्जितम् ।
अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥
नैष्कर्म्यात् कर्माकरणात् ।
अशिष्यं शास्ति यो राजन् यश्च शून्यमुपासते ।
कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥
कदर्यं, धने सत्यपि दानभोगरहितम् ।
तथा,
एकः सम्पन्नमश्नाति वस्ते वासश्च शोभनम् ।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥
सम्पन्नं, पक्वं मिष्टमन्नम् ।
एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥
महान् बहुतरो जनः परिवारा यस्य स महाजनः ।
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥
एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु ।
पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ॥
एकया, बुद्ध्या दण्डनीत्या वा । द्वे, कार्याकार्ये । त्रीन्,

मित्रोदासीनशत्रून्। चतुर्भिः, सामदानदण्डभेदैरुपायैः । पञ्च, पञ्च ज्ञानेन्द्रियाणि च पञ्च कर्मेन्द्रियाणि च । षड्, सन्धिविग्रहयानासनद्वैधीभावसंश्रयाख्यान् षड्गुणान्। सप्त—

स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥
इतिव्यसनानि ।
एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते ।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः ॥
एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥
एकमेवाद्वितीयं तद्यद्राजन्नावबुद्ध्यसे ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥
एकमेव सत्यं सत्यवचनं स्वर्गस्य सोपानम् ।
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥
सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं धनम् ।
अक्षमावान् परं दोषैरात्मानं चैव योजयेत् ॥
एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा ।
विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥
द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥
ब्राह्मणं, ब्रह्म नयतीति ब्राह्मणः, णीञ्प्रापण इत्यस्मात् ।

ब्रह्मज्ञः परिव्राट् तस्य परिभ्रमणस्योक्तत्वात् ।

द्वे कर्मणी नरः कुर्वन्नस्मिंल्लोके विरोचते ।
अब्रुवन् परुषं किञ्चिदसतोऽनर्चयंस्तथा ॥

द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ ।
स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥
द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषिणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥
द्वाविमौ न विराजेते विपरीतेन कर्मणा ।
गृहस्थश्च निरारम्भः कार्यवांश्चैव भिक्षुकः ॥
द्वाविमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥
न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥
द्वावम्भसि विनिक्षेप्यौ गाढं बद्ध्वा गले शिलाम् ।
धनिनं चाप्रदातारं दरिद्रं चातपस्विनम् ॥
त्रयोपाया मनुष्याणां श्रूयन्ते भरतर्षभ ।
कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः ॥
त्रयोपाया इति छान्दसः सन्धिः ।
त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥
त्रय एवाधना राजन् भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥
हरणं च परस्वानां परदाराभिमर्षणम् ।
सुहृदश्च परित्यागस्त्रयो दोषा भयप्रदाः ॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥
भक्तं च भजमानं च तवास्मीति च वादिनम् ।
त्रीनेतान् शरणं प्राप्तान् विषमेऽपि न सन्त्यजेत् ॥

वरप्रदानं राज्यं च पुत्रजन्म च भारत ।
शत्रोश्च मोक्षणं कृच्छ्रात्त्रीणि चैकं च तत्समम् ॥
चत्वारि राज्ञा तु महाबलेन वर्ज्यान्याहुः पण्डितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मन्त्रं न कुर्यान्न दीर्घसूत्रैरलसैश्चारणैश्च ॥
चत्वारि ते तात गृहे वसन्तु श्रियोऽभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः सखा दरिद्रो भगिनी चानपत्या ॥
चत्वार्याह महाराज साद्यस्कानि बृहस्पतिः ।
पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥
साद्यस्कानि, सद्यःफलानि ।
देवतानां च सङ्कल्पमनुभावं च धीमताम् ।
विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥
सङ्कल्पं चिकीर्षितम् ।
पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ॥
पञ्चैव पूजयंल्लोके यशः प्राप्नोति केवलम् ।
देवान् पितॄन्मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥
पञ्च त्वानुगमिष्यन्ति यत्र यत्र गमिष्यसि ।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥
पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पादादिवोदकम् ॥
दृतेः चर्मपुटकस्य ।
षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्री भयं क्रोध आलस्यं दीर्घसूत्रता ॥
षडिमान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥

अरक्षितारं राजानं भार्या चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥
षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥
षडिमानि विनश्यन्ति मुहूर्त्तेनानवेक्षणात् ।
गावः सेवा कृपिर्भार्या विद्या वृषलसङ्गतिः ॥
षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम् ।
आचार्यं शिक्षिताः शिष्याः कृतकृत्या नरेश्वरम् ॥
नारीं विगतकामाश्च कृतार्थाश्च प्रयोजकम् ।
नावं निस्तीर्णकान्तारा आतुराश्च चिकित्सकम् ॥
निस्तीर्णकान्ताराः, निस्तीर्णदुर्गमजलमार्गाः ।
आरोग्यमानृण्यमविप्रवासः सद्भिर्मनुष्यैः सह सम्प्रयोगः ।
स्वप्रत्यया वृत्तिरभीतवासः षड्जीवलोकस्य सुखानि राजन् ॥
स्वप्रत्यया, स्वाधीना । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इति कोषः । वृत्तिः जीविका "वृत्तिर्वर्त्तनजीवने" इत्यमरः ।
ईर्ष्यी घृणी त्वसन्तुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥
अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकस्य सुखानि तात ॥
षण्णामात्मनि नित्यानामैश्वर्यमधिगच्छति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥
षण्णाम्, इन्द्रियाणाम् । ऐश्वर्यं, वशित्वम् ।
षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।
चौराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥
प्रमदाः कामयानेषु यजमानेषु याजकाः ।

राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥
सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥
अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान् प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥
ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥
नैतान् स्मरति कृत्येषु याचितश्चाभ्यसूयते ।
एतान्दोषान्नरः प्राज्ञो बुध्येद्बुद्ध्वा विसर्जयेत् ॥
अष्टाविमानि हर्षस्य नवनीतानि भारत ।
वर्त्तमानानि दृश्यन्ते तान्येव सुसुखान्यपि ॥
समागमश्च सखिभिर्महांश्चैव धनागमः ।
पुत्रेण च परिष्वङ्गः सन्निपातश्च मैथुने ॥
समये च प्रियालापः स्वयूथ्येषु समुन्नतिः ।
अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ॥
समये हर्षादिसमये ।
अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च ॥
नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।
क्षेत्रज्ञाधिष्ठितं विद्वान् यो वेदः स परः कविः ॥
नवद्वारमिति । चक्षुःश्रोत्रनासामुखपायूपस्थरूपनवद्वारम् । त्रिस्थूणं, त्रीणि सत्त्वरजस्तमांसि वातपित्तकफा वा स्थूणा आधारस्तम्भा यस्य तत् । पञ्चसाक्षिकं, पञ्च ज्ञानेन्द्रियाणि

साक्षिणो गृह्यमाणविषयनिवेदयितारो यत्र तत्तादृशम् । क्षेत्रज्ञाधिष्ठितं, क्षेत्रं शरीरं जानाति आत्मत्वेन बुध्यते स क्षेत्रज्ञो जीवः तदधिष्ठितम् । परः कविः, उत्कृष्टः पण्डितः ।

दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ।
तस्मादेतेषु सर्वेषु न प्रसज्जेत पण्डितः ॥

मत्तः, मद्यपानादिनाऽनवहितः । प्रमत्तः, असावधानः । उन्मत्तः, वातरोगादिमान् । श्रान्तः, अध्वगमनभारवहनादिना परिश्रान्तः ।

तथा,

यः काममन्यू प्रजहाति राजा पात्रे प्रतिष्ठापयते धनानि ।
विशेषविच्छ्रुतवान् क्षिप्रकारी तं सर्वलोकः कुरुते प्रमाणम् ॥
जनाति विश्वासयितुं मनुष्यान्विज्ञातदोषेषु दधाति दण्डम् ।
जानाति मात्रां च तथा क्षमां च तं तादृशं श्रीर्जुषते समग्रा ॥

मात्रां, दण्डपरिमाणम् । कस्मिन्नपराधे कियान् दण्डः कर्त्तव्य इत्यादिकम् ।

सुदुर्बलं नावजानाति कञ्चिद्युक्तो रिपुं सेवते बुद्धिपूर्वम् ।
न विग्रहं रोचयते बलिष्ठैः काले च यो विक्रमते स धीरः॥

युक्तः, युक्तिमान् । युक्तिश्च स्वसंरक्षणपूर्वकपरनिग्रहानुकूलो यत्नः ।

प्राप्यापदं न व्यथते कदाचिदुद्योगमन्विच्छति चाप्रमत्तः ।
दुःखं च काले सहते महात्मा धुरन्धरस्तस्य जिताः सपत्नाः॥
अनर्थकं विप्रवासं गृहेभ्यः पापैः सन्धिं परदाराभिमर्शम् ।
दम्भं स्तैन्यं पैशुनं मद्यपानं न सेवते यः स सुखी सदैव ॥

न संरम्भेणारभते त्रिवर्गमाकारितः शंसति तत्त्वमेव ।
न मित्रार्थे रोचयते विवादं नापूजितः कुप्यति चाप्यमूढः ॥
न योऽभ्यसूयत्यनुकम्पते च न दुर्बलः प्रातिभाव्यं करोति ।
नात्याहिते किञ्चित्क्षमते विवादं सर्वत्र तादृक् लभते प्रशंसाम्॥
दुर्बलः, असमर्थः । प्रातिभाव्यं, प्रतिभूत्वम् । "अत्याहितं महाभीतिः कर्म जीवानपेक्षि च" इत्यमरः ।
यो नोद्धतं कुरुते जातु वेषं न पौरुषेणापि विकत्थतेऽन्यान् ।
न मूर्छितः कटुकान्याह किञ्चित्प्रियं सदा तं कुरुते जनो हि ॥
मूर्छितः, वृद्धिं प्राप्तः, अथ वा दुःखितः ।
न वैरमुद्दीपयति प्रशान्तं न दर्पमारोहति नास्तमेति ।
न दुर्गतोऽस्मीति करोत्यकार्यं तमार्यशीलं परमाहुरार्याः ॥
दर्पं, गर्वम् । अस्तम्, अकिञ्चनत्वम् । दुर्गतः, दरिद्रः ।
न स्वे सुखे वै कुरुते प्रहर्षं नान्यस्य दुःखे भवति प्रहृष्टः ।
दत्त्वा न पश्चात्कुरुतेऽनुतापं स कथ्यते सत्पुरुषार्यशीलः ॥
देशाचारान्समयान् जातिधर्मान् बुभूषते यः स परावरज्ञः ।
स यत्र तत्राभिगतः सदैव महाजनस्याधिपत्यं करोति ॥
समयान्, राज्ञा ज्ञातिश्रेष्ठैश्च कृतान् कर्त्तव्याकर्त्तव्यनियमान्।
दम्भं मोहं मत्सरं पापकृत्यं राजद्विष्टं पैशुनं पूगवैरम् ।
मत्तोन्मत्तैर्दुर्जनैश्चापि वादं यः प्रज्ञावान् वर्जयेत्स प्रधानः ॥
पूगवैरम्, पूगैः समुदायापन्नैः सह वैरम् ।
दमं शौचं दैवतं मङ्गलानि प्रायश्चित्तं विविधांल्लोकवादान् ।
एतानि यः कुरुते नैत्यकानि तस्योत्थानं देवता धारयन्ति ॥
दमं, बाह्येन्द्रियनिग्रहम् ।
समैर्विवाहं कुरुते न हीनैः समैः सख्यं व्यवहारं कथाश्च ।

१ पृष्टः ।

गुणैर्विशिष्टांश्च पुरो दधाति विपश्चितस्तस्य नयाः सुनीताः॥
मितं भुङ्क्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म कृत्वा।
ददात्यमित्रेष्वपि याचितः स्वं तमात्मवन्तं प्रजहत्यनर्थाः॥
चिकीर्षितं विप्रकृतं च यस्य नान्ये जनाः कर्म जानन्ति किञ्चित्।
मन्त्रे गुप्ते सम्यगनुष्ठिते च नाल्पोऽप्यस्य च्यवते कश्चिदर्थः॥
यः सर्वभूतप्रशमे निविष्टः सत्यो मृदुर्मानकृच्छुद्धभावः।
अतीव स ज्ञायते ज्ञातिमध्ये महामणिर्जात्य इव प्रसन्नः॥
य आत्मनाऽपत्रपते भृशं नरः स सर्वलोकस्य गुरुर्भवत्युत।
अनन्ततेजाः सुमनाः समाहितः स तेजसा सूर्य इवावभासते॥

तथा,

मिथ्योपेतानि कर्माणि सिद्ध्येयुर्यानि भारत।
अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः॥

मिथ्योपेतानि छद्मयुक्तानि। अनुपायप्रयुक्तानि, उपायैर्विना प्रयुक्तानि।

तथैव योगविहितं न सिद्ध्येत्कर्म चेन्नृप।
उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः॥
अनुबन्धानपेक्षेत सानुबन्धेषु कर्मसु।
सम्प्रधार्य च कुर्वीत न वेगेन समाचरेत्॥
अनुबन्धं च सम्प्रेक्ष्य विपाकं चैव कर्मणाम्।
उत्थानमात्मनश्चैव धीरः कुर्वी वा न वा॥

अनुबन्धं, कारणम्। विपाकं, कार्यफलमित्यर्थः। उत्थानं, स्वोदयम्[1]। कुर्वीत, परिणामशुद्धौ कुर्यात्, तदभावे न कुर्यादित्यर्थः।

यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये।

---

१ यत्नकृतम्।

कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥

स्थाने, यथास्थिततत्वे । दण्डोऽत्र सैन्यम् । कोशदेशसैन्यानां यथावस्थितिवृद्धिक्षयेषु यः प्रमाणं परिमाणमियत्तां न जानाति स राज्ये नावतिष्ठते राज्यभ्रष्टो भवतीत्यर्थः ।

यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥
न राज्यं प्राप्तमित्येव वर्त्तितव्यमसाम्प्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥

असाम्प्रतं, नीतिविरुद्धम् ।

भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो वडिशमायसम् ।
लोभाभिपाती ग्रसते नानुबन्धमपेक्षते ॥

"वडिशं मत्स्यवेधनम्" इत्यमरः । अनुबन्धम्, अनु पश्चात् बन्धं बन्धनम् ।

यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥

आद्यम्, अदनीयं भोक्तव्यमित्यर्थः ।

वनस्पतेरपक्वानि फलानि प्रचिनोति यः ।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥
यस्तु पक्वमुपादत्ते काले परिणतं फलम् ।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥
यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः ।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथाङ्गारकारकः ॥

अङ्गारकारको यथा समूलं वृक्षमुत्पाट्य तत्राग्निं दत्त्वा

अङ्गारान् करोति तथा न कुर्यादितिभावः ।

किन्नु मे स्यादिदं कृत्वा किन्नु मे स्यादकुर्वतः ।
इति कर्माणि सञ्चिन्त्य कुर्याद्वा पुरुषो न वा ॥
अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथाऽगताः ।
कृतः पुरुषकारो हि भवेत्तेषु निरर्थकः ॥

केचित्कदाचित् अनारभ्याः । केचिदर्था नित्यं सर्वदैव तथाऽगताः अनारभ्याः । तेषु कृतः पुरुषकारः पुरुषप्रयत्नः निरर्थको भवेत् ।

कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् ।
क्षिप्रमारभते कर्त्तुं न विघ्नयति तादृशान् ॥
ऋजु पश्यति यः सर्वं चक्षुषा प्रपिबन्निव ।
आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः ॥
सुपुष्पितः स्यादफलः फलितः स्याद्दुरारुहः ।
अपक्वः पक्वसङ्काशो न स शीर्येत कर्हिचित् ॥

सुपुष्पित इति । अफलः, अजनितपरकार्योत्पत्तिः सन्, सुपुष्पितः, सम्यक्तया दर्शिततत्कार्यारम्भप्रत्याशः, स्यात्, भवेत् । स्वकार्यानुरोधेन फलितः सम्पादितपरकार्यः सन् दुरारुहः परेषामधृष्यः स्यात् । अपक्वः अनिष्पादितसम्पूर्णफलः सन् पक्वसङ्काशो निष्पादितस्वप्रयोजनतया शीर्णो न भवेत् ।

चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति ॥
यस्मात्त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव ।
सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥
पितृपैतामहं राज्यं प्राप्तवान्स्वेन तेजसा ।

---

१ कर्मणा इत्यपि पाठः ।

वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥
धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।
वसुधा वसुसम्पूर्णा वर्द्धते भूतिवर्द्धिनी ॥
अथ सन्त्यजतो धर्ममधर्ममनुतिष्ठतः ।
प्रतिसञ्चेष्टते भूमिरग्नौ चर्माहितं यथा ॥

प्रतिसञ्चेष्टते, सङ्कुचितफलवती भवति । अग्नावाहितं चर्म यथा सङ्कुचितं भवति तथा भवतीतिभावः ।

य एव यत्नः क्रियते परराष्ट्रविमर्दने ।
स एव यत्नः कर्त्तव्यः स्वराष्ट्रपरिपालने ॥
धर्मेण राज्यं विन्देत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥
न जहातीत्यत्रापि श्रियमित्यनुपज्यते ।

अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥
सुव्याहृतानि सूक्तानि सुकृतानि ततस्ततः ।
सञ्चिन्वन् धीर आसीत शिलाहारी शिलं यथा ॥
क्षेत्रपतितवल्लरीग्रहणं शिलं तदाहारवान् ऋपिः शिलाहारी ।

गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा राजन्नैव तां वितुदन्त्यपि ॥
यदतप्तं प्रणमति न तत्सन्तापयन्त्यपि ।
यच्च स्वयं नतं दारु न तत्सन्नमयन्त्यपि ॥
एतयोपमया धीरः सन्नमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥

पर्जन्यनाथाः पशवो राजानो मन्त्रिबान्धवाः ।
पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ॥
सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥

विद्या, आत्मज्ञानम् ।

मानेन रक्ष्यते धान्यमश्वान् रक्षत्यनुक्रमः ।

मानेन, मापनेन । मानहीनं स्थापितं धान्यं राक्षसा हरन्तीति लोके प्रवादोऽपि । अनुक्रमः, चलनम् । "अनध्वा वाजिनां जरा" इत्यत्राप्यभिहितम् ।

अभीक्ष्णदर्शनं गाश्च स्त्रियो रक्ष्याः कुचैलतः ॥

कुचैलं,कुत्सितवस्त्रम्। सुवेषा हि स्त्रियो यतः सर्वोऽपि कामयते।

न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्त्येष्वपि हि जातानां वृत्तमेव विशिष्यते ॥
य ईर्षुः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखसौभाग्यसत्कारे तस्य व्याधिरनन्तकः ॥
अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् ।
अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥
विद्यामदो धनमदस्तथैवाभिजनो मदः ।
मदा एतेऽवलिप्तानामेत एव सतां दमाः ॥
असन्तोऽभ्यर्चिताः सद्भिः क्वचित्कार्ये कदाचन ।
मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् ॥
गतिरात्मवतां सन्तः सन्त एव सतां गतिः ।
असतां च गतिः सन्तो न त्वसन्तः सतां गतिः ॥
जिता सभा वस्त्रवता मिष्टाशा गोमता जिता ।

अध्वा जितो यानवता सर्वं शीलवता जितम् ॥
शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितं नार्थो न धनेन न बन्धुभिः ॥
आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।
तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥
सम्पन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।
क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
जीर्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते ।
अवृत्तेर्भयमन्त्यानां मध्यानां मरणाद्भयम् ॥
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ।
अन्त्यानाम्, अधमानाम् । अवृत्तेः, जीवनोपायाभावाद्भयम् ।
ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः ।
ऐश्वर्यमदमत्तो हि नापतित्वा विबुध्यते ॥
ऐश्वर्यमदः पापिष्ठोऽत्यन्तं पतनहेतुर्येषु ते तथाविधाः ।
इन्द्रियैरिन्द्रियार्थेषु वर्त्तमानैरनिग्रहैः ।
तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥
योजितः पञ्चवर्गेण सहजेनात्मकर्षिणा ।
आपदस्तस्य वर्द्धन्ते शुक्लपक्ष इवोडुराट् ॥
अविजित्य य आत्मानममात्यान् विजिगीषते ।
अमित्रान्वाऽजितामात्यः सोऽवशः परिहीयते ॥
आत्मानमेव प्रथमं द्वेषरूपेण यो जयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥

यः पुरुषः प्रथममात्मानमेव मन एव द्वेषरूपेण द्विष्टत्वेन जयेत् । ततोऽमात्यान्स्वप्रधानपुरुषान् अमित्रांश्च मोघं नि-

रर्थकं न विजिगीषते । मनसो जयाभावे तु मोघं विजिगीषत इति भावः ।

वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥
रथः शरीरं पुरुषस्य राजन्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः ॥
एतान्यनिगृहीतानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्तं हयाः पथि कुसारथिम् ॥
अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः ।
इन्द्रियैरजितैर्बालः सुदुःखं मन्यते सुखम् ॥
धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः ।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥
अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वर्याद्भ्रश्यते हि सः ॥
आत्मनाऽऽत्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः ।
आत्मा ह्येवात्मनो बन्धुरात्मैव रिपुरात्मनः ॥
बन्धुरात्मात्मनस्तस्य येनैवात्माऽऽत्मना जितः ।
स एव नियतो बन्धुः स एव नियतो रिपुः ॥
क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ ।
कामश्च राजन् क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥
अपिहितौ, आच्छादितौ ।
समवेक्ष्येह धर्मार्थौ सम्भारान् योऽधिगच्छति ।
स वै सम्भृतसम्भारः सततं सुखमेधते ॥
यः पञ्चाभ्यन्तरान् शत्रूनविजित्य मनोमयान् ।
जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तम् ॥

आभ्यन्तरान् पञ्च शत्रून्, पञ्च ज्ञानेन्द्रियाणि ।
मनोमयान्, मनःप्रधानान् । अविजित्य, स्वस्वविषयाग्रवणान् अकृत्वा । अन्यान् रिपून्, बाह्यान् शत्रून् ।
दृश्यन्ते हि महात्मानो बध्यमानाः स्वकर्मभिः ।
इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥
असन्त्यागात्पापकृतामपापांस्तुल्यो दोषःस्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावात्तस्मात्पापैः सह सन्धिं न कुर्यात् ॥
निजानुत्पततः शत्रून् पञ्च पञ्चप्रयोजनान् ।
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥
अनसूयार्जवं शौचं सन्तोषः प्रियवादिता ।
दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ॥
आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता ।
वाक्चैव गुप्ता दानं च नैतान्यन्त्येषु भारत ॥
आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥
हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम् ।
शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ॥
वाक्संयमो हि नृपतेः सुदुष्करतमो मतः ।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥
अभ्यावहति कल्याणं विविधा वाक्सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥
रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥
कर्णिनालीकनाराचान् निर्हरन्ति शरीरतः ।
वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥

वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि।
परस्य नामर्मसु ते पतन्ति तान् पण्डितो नावसृजेत्परेभ्यः॥
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम्।
बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति॥
बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते।
अनयो नयसङ्काशो हृदयान्नापसर्पति॥
यावत्कीर्त्तिर्मनुष्यस्य पुण्या लोके प्रगीयते।
तावत्स पुरुषव्याघ्रः स्वर्गलोके महीयते॥
न देवा दण्डमादाय रक्षन्ति पशुपालवत्।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्॥
यथा यथा हि पुरुषः कल्याणे कुरुते मनः।
तथा तथाऽस्य सर्वार्थाः सिद्ध्यन्ते नात्र संशयः॥
नैनं छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्त्तमानम्।
नीडं शकुन्ता इव जातपक्षाश्छन्दांस्येनं प्रजहत्यन्तकाले॥
मद्यपानं कलहं पूगवैरं भार्यापत्योरन्तरं ज्ञातिभेदम्।
राजद्विष्टं स्त्रीपुंसयोर्विवादं वर्ज्यान्याहुर्यश्च पन्थाः प्रदुष्टः॥
सामुद्रिकं वणिजं चौरपूर्वं शलाकधूर्त्तं च चिकित्सकं च।
अरिं च मित्रं च कुशीलवं च नैतान्साक्ष्ये त्वधिकुर्वीत सप्त॥

सामुद्रिकं वणिजं, समुद्रव्यवहारकारिणं पोतवणिजम्। चौरपूर्वं, पूर्वं चौर्यवृत्त्या जीवन्तम्। शलाकधूर्त्तं, द्यूतकरम्। कुशीलवं, नटं चारणं वा। "चारणास्तु कुशीलवा" इत्यमरः।

मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुत मानयज्ञः।
एतानि चत्वार्यभयङ्कराणि भयं प्रयच्छन्त्ययथाकृतानि॥

मीयतेऽनेनेति मानं कालः। तेन स्वस्वकाले कृतान्येतान्यभयङ्कराणि। अयथाकृतानि अकालकृतानि भयङ्कराणीत्यर्थः।

अगारदाही गरदः कुण्डाशी सोमविक्रयी।
पर्वकारश्च सूची च मित्रध्रुक् पारदारिकः॥

अमृते जारजः कुण्डस्तदन्नभक्षकः कुण्डाशी। पर्वकारः, शरकर्त्ता। सूची, सूचयति पैशुन्यमाचरति स तथा।

भ्रूणहा गुरुतल्पी च यश्च स्यात्पानपो द्विजः।
अतितीक्ष्णश्च काकश्च नास्तिको वेदनिन्दकः॥

"भ्रूणोऽर्भके स्त्रैणगर्भे" इत्यमरः। तं हन्ति स तथा। गुरुतल्पं गुरुपत्नी "तल्पं शय्याट्टदारेषु" इत्यमरः। साऽस्त्यस्य गम्यत्वेन स गुर्वङ्गनागामीत्यर्थः। काकः, इतस्ततो भोजनकर्त्ता।

स्रुवप्रग्रहणो व्रात्यः कीनाशश्चात्मपाक्यपि।
रक्षेत्युक्तश्च यो हिंस्यात्सर्वे ब्रह्महभिः समाः॥

स्रुवप्रग्रहणः, ग्रामयाजक आभिचारिको वा। व्रात्यः, जातकर्मादिसंस्काररहितः। कीनं पापं तेनाश्नाति स तथा। स्वयंहलधरो वा। आत्मपाकी, देवपित्रादीन् विहाय केवलमात्मार्थं पाककर्त्ता। आत्मवानपीति पाठे आत्मश्लाघी।

तृणोल्कया ज्ञायते जातरूपं वृत्तेन भद्रो व्यवहारेण साधुः।
शूरो भयेष्वर्थकृच्छ्रेषु धीरःकृच्छ्रास्वापत्सु सुहृदश्चारयश्च॥

तृणोल्कया, तार्णेन वह्निना। जातरूपं, सुवर्णम्।

जरा रूपं हरति हि धैर्यमाशा मृत्युः प्राणान् धर्मचर्यामसूया।
क्रोधः श्रियं शीलमनार्यसेवा ह्रियं कामः सर्वमेवाभिमानः॥

श्रीर्मङ्गलात्प्रभवति प्रागल्भ्यात्सम्प्रवर्द्धते।
दाक्ष्यात्तु कुरुते मूलं संयमात्प्रतितिष्ठति॥

मङ्गलात्, पुण्यात्।

अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यं च दमः श्रुतं च।
पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता च॥

एतान् गुणांस्तात महानुभावानेको गुणः संश्रयते प्रसह्य ।
राजा यदा संश्रयते मनुष्यं सर्वान् गुणानेष गुणो विभाति ॥
अष्टौ नृपेमानि मनुष्यलोके स्वर्गस्य लोकस्य निदर्शनानि।
चत्वार्येषामन्ववेतानि सद्भिश्चत्वारि चैषामनुयान्ति सन्तः॥

निदर्शनानि, नितरां दृश्यते यैस्तानि । यथा—

यज्ञो दानमध्ययनं तपश्च चत्वार्येतान्यन्ववेतानि सद्भिः ।
दमः सत्यमार्जवमानृशंस्यं चत्वार्येतान्यनुयान्ति सन्तः ॥

एतानि चत्वारि सद्भिः सत्सङ्गत्या अन्ववेतानि प्राप्तानि । दमादीनि तु चत्वारि अनु लक्षीकृत्य सन्तः यान्ति तत्प्राप्त्यर्थं यतन्ते यत एतैर्विना सत्त्वमेव न भवति ।

इज्याध्ययनदानानि तपः सत्यं क्षमा घृणा ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥
तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरस्तु चतुर्वर्गो नामहात्मसु तिष्ठति ॥
न सा सभा यत्र वसन्ति वृद्धा न ते वृद्धा ये न वदन्ति धर्मम्।
नासौ धर्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनाभ्युपेतम्॥
सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम् ।
शौर्यं च चित्रभाष्यं च दश संसर्गयोनयः ॥

रूपं, शरीरसौन्दर्यम् उज्ज्वलवेषता च । विद्या, अत्युत्कटा वेदशास्त्रादिः सभाचातुर्यादिश्च । कौल्यं, महाकुलप्रसूतत्वम् । चित्रभाष्यं, विचित्रं भाषणम् । संसर्गयोनयः, सेवादिसंसर्गस्य कारणानि ।

पापं कुर्वन् पापकीर्त्तिः पापमेवाश्नुते फलम् ।
पुण्यं कुर्वन्पुण्यकीर्त्तिः पुण्यमत्यन्तमश्नुते ॥
तस्मात्पापं न कुर्वीत पुरुषः शंसितव्रतः ।

पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः ।
नष्टप्रज्ञः पापमेव नित्यमारभते नरः ॥
पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः ।
वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ॥
पुण्यं कुर्वन् पुण्यकीर्त्तिः पुण्यं स्थानं स्म गच्छति ।
तस्मात्पुण्यं निषेवेत पुरुषः सुसमाहितः ॥
असूयको दन्दशूको निष्ठुरो वैरकृच्छठः ।
स कृच्छ्रं महदाप्नोति न चिरात्पापमाचरन् ॥
अनसूयुः कृतप्रज्ञः शोभनान्याचरन्सदा ।
न कृच्छ्रं महदाप्नोति सर्वत्र च विरोचते ॥
प्रज्ञामेवागमयति यः प्राज्ञेभ्यः स पण्डितः ।
प्राज्ञो ह्यवाप्य धर्मार्थौ शक्नोति सुखमेधितुम् ॥
दिवसेनैव तत्कुर्यात् येन रात्रौ सुखं वसेत् ।
अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ।
यावज्जीवेन तत्कुर्याद्येनामुत्र सुखं वसेत् ॥
जीर्णमन्नं प्रशंसन्ति भार्यां च गतयौवनाम् ।
शूरं विजितसङ्ग्रामं गतपारं तपस्विनम् ॥

भार्यामिति यौवनेऽप्यस्या धर्मच्युतिर्न जातेति गतयौवनां सतीं प्रशंसन्ति स्तुवन्ति न तु यौवनवतीं, यौवने धर्मक्षतेः सम्भावितत्वादितिभावः । गतपारं, तपस्याया गतपारम् । तपस्यामध्ये ऐहिकसिद्धीनां विघ्नभूतानां सम्भावितत्वात् ।

धनेनाधर्मलब्धेन यच्छिद्रमपिधीयते ।
असंवृतं तद्भवति ततोऽन्यदवदीर्यते ॥
गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।

अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥
ऋषीणां च नदीनां च कुलानां च महात्मनाम् ।
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥
द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्जवी ।
क्षत्रियः शीलभाग्राजंश्चिरं पालयते महीम् ॥
सुवर्णपुष्पं पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥

बुद्धिश्रेष्ठानीत्यादि। कर्माणि बुद्धिमात्रेण राजसेवादायीनि मन्त्रित्वादीनि श्रेष्ठानि। बाहुबलेन तादृशानि धनुर्द्धरत्वादीनि मध्यानि। जाङ्घिकत्वादीनि जघन्यानि अधमानि। भारवाहित्वादीन्यत्यधमानीत्यर्थः।

आपद्धर्मे महाभारते,

वाह्यश्चेद्विजिगीषुः स्याद्धर्मार्थकुशलः शुचिः ।
जवेन सन्धिं कुर्वीत पूर्वान् पूर्वान् विमोचयन् ॥
यो धर्मविजिगीषुः स्याद्बलवान् पापनिश्चयः ।
आत्मनः सन्निरोधेन सन्धिं तेनापि रोचयेत् ॥
अपास्य राजधानीं वा तरेद्द्रव्येण वाऽऽपदम् ।
तद्भावयुक्तो द्रव्याणि जीवन्पुनरुपार्जयेत् ॥
तद्भावो राजभावः ।
यास्तु कोशबलत्यागाच्छक्यास्तरितुमापदः ।
कस्तत्राधिकमात्मानं सन्त्यजेदर्थधर्मवित् ॥
न त्वेवात्मा प्रदातव्यः शक्ये सति कथञ्चन ।
तथा,

अकाले कृत्यमारब्धं कर्तुर्नार्थाय कल्पते ।
तदेव काल आरब्धं महतेऽर्थाय कल्पते ॥
तथा,
न च कश्चित्कृते कार्ये कर्तारं समवेक्षते ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥
कारयेत्, कुर्यात् ।
तथा,
कारणात्प्रियतामेति द्वेष्यो भवति कारणात् ।
अर्थार्थी जीवलोकोऽयं न कश्चित्कस्य चित्प्रियः ॥
आत्मार्थे सन्ततिस्त्याज्या राज्यं रत्नं धनानि च ।
अपि सर्वस्वमुत्सृज्य रक्षेदात्मानमात्मना ॥
तथा,
ब्राह्मणा वै परं श्रेयो दिवि चेह च भारत ।
एते धर्मस्य वेत्तारः कृतज्ञाः सततं प्रभो ॥
पूजिताः शुभकर्त्तारः पूजयेत्तान्नराधिपः ।
तथा,
तत्रैव ब्रह्मदत्तोपाख्याने पूजन्या वाक्येषु ।
सान्त्वे प्रयुक्ते सततं कृतवैरे न विश्वसेत् ।
क्षिप्रं स वध्यते मूढो न हि वैरं प्रशाम्यति ॥
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नमपि मूलं निकृन्तति ॥
कामं विश्वासयेदन्यान् परेषां च न विश्वसेत् ।
तथा,
नास्ति वैरमतिक्रान्तं सान्त्वितोऽस्मीति नाश्वसेत् ।
विश्वासाद्बध्यते लोके तस्माच्छ्रेयोऽप्यदर्शनम् ॥
तरसा ये न शक्यन्ते शस्त्रैः सुनिशितैरपि ।

साम्ना तेऽपि निगृह्यन्ते गजा इव करेणुभिः ॥
तथा,
कृतवैरे न विश्वासः कार्यस्त्विह सुहृद्यपि ।
छन्नं सन्तिष्ठते वैरं गूढोऽग्निरिव सागरे ॥
न हि वैराग्निरुद्भूतः कर्म चाप्यपराधजम् ।
शाम्यत्यदग्ध्वा नृपते विना ह्येकतरक्षयात् ॥
तथा,
सदा न विश्वसेद्राजा पापं कृत्वेह कस्य चित् ।
अपकृत्य परेषां हि विश्वासाद्दुःखमश्नुते ॥
दैवं पुरुषकारश्च स्थितावन्योन्यसंश्रयात् ।
उदाराणां तु सत्कर्म दैवं क्लीवा उपासते ॥
दत्त्वाभयं यः स्वयमेव राजा न तत्प्रमाणं कुरुतेऽर्थलोभात् ।
सर्वस्य लोकादुपलभ्य पापं सोऽधर्मबुद्धिर्निरयं प्रयाति ॥
दत्त्वाऽभयं स्वयं राजा प्रमाणं कुरुते यदि ।
स सर्वसुखकृज्ज्ञेयः प्रजा धर्मेण पालयन् ॥
माता पिता गुरुर्गोप्ता वन्हिर्वैश्रवणो यमः ।
सप्त राज्ञो गुणानेतान्मनुराह प्रजापतिः ॥
पिता हि राजा राष्ट्रस्य प्रजानां योऽनुकम्पनः ।
तस्मिन् मिथ्याविनीतो हि तिर्यग्गच्छति मानवः ॥
यस्तु रञ्जयते राजा पौरजानपदान् गुणैः ।
न तस्य भ्रंशते राज्यं स्वयं धर्मानुपालनात् ॥
नित्योद्विग्नाः प्रजा यस्य करभारप्रपीडिताः ।
अनर्थैर्विप्रलुप्यन्ते स गच्छति पराभवम् ॥
प्रजा यस्य विवर्द्धन्ते सरसीव महोत्पलम् ।
स सर्वफलभाग्राजा स्वर्गलोके महीयते ॥

बलिना विग्रहो राजन्न कदाचित्प्रशस्यते ।
बलिना विग्रहो यस्य कुतो राज्यं कुतः सुखम् ॥
तथा,
वाङ्मात्रेण विनीतः स्याद्धृदयेन यथा क्षुरः ।
श्लक्ष्णपूर्वाभिभाषी च कामक्रोधौ च वर्जयेत् ॥
सपत्नसंहिते कार्ये कृत्वा सन्धिं न विश्वसेत् ।
अपक्रामेत्ततः शीघ्रं कृतकार्यो विचक्षणः ॥
शत्रुं च मित्ररूपेण सान्त्वेनैवाभिसान्त्वयेत् ।
नित्यशश्चोद्विजेत्तस्माद्गृहात्सर्पयुतादिव ॥
यथाबुद्धिः परिभवेत्तमतीतेन सान्त्वयेत् ।
अनागतेन दुष्प्रज्ञं प्रत्युत्पन्नेन पण्डितम् ॥
अञ्जलिं शपथं सान्त्वं प्रणम्य शिरसा वदेत् ।
अश्रुप्रमार्जनं चैव कर्तव्यं भूतिमिच्छता ॥
वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः ।
प्राप्तकालं तु विज्ञाय भिन्द्याद्घटमिवाश्मनि ॥
तथा,
नास्मच्छिद्रं रिपुर्विद्याद्विद्याच्छिद्रं परस्य तु ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥
बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शरवच्च विनिष्पतेत् ॥
पानमक्षास्तथा नार्यो मृगया गीतवादिते ।
एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥
तथा,
देशकालौ समासाद्य विक्रमेत विचक्षणः ।
देशकालव्यतीतो हि विक्रमो निष्फलो भवेत् ॥
दण्डेनोपनतं शत्रुं यो राजा न नियच्छति ।

स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥
सुपुष्पितः स्यादफलः फलवान्स्याद्दुरारुहः ।
आमः स्यात्पक्वसङ्काशो न च शीर्येत कस्य चित् ॥
आशां कालवतीं कुर्यात् तां च विघ्नेन योजयेत् ।
विघ्नं निमित्ततो ब्रूयान्निमित्तं चापि हेतुतः ॥
भीतवत्संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्त्तव्यमभीतवत् ॥
योऽरिणा सह सन्धाय सुखं स्वपिति विश्वसन् ।
स वृक्षाग्रे प्रसुप्तो वा पतितः प्रतिबुध्यते ॥
वा शब्द इवार्थे ।
ये सपत्नाः सपत्नानां सर्वांस्तानुपसान्त्वयेत् ।
आत्मनश्चापि बोद्धव्याश्चारा विनिहिताः परैः ॥
चारस्त्वविदितः कार्य आत्मनोऽथ परस्य च ।
पाखण्डांस्तापसादींश्च परराष्ट्रे प्रवेशयेत् ॥
उद्यानेषु विहारेषु प्रपास्वावसथेषु च ।
पानागारेषु वेशेषु तीर्थेषु च सभासु च ॥
वेशेषु, वेश्याजनाश्रयेषु ।
विश्वासयित्वा तु परं तत्त्वभूतेन हेतुना ।
अथास्य प्रहरेत्काले किञ्चिद्विचलिते पदे ॥
अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितात् ।
भयं ह्यशङ्किताज्जातं समूलमपि कृन्तति ॥
अशङ्क्यं शङ्कानर्हम् ।
पुत्रो वा यदि वा भ्राता पिता वा यदि वा सुहृत् ।
अर्थस्य विघ्नं कुर्वाणा हन्तव्या भूतिमिच्छता ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।

उत्पथप्रतिपन्नस्य दण्डो भवति शासनम् ॥
तथा,
अमित्रं नैव मुञ्चेत वदन्तं करुणान्यपि ।
दुःखं तत्र न कर्त्तव्यं हन्यात्पूर्वापकारिणम् ॥
प्रहरिष्यन् प्रियं ब्रूयात्प्रहृत्यैव प्रियोत्तरम् ।
असिनापि शिरश्छित्त्वा शोचेत च रुदेत च ॥
निमन्त्रयीत सान्त्वेन सम्मानेन तितिक्षया ।
लोकाराधनमित्येतत्कर्त्तव्यं भूतिमिच्छता ॥
इत्येवमादीनि नीतिशास्त्राणि सर्वथा शृणुयादिति शिवम् ।
प्रत्याशं परिवर्द्धतेऽर्थिजनतादैन्यान्धकारापहे
श्रीमद्वीरमृगेन्द्रदानजलधिर्यद्वक्त्रचन्द्रोदये ।
राजादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते-
ग्रन्थेऽस्मिन् खलु राजनीतिविषयः पूर्त्तिं प्रकाशोऽगमत् ॥
इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजि-
तचरणकमल—
श्रीमन्महाराजाधिराजप्रतापरुद्रतनूज—
श्रीमन्मधुकरसाहसूनु—
श्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरी-
कविकासदिनकर—
श्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मज—
श्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीण—
जगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातु—
श्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे
राजनीतिप्रकाशः पूर्त्तिमगात् ।

---

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NOS. 221, 222, 223, 224, & 231.

# वीरमित्रोदयः ।

## राजनीतिप्रकाशः ।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

साहित्योपाध्यायविष्णुप्रसादशर्मणा

संशोधितः ।

# VÎRAMITRODAYA,

RAJNITI PRAKÂSÂ

BY

MAHÂMAHOPÂDHÂYA PAṆḌITA MITRA MIŜRA.

EDITED BY

Pandita Vishnu Prasâd.

VOL. VI.

FASCICULUS 1 TO 5.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.

AGENTS:-

OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO; BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

1916.

*Registered According to Act XXV of 1867.*

मोक्षावली । उत्पलदेवविरचिता ।
मराजविरचितवृत्तिसमेता (वेदान्तः) २

मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्तः ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्यया अवतरणिकया च सहितम् ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... २

(२५) गौडपचसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च गौडपत्राणि ... २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः ।

(२९) ... ...
...ष्णिकृतदी...

(३०) वीरमित्रोदयः । म... मिश्रविरचितः परिभाषा... शात्मकः । सापिण्ड्यदीपकश्च

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित–योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्मामृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्णे श्रीसुबोधिनीटिप्पण्योः–प्रकाशः गोस्वामि श्रीश्रीपुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

-य-

... ११

...धरभट्टाचार्यचक्रव-

। श्रीगङ्गेशोपाध्यायविरचित-

...त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरो-

मणिविरचितदीधित्या च गर्भिता। ४

(४५) शास्त्रदीपिका। श्रीपार्थसारथिमिश्र प्रणी-

ता। रामकृष्णविरचितयुक्तिस्नेहपूरण्या-

ख्यव्याख्यया सहिता तर्कपादः। ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहो-

पाध्याय-श्रीनागेशभट्टविरचिता।

श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विर-

चितकुञ्जिकाकलाटीकाद्वयसंवलिता। ८

(४७) व्याकरणसिद्धान्तसुधानिधिः।

पर्वतीय विश्वेश्वरसूरिविरचितः। ६

(४८) वीरमित्रोदयः। लक्षणप्रकाशः। महा

पाध्यायश्रीमित्रमिश्रविरचितः।

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्य

मिविरचितः। महेश्वरतीर्थकृतया...

महाख्यया टीकया समलंकृतः।

(५०) वीरमित्रोदयः। राजनीतिप्रकाशः।

महोपाध्यायश्रीमित्रमिश्रविरचितः।

(५१) पूर्वमीमांसा अधिकरणकौमुदी। ...

हामहोपाध्याय पं० रामकृष्णभट्ट...

विरचिता परिशिष्टाधिकरणनिरूप...

कं टिप्पण्या परिष्कृत।

(५२) प्रशस्तपाद भाष्यटीका संग्रहः।

पादरहस्यम्। श्रीशंकरमिश्रविरचि...

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी